दुष्कृतं रजस्तमसोरुत्कटतया प्रवर्त्तते, एवं कल्याणमिति वा पापकमिति वा, साध्विति वा असाध्विति वा इत्येतत्सत्त्वादीनां गुणानामुत्कर्षानुत्कर्षतया यथासम्भव मायोजनीयं । तथा सिद्धिरसिद्धिर्वा, तथा 'नरकः' पापकर्मणां यातनास्थानं, अनरकस्तिर्यङ्मनुष्यामराः, एतत्सर्वं सत्त्वादिगुणाधिष्ठिता भूतात्मिका प्रकृतिर्विधत्ते, लोकायतिकाभिप्रायेणापीहैव तथाविधसुखदुःखावस्थाने स्वर्गनरकाविति इत्येवमन्तशस्तृणमात्रमपि यत्कार्यं तद्भूतैरेव प्रधानरूपापन्नैः क्रियते । तदेवं सांख्याभिप्रायेणात्मनस्तृणकुब्जीकरणेऽप्य सामर्थ्यात्, लोकायतिकाभिप्रायेण त्वात्मन एवाभावात्, भूतान्येव सर्वकार्यकर्तृणीत्येवमभ्युपगमः । तानि च समुदायरूपापन्नानि नानास्वभावं कार्यं कुर्वन्ति । तं च तेषां भूतानां समवायं पृथग्भूतपदोद्देशेन जानीयात् । तथाहि—

**पुढवी एगे महब्भूते आऊ दुच्चे महब्भूते तेऊ तच्चे महब्भूते वाऊ चउत्थे महब्भूते आगासे पंचमे महब्भूते, इच्चेते पंच महब्भूया अणिम्मिया अणिम्माविया अकडा णो कित्तिमा नो कडगा अणादिया अणिहणा अवंझा अपुरोहिता सतंता सासता आयछट्ठा । पुण एगे एवमाहु—**

व्याख्या—पृथिव्येका काठिन्यलक्षणा महाभूतं, तथा 'आपो' द्रवलक्षणा महाभूतं, तथा 'तेज' उष्णोद्द्योत लक्षणं महाभूतं, वायु(र्ग)तिकम्पनलक्षणस्तथाऽवगाहदानलक्षणं सर्वद्रव्याधारभूतमाकाशमित्येवं पृथग्भूतो यः पदोद्देशस्तेन कायाऽऽकारतया यस्तेषां समवायः, स एकत्वेऽपि लक्ष्यते । न न्यूनानि नाप्यधिकानि विश्वव्यापितया महान्ति, त्रिकालसवनाद्भूतानि, एतान्येव क्रमेण व्यवस्थितानि, अपरेण कालेश्वरादिना केनचिदपि न निर्मितानि—अनिष्पादितानि,

तथा परेण अनिर्म्मापयितव्यानि, तथाऽकृतानि—न केनचित्तानि क्रियन्ते, अभ्रेन्द्रधनुर्वद्विश्रसापरिणामेन निष्पन्नत्वात्, तथा न घटवत्कृत्रिमाणि, कर्तृकरणव्यापारसाध्यानि न भवन्तीत्यर्थः, तथा परव्यापाराभावतया ' नो ' नैव कृतकानि, न अपेक्षितपरव्यापारस्वभावानि, विश्रसापरिणामेन निष्पन्नत्वात्कृतकव्यपदेशभाञ्जि न भवन्ति । तथा अनाद्यनिधनानि, अवन्ध्यानि—अवश्यकार्यकारीणि, तथा न विद्यते 'पुरोहितः' कार्यं प्रति प्रवर्त्तयिता येषां तान्यपुरोहितानि, तथा ' स्वतन्त्राणि ' स्वाधीनानि, तथा ' शाश्वतानि ' नित्यानि, तदेवम्भूतानि पञ्च महाभूतान्यात्मषष्ठानि ज्ञातव्यानि । एके पुनरेवमाहुः—

सतो णत्थि विणासो असतो णत्थि संभवो । एतावताव जीवकाए, एतावताव अत्थिकाए, एतावताव सव्वलोए, एतं मुहं लोगस्स करणयाए । अवि अंतसो तणमायमवि ।

व्याख्या—तथा साँख्याभिप्रायेण ' सतो ' विद्यमानस्य प्रधानादेर्नास्ति विनाशः[तथा] ' असतः ' शशविषाणादेर्नापि ' सम्भवः ' समुत्पत्तिरस्ति, अतः साँख्या आत्मनः कार्यकारित्वं न मन्यन्ते । यद्यात्मा क्रियायाः कर्ता स्यात्ततोऽसदुत्पादयति, अत आत्मा अकर्त्ता निर्गुण इति । ततः साँख्या एवं वदन्ति एतावानेव जीवकायो, यदुत—पञ्च महाभूतानि, तथा एतावानेव—भूतास्तित्वमात्र एवास्तिकायो, नापरः कश्चित्तीर्थिकाभिप्रेतः पदार्थोऽस्ति । एतावानेव सर्वलोकः, पञ्च महाभूतानि लोकनिष्पत्तौ ' मुख्यानि ' प्रधानकारणान्येतान्येव जानीहि । भूतान्येवान्तशस्तृणमात्रमपि कार्यं कुर्वन्ति, पञ्च महाभूतेभ्यः परस्य कस्याप्यभावादिति । अथ स चैवंवाद्येकत्रात्मनोऽकिंचित्करत्वादन्यत्र चात्मनोऽसत्त्वादसदनुष्ठानैरपि नात्मा पापकर्म-

निर्वच्यत इति दर्शयितुमाह—

से किणं किणावेमाणे, हणं घायमाणे, पयं पयावेमाणे, अवि अंतसो पुरिसमवि किणित्ता घा-[य]इत्ता इत्थंपि जाणाहि-णत्थित्थ दोसो, ते णो एवं विप्पडिवेदेंति, तंजहा—किरियाति वा जावऽणिरयेति वा । एवमेव ते विरूवरूवेहिं कम्मसमारंभेहिं विरूवरूवाइं कामभोगाइं समारभंति भोय-[यणाए]णे(?), एवामेव ते अणारिया विप्पडिवन्ना तं सद्दहमाणा तं पत्तियमाणा जाव इति। ते णो हवाए णो पाराए, अंतरा य कामभोगेसु विसन्ना, दोच्चे पुरिसजाए पंचमहब्भूतिएत्ति आहिते(सू०१०)॥

व्याख्या—' से 'त्ति यः कश्चित्पुरुषः क्रयार्थी ' क्रीणन् ' किञ्चित् [ वस्तु ] क्रयेण गृह्णंस्तथा पर क्रापयंस्तथा प्राणिनो ' घ्नन् ' हिंसंस्तथाऽपरै'र्घातयन्–व्यापादयन् , तथा पचन् पाचयन् , क्रीणतः क्रापयतो, घ्नतो घातयतस्तथा पचतः पाचयतश्चापरांस्तथाऽप्यन्तशः पुरुषमपि पञ्चेन्द्रियं विक्रीय घातयित्वा अपि पञ्चेन्द्रियघाते नास्ति दोषोऽत्रैवं ' जानीहि ' अवगच्छ । किं पुनरेकेन्द्रियवनस्पतिघात इत्यपि शब्दार्थः, तत्रैवंवादिनः सांख्या बार्हस्पत्या वा ' नो ' नैतद्वक्ष्यमाणं 'विप्रतिवेदयन्ति' जानन्ति, तद्यथा–क्रिया सावद्यानुष्ठानुरूपा, एवमक्रिया वा स्थानादिलक्षणा यावदेवमेव विरूपरूपै–रुचावचैर्नानाप्रकारैर्जलस्नानावगाहनादिकैस्तथा प्राण्युपमर्दकारिभिः कर्मसमारम्भैर्विरूपरूपान्–नानाप्रकारान् सुरापानमांसभक्षणागम्यगमनादिकान् कामभोगान् समारभन्ते स्वतः परांश्च प्रेरयन्ति–नास्त्यत्र दोष इत्येवं प्रतार्यासत्कार्यकरणाय प्रेरयन्ति,

एवं तेऽनार्या अनार्यकर्मकारित्वाद्विरुद्धं मार्गं विप्रतिपन्नाः 'तं सद्दहमाणा' तमात्मीयमेव कुमतं पञ्च महाभूतात्मकं श्रद्दधानास्तमेव च सत्यमित्येवं 'प्रतीयन्तः' प्रतिपद्यमानास्तमेव स्वपक्षं रोचयन्तस्तद्धर्मस्याऽऽख्यातारं प्रशंसयन्तः 'स्वाख्यातो धर्मो भवता, अस्माकमयं धर्मोऽत्यन्तमभिप्रेतः, सावद्यानुष्ठानेनाप्यधर्मो न भवतीत्यध्यवसायिनः स्त्रीकामेषु मूर्च्छिताः, इत्येवं पूर्ववन्नेयं, यावदन्तरे कामभोगेषु विषण्णाः ऐहिकामुष्मिकोभयकार्यभ्रष्टाः नात्म[नः] त्राणाय नापि परेषामिति। एवं द्वितीयः पुरुषजातः पञ्च महाभूताभ्युपगमिको व्याख्यात इति, साम्प्रतं तृतीयपुरुषं ईश्वरकारणिकमधिकृत्याऽऽह—

अहावरे तच्चे पुरिसजाए ईसरकारणिएत्ति आहिज्जति, इह खलु पाईणं वा ४ संतेगइया मणुस्सा भवंति अणुपुव्वेणं लोयं उववन्ना, तंजहा—आरिया वेगे, जाव तेसिं च णं महंते एगे राया भवति जाव सेणावतिपुत्ता, एतेसिं च णं एगतीए सड्ढी भवति। कामं तं समणा य माहणा य पहारिंसु गमणाए जाव जहा मए एस धम्मे सुअक्खाए सुपन्नत्ते भवति।

व्याख्या—तदेवमीश्वरकारणिक आत्माद्वैतवादी वा तृतीयः पुरुषजात आख्यायते। इह खलु पुरुषप्रस्तावे, खलु शब्दो वाक्यालङ्कारे, प्राच्यादिषु दिक्ष्वन्यतरस्यां दिशि व्यवस्थितः कश्चिदेवं ब्रूयात्, तद्यथा—राजानमुद्दिश्य तावद्यावत्स्वाख्यातः सुप्रज्ञप्तो धर्मो भवति इत्यादि सर्वं पूर्ववदवगन्तव्यं। अथ च ईश्वरप्रणीतं जगदिदं मन्यते स कस्यापि राज्ञः समीपमागत्य आत्माभिप्रेतं धर्मं प्ररूपयति—

इह खलु धम्मा पुरिसादिया पुरिसोत्तरा पुरिसप्पणीया पुरिससंभूया पुरिसपज्जोतिता पुरिसअभिसमन्नागता पुरिसमेव अभिभूय चिट्ठंति ।

व्याख्या—' इह ' संसारे, खल्विति वाक्यालङ्कारे, धर्माः-सचेतनाचेतनरूपाः पदार्थाः पुरुषादिकाः, पुरुष-ईश्वर आत्मा वा कारणमादिर्येषां ते पुरुषादिका ईश्वरकारणिका आत्मकारणिका वा, तथा पुरुषोत्तराः, तथा पुरुषेण प्रणीताः, तथा पुरुषसम्भूताः ' पुरुष(प्र)द्योतिताः ' पुरुषप्रकाशिताः, प्रदीपमणिसूर्यादिभिर्यथा घटपटादयः पदार्थाः प्रकाश्यन्ते तथा सर्वेऽपि पदार्थाः पुरुषेण-ईश्वरेण प्रकाशिताः, ते च धर्मा जीवानां जन्मजरामरणव्याधिरोगशोकसुखदुःखजीवनादिकाः अजीवधर्मास्तु मूर्त्तिमतां द्रव्याणां वर्णगन्धरसस्पर्शाः, अमूर्त्तिमतां च धर्माधर्माकाशानां गत्यादिका धर्माः, सर्वेऽपीश्वरकृताः । सर्वेऽपि पुरुषमेवाभिव्याप्य तिष्ठन्ति । अस्मिन्नर्थे दृष्टान्तमाह—

से जहानामए गंडे सिया सरीरे जाते सरीरे संवुड्ढे सरीरे अभिसमन्नागते सरीरमेव अभिभूय चिट्ठति, एवामेव धम्मा पुरिसादिया, जाव [पुरिसमेव] अभिभूय चिट्ठंति ।

व्याख्या—' से ' ति तच्छान्दार्थे । ' नाम ' इति सम्भावनायां । यथा नाम गण्डं ' स्या 'द्भवेत् । गण्डं रोगविशेषः । सम्भाव्यते प्राणिनां गण्डादिसमुद्भवः । तच्च शरीरे जातं, शरीरे वृद्धिमुपगतं, शरीरे अभिसमन्वागतं-शरीरं व्याप्य व्यवस्थितं, न तदवयवोऽपि शरीरात्पृथग्भूत इति । शरीरमभि[भूय-] व्याप्य (?) पीडयित्वा तिष्ठति, न शरीराद्बहिर्भवति,

यथा ततिपटकं शरीरैकदेशभूतं न युक्तिशतेनापि शरीरात्पृथग्दर्शयितुं शक्यते, एवमेव ये धर्माश्चेतनाचेतनरूपास्ते सर्वेऽपीश्वरकर्तृकाः, न ते ईश्वरात्पृथक्कर्तुं पार्यन्ते। पुनर्दृष्टान्तान्तरमाह—

से जहानामए अरई सिया सरीरे जाया सरीरे (अभि×)संवुड्ढा सरीरे अभिसमन्नागया सरीरमेव अभिभूय चिट्ठइ, एवामेव धम्मा[वि] पुरिसाइया जाव पुरिसमेवाभिभूय चिट्ठंति।

व्याख्या—तद्यथा नाम 'अरति'श्चित्तोद्वेगलक्षणा'स्याद्' भवेत्, सा च शरीरे जातेत्यादि गण्डवन्नेया, दार्ष्टान्तिकेऽप्येवमेव सर्वे धर्माः पुरुषप्रभवा इत्यादि पूर्ववन्नेयम्। पुनर्दृष्टान्तमाह—

से जहानामए वम्मिए सिया पुढविजाए पुढविसंवुड्ढे पुढविअभिसमन्नागए पुढविमेव अभिभूय चिट्ठइ, एवामेव धम्मा[वि] पुरिसाइया जाव [पुरिसमेव] अभिभूय चिट्ठंति।

व्याख्या—यथा 'वल्मीकं' पृथ्वीविकाररूपं स्यात्तच्च पृथिव्यां जातं पृथिवीसम्बद्धम् पृथिव्यभिसमन्वागतं, पृथिवीमेवाऽभिसम्भूय तिष्ठति, एवमेव यदेतच्चेतनाचेतनरूपं तत्सर्वमीश्वरकारणिकमात्मविवर्त्तरूपं वा, नात्मनः पृथग्भवितुमर्हति। पृथिव्या वल्मीकवत्। तथा—

× वृहद्वृत्त्यादर्शेषु नास्त्ययं शब्दः।

से जहानामए रुक्खे सिया पुढविजाए जाव पुढविसंवुड्ढे पुढविअभिसमन्नागए पुढविमेव अभिभूय चिट्ठइ, एवामेव धम्मा वि [ पुरिसादिया ]जाव[ पुरिसमेव ]अभिभूय चिट्ठंति । से जहानामए पुक्खरिणी सिया* पुढविजाता जाव पुढविमेव अभिभूय चिट्ठति, एवामेव धम्मा वि पुरिसादिया जाव पुरिसमेव अभिभूय चिट्ठंति, से जहानामए उदगपुक्खले सिया उदगजाए[ जाव ] उदगमेव अभिभूय चिट्ठति, एवामेव धम्मा[वि] पुरिसादिया जाव पुरिसमेव अभिभूय चिट्ठंति। से जहानामए उदगबुब्बुए सिया[ उदगजाए जाव ]उदगमेव( जाव× ) अभिभूय चिट्ठइ, एवामेव धम्मा वि पुरिसा[दिया] जाव पुरिसमेव अभिभूय चिट्ठंति ।

व्याख्या—एतत्सर्वं सुगमं, पूर्वान्नेतव्याः सर्वेऽपि दृष्टान्ताः । एतावता यदीश्वरकृतत्वेनाभ्युपगम्यते तत्सर्वं तथ्यं,

* " यथा नाम पुष्करिणीस्यात्–तडागरूपा भवेत् " इति वृहद्वृत्तौ । × नास्त्ययं शब्दोऽत्र वृहद्गुर्जरादर्शेषु ।

+ केवलं हालापुरीयप्रतिकृतावस्य सूत्रस्य व्याख्या ' से ' ( तद् ) यथा नाम ' उदकपुष्कलं ' प्रचुरपानीयं–उदकप्राचुर्यं, तच्च 'तद्धर्मत्वात्' तत्स्वभावत्वादुदकमेवाभिभूय तिष्ठति, एवं दार्ष्टान्तिकेऽपि" एवम्भूता स्थानान्तरे लिखिताऽस्ति, परं पाश्चात्येन लेखकेन केनापि लिखिता सम्भाव्यते, समस्तानां दृष्टान्तसूत्राणामेवम्भूताया व्याख्याया अनुपलम्भात् ।

अपरं सर्वं मिथ्येति तदाविर्भावयन्नाह—

**जंपि य इमं समणाणं निग्गंथाणं उद्दिट्ठं पणियं वियंजियं दुवालसंगं गणिपिडगं, तंजहा— आयारो सूयगडो जाव दिट्ठिवाओ, सव्वमेयं मिच्छा, ण एयं तहियं ण एयं अहातहियं**

व्याख्या—यदपि चेदं प्रत्यक्षासन्नभूतं 'श्रमणानां' साधूनां 'उद्दिष्टं' तदर्थं प्रणीतं, व्यञ्जितं–प्रकटीकृतम् । द्वादशाङ्गं गणिपिटकं, तद्यथा–आचाराङ्गं यावद्दृष्टिवादः, सर्वमेतन्मिथ्या, अनीश्वरप्रणीतत्वात्, यदीश्वरप्रणीतं तदेव सत्यमन्यत्सर्वं मिथ्यैव, एतदपि गणिपिटकं ईश्वरप्रणीतं न भवति, स्वेच्छया कल्पितं, तेन मिथ्या । अनया प्ररूपणया अभूतोद्भावनत्वमावेदितं । गणिपिटकं सर्वं दृष्टिवादपर्यन्तमतथ्यमपि तथ्यतया प्रतिपादयन्ति, अचौरे चौरत्ववत् असद्भूतार्थारोपण कुर्वन्ति जैनाः । एतावता ईश्वरप्रणीतमेव तथ्यं नापरं किमपि । अथ यत्सत्यतया मन्यन्ते तदेवाह—

**इमं सच्चं इमं तहितं इमं अहातहितं, [ते] एवं सन्नं कुव्वंति ते एवं सन्नं संठावेंति, ते एवं सन्नं सोवट्ठवयंति । तमेव ते तज्जाइयं दुक्खं णो तिउट्टंति ।**

व्याख्या—यदीश्वरप्रणीतं तदेव तथ्यं, तदेव यथातथ्यं, ते ईश्वरकारणिका एवं संज्ञां कुर्वन्ति, स्वदर्शनानुरागिणः संज्ञां संस्थापयन्ति । एवम्भूतां संज्ञां वक्ष्यमाणनीत्या निर्युक्तिकामपि सुष्ठु सामीप्येन तथाऽऽग्रहितया तदभिमुखा युक्तीः स्थापयन्ति, तत ईश्वरप्रणीतं सर्वं सचेतनाचेतनं जगदित्यादिप्ररूपणया तमेव तदभ्युपगमजातीयं दुःखहेतुत्वाद्दुःख–मष्टप्रकारं

कर्म न त्रोटयन्ति । अस्मिन्नर्थे दृष्टान्तमाह—

सउणीपंजरं जहा, ते णो विप्पडिवेदेंति तं जहा—किरियावाई वा जाव अणिरएति वा, एवामेव ते विरूवरूवेहिं कम्मसमारंभेहिं विरूवरूवाइं कामभोगाइं समारभंति भोयणाए, एवामेव ते अणारिया विप्पडिवन्ना एवं सद्दहमाणा जाव इति णो हव्वाए णो पाराए, अंतरा कामभोगेसु विसन्नेत्ति । तच्चे पुरिसजाते ईसरकारणिएत्ति आहिते ( सू० ११ ) ॥

व्याख्या—यथा ' शकुनिः ' पक्षिविशेषः पञ्जरं नातिवर्त्तते, पौनःपुन्येन भ्रान्त्वा तत्रैव वर्त्तते, एवं तेऽपि एवम्भूताभ्युपगमवादिनः कर्मबन्धनं ' नातिवर्त्तन्ते ' न वा त्रोटयन्ति । ते च स्वाग्रहाभिमानग्रहग्रस्ता नैवद्वक्ष्यमाणं ' विप्रतिवेदयन्ति ' न सम्यग् जानन्ति, तद्यथा—क्रियामक्रियां वा शोभनामशोभना वा, यावदयं [ अ ]नरक इत्येवं सदसद्विवेकरहितत्वान्नावधारयन्ति । एवमेव यथा कथञ्चित्ते विरूपरूपैः ' कर्मसमारम्भै'र्नानाप्रकारैः सावद्यानुष्ठानैर्द्रव्योपार्जनोपायभूतैर्द्रव्यमुपादाय विरूपरूपा—नुच्चावचान् कामभोगान् समाचरन्ति[ भोजनाय ], इत्येवं ते अनार्या निरुद्धं मार्गं प्रतिपन्ना न सम्यग्वादिनो भवन्ति । तदेवमीश्वरकर्तृत्वमात्माद्वैतपक्षश्च युक्तिभिर्विचार्यमाणो न कथञ्चित् घटां प्राञ्चति । अत्रैतन्मतनिरासे बहूक्तमस्ति ( तद् ) बृहट्टीकातोऽवधारणीयं, अत्र ग्रन्थविस्तरभयान्न लिखितमिति । एवं ते प्रतीयन्तः श्रद्धानाश्च ' नो हव्वाए नो पाराए अंतरा कामभोगेसु विसन्न 'त्ति इत्ययं तृतीयः पुरुषजात ईश्वरकारणिक इति । असमञ्जसमापितया त्यक्त्वा

पूर्वसंयोगमप्राप्तो विवक्षितस्थानमन्तराल एव कामभोगेषु मूर्छितो विषण्ण इत्यवगन्तव्यमिति तृतीयः पुरुषजातः समाप्तः ।

अथ चतुर्थं पुरुषजातमधिकृत्याह—

अहावरे चउत्थे पुरिसजाए नियतिवाइएत्ति आहिज्जाति—इह खलु पाईणं [ वा ४ तहेव जाव सेणावइपुत्ता वा, तेसिं च णं एगतीए सड्ढी भवइ, कामं तं समणा य माहणा य संपहारिंसु गमणाए जाव मए एस धम्मे सुअक्खाए सुपन्नत्ते भवइ ] ।

व्याख्या—अथ चतुर्थः पुरुषजातो नियतिवादिक आख्यायते, स तु नियतिवादी, ( एवमाह– ) नात्र कश्चित्कालेश्वरादिकं कारणं, नापि पुरुषकारः, तेषां नियतिबलादेवार्थसिद्धेर्नियतिरेव कारणं, उक्तञ्च–" प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः, सोऽवश्यं भवति नृणां शुभोऽशुभो वा। भूतानां महति कृतेऽपि हि यत्ने, नाभाव्यं भवति न भाविनोऽस्ति नाशः ॥ १ ॥" इत्यादि । " इह खलु पाईणं० " इत्याऽदिको ग्रन्थः प्राग्वन्नेतव्यो, यावदेष धर्मो नियतिवादरूपः स्वाख्यातः सुप्रज्ञप्तो भवतीति । स च नियतिवादी स्वाभ्युपगमं दर्शयितुमाह—

इह खलु दुवे पुरिसा भवंति—एगे पुरिसे किरियमातिक्खाति एगे पुरिसे णोकिरियमातिक्खाति, जे य पुरिसे किरियमाइक्खइ जे य पुरिसे नोकिरियमाइक्खइ, दोवि ते पुरिसा तुल्ला,

एगट्ठा, [ कारणमावन्ना ] ।

व्याख्या—इहाऽस्मिन् जगति, खलुशब्दो वाक्यालङ्कारे, द्वौ पुरुषौ भवतः, तत्रैकः क्रियामाख्याति, क्रिया हि देशाद्देशान्तरावाप्तिलक्षणा पुरुषस्य भवति, न कालेश्वरादिना प्रेरि(तस्य)ता( ? ) भवति, अपितु नियतिप्रेरितस्य, एवमक्रियाऽपि, यदिवा क्रियावादमक्रियावादं च समाश्रितौ तौ द्वावपि नियत्यधीनत्वात्तुल्यौ। यदि पुनस्तौ स्वतन्त्रौ भवतस्तदा क्रियाऽक्रियाभेदान्न तुल्यौ स्यातां इत्यत एकार्थौ, एककारणापन्नत्वादिति, नियतिवशेन तौ नियतिवादमनियतिवादं च समाश्रिताविति भावः। उपलक्षणार्थत्वाच्चास्यान्योऽपि यः कश्चित् कालेश्वरादिकं पक्षान्तरमाश्रयति सोऽपि नियतिप्रेरित एव द्रष्टव्य इति।

बाले पुण एवं विप्पडिवेदेति कारणमावन्ने—अहमंसि दुक्खामि वा सोयामि वा जूरामि वा तिप्पामि वा पीडामि वा परितप्पामि वा, अहमेयमकासि, परो वा जं दुक्खति वा सोयति वा जूरति वा तिप्पइ वा पीडइ वा परितप्पइ वा, परो एवमकासि, एवं से बाले सकारणं वा परकारणं वा एवं विप्पडिवेदेति कारणमावन्नो । मेहावी पुण एवं विप्पडिवेदेति कारणमावन्नो—अहमंसि दुक्खामि वा सोयामि वा जूरामि वा तिप्पामि वा पीडामि वा परितप्पामि वा, णो अहं एयम-

**कासि। परो वा जं दुक्खाति वा जाव परितप्पइ वा नो परो एवमकासि, एवं से मेहावी सकारणं वा परकारणं वा एवं विप्पडिवेदेति कारणमावन्ने।**

व्याख्या—नियतिवाद्येवं प्ररूपयति—यो 'बालो' मूर्खः स एवं जानाति यत्सुखदुःखाद्युत्पद्यते जन्तूनां तत्सर्वं कालेश्वरादिकृतं जायते। तद्यथा—योऽहमस्मि दुःखं—शारीरमानसमनुभवामि तथा 'सोयामि' इष्टानिष्टविप्रयोग[संप्रयोग]कृतं शोकमनुभवामि तथा 'तिप्पामि' शारीरबलात् क्षरामि तथा 'पीडामि' सबाह्याभ्यन्तरया पीडया पीडामनुभवामि। तथा 'परितप्पामि' परितापमनुभवामि 'जूरयामि' अनार्यकर्मणि प्रवृत्तमात्मानं गर्हामि, अनर्थावाप्तौ विसूरयामि। तदेवं यदहं सुखदुःखशोकादिकमनुभवामि तत्सर्वं मयैव परपीडयाऽर्जितं ममोदयमागतम्। तथा परोऽपि यत्सुखदुःखादिकमनुभवति मयि वाऽऽपादयति तत्स्वयमेव कृतमिति दर्शयति—'परो वे' त्यादि। तथा परोऽपि यन्मां दुःखयति शोचयति इत्यादि प्राग्वज्ज्ञेयं, तत्सर्वमहमकार्षम्। बालोऽज्ञ एवं [वि]प्रतिवेदयति—जानीते। स्वकारणं वा परकारणं वा सर्वं दुःखादि पुरुषाकारा[दि]कृतमिति जानीते, तदेवं नियतिवादी पुरुषाकारकारणवादिनो बालत्वमापाद्य स्वमतमाह 'मेहावी' त्यादि, 'मेधावी' नियतिवादपक्षाश्रयी एवं विप्रतिवेदयति—जानीते। 'कारणमापन्न' इति नियतिरेव कारणं सु[खदुः]खाद्यनुभवस्य। तद्यथा—योऽहमस्मि 'दुःखयामि' शोचयामि तथा 'तिप्पामि'त्ति क्षरामि पीडामनुभवामि परितापमनुभवामि, नाहमेवमकार्षं दुःखं, अपि तु नियतित एवैतन्मय्यागतं, न पुरुषाकारादिकृतं, यतो—नहि कस्यचिदात्मा अनिष्टो, येनानिष्टा

दुःखोत्पादिकाः क्रियाः समारभते । नियत्यैवात्मा अनिच्छन्नपि तत्कार्यते येन दुःखी भवेत् । कारणमापन्न इति परेऽप्येवमायोजनी(या)यम् । एवं स नियतिवादी दृष्टं पुरुषकारं परित्यज्य [अदृष्ट] नियतिपक्षाश्रयणेन महाऽविवेकी स्वकारणं परकारणं च दुःखशोकादिकमनुभवन्नियतिकृतमित्येवं विप्रतिवेदयति, नात्मना कृतं । कारणं चात्रैकस्या[सदनुष्ठानरतस्या]पि न दुःखमुत्पद्यते, परस्य तु मदनुष्ठायिनोऽपि तद्भवतीत्यतो नियतिरेव कर्त्रीति नियतिवादे स्थिते परमपि यत्किञ्चि[त्]त्सर्वं नियत्यधीनमिति दर्शयितुमाह—

से बेमि—पाइणं वा ४ जे तसथावरा पाणा ते एवं संघायमागच्छंति, ते एवं विपरियासमावज्जंति, ते एवं विवेगमागच्छंति, ते एवं विहाणमागच्छंति, ते एवं संगतियंति उवेहाए नो एवं विप्पडिवेदेंति । तं जहा—

व्याख्या—सोऽहं नियतिवादी 'ब्रवीमि' प्रतिपादयामि, ये केचन प्राच्यादिषु दिक्षु त्रसाः स्थावराश्च प्राणिनस्ते सर्वेऽप्येवं नियतित एवौदारिकादिशरीरसम्बन्धमागच्छन्ति, नान्येन केनचित्कर्मादिना शरीरं प्राप्यन्ते, तथा बाल-कुमार-यौवन-स्थविर-वृद्धावस्थादिकं विविधं पर्यायं नियतित एवानुभवन्ति, तथा नियतित एव 'विवेकं' शरीरात्पृथग्भावमनुभवन्ति, तथा नियतित एव विविधं 'विधानं' अवस्थाविशेषं कुब्जकाणखञ्जवामनकजरामरणं रोगशोकादिकं बीभत्समागच्छन्ति । तदेवं ते प्राणिनस्त्रसाः स्थावरा 'एवं' पूर्वोक्तया नीत्या सङ्गतिं यान्ति—नियतिमापन्नाः नानाविध-

विधानभाजो भवन्ति । तदुत्प्रेक्षया–नियतिवादोत्प्रेक्षया यत्किञ्चनकारितया परलोकभीरवो नैतद्विप्रतिवेदयन्ति–जानन्ति ।

तदेवाऽऽह—

**किरियाति वा जाव निरएत्ति वा अणिरएत्ति वा, एवं ते विरूवरूवेहिं कम्मसमारंभेहिं विरूवरूवाइं कामभोगाइं समारंभंति भोयणाए । एवामेव ते अणारिया विप्पडिवन्ना तं सद्दहमाणा जाव इति ते णो हव्वाए णो पाराए अंतरा कामभोगेसु विसन्ना । चउत्थे पुरिसजाते णियइवातिए त्ति आहि[ए]ज्जति ।**

व्याख्या—ते नियतिवादिनो नियतिपक्षमेवाश्रिताः नान्यत्किमपि विदन्ति–क्रियामक्रियां सिद्धिमसिद्धिं चेत्यादि न जानन्ति । नियतिमेवाश्रित्य तमेव निर्युक्तिकं नियतिवादं श्रद्दधानास्तमेव प्रतीयन्त इत्यादि तावज्ज्ञेयं यावदन्तरा कामभोगेषु विषण्णा आत्मानमन्यांश्चोद्धर्त्तुमशक्ताः ऐहिकामुष्मिकाद्भ्रष्टा मुक्तिमप्राप्ता अन्तराल एव संसारपङ्के मग्नाः [पद्मवर]पुण्डरीकोद्धरणासमर्थाः सन्त एवमेवावतिष्ठन्ते इति चतुर्थः पुरुषजातः समाप्त इति । एतावता चतुर्थः पुरुषो नियतिपक्षाश्रित उक्तः । उपसञ्जिघृक्षुराह—

**इच्चेते चत्तारि पुरिसजाता णाणापन्ना णाणाछंदा णाणासीला णाणादिट्ठी णाणारुई नाणा-**

रंभा नाणाज्झवसाणसंजुत्ता पहीणपुव्वसंजोगा आरियं मग्गमसंपत्ता इति ते णो हव्वाए णो पाराए, अंतरा कामभोगेसु विसन्ना ( सू० १२ ) ।

व्याख्या—'इत्येते' पूर्वोक्तास्तज्जीवतच्छरीर-पञ्चमहाभूते-श्वरकर्तृत्व-नियतिवाद-पक्षाश्रयिणश्चत्वारः पुरुषाः नानाप्रकारा'प्रज्ञा 'मतिर्येषां ते तथा 'नानाछन्दा' नानाऽभिप्रायाः 'नानाशीला' नानाऽऽचारा इत्यर्थः, नानारूपा 'दृष्टि'-र्दर्शनं येषां ते नानादृष्टयः। तथा नानारुचयः 'नानाऽऽरम्भाः' नानाप्रकारधर्म्मानुष्ठानाः नानाऽध्यवसायसंयुक्ताः-धर्मार्थमुद्यताः परित्यक्तपूर्वसंयोगाः-मातृपितृकलत्रपुत्रसम्बन्धाः आर्यमार्गमसम्प्राप्ताः, इति पूर्वोक्तया नीत्या ते चत्वारोऽपि नास्तिकादयः पुरुषाः 'नो हव्वाए'त्ति नैहिकसुखभाजो भवन्ति तथा 'नो पाराए'त्ति असम्प्राप्तत्वादार्यमार्गस्य सर्वोपाधिशुद्धस्य प्रगुणमोक्षपद्धतिरूपस्य न संसारपारगामिनो भवन्ति। न च परलोके शुभ[सुख]भाजो भवन्तीति, किन्त्वन्तराल एव-गृहवासार्यमार्गयोर्मध्यवर्त्तिन एव कामभोगेषु 'विषण्णाः' अध्युपपन्ना, दुष्पारपङ्कमग्ना इव करिणो विषीदन्तीति स्थितम्। उक्ताः परतीर्थिकाः, साम्प्रतं लोकोत्तर रूक्षवृत्ति भिक्षुं पञ्चमं पुरुषजातमधिकृत्याह—

से बेमि पाईणं वा० ४ संतेगतिया मणुस्सा भवंति, तं जहा-आरिया वेगे अणारिया वेगे उच्चागोया वेगे नीयागोया वेगे कायमंता वेगे हस्समंता वेगे सुवन्ना वेगे दुवन्ना वेगे सुरूवा वेगे दुरूवा

वेगे ×तेसिं च णं खेत्तवत्थूणि परिग्गहियाणि भवंति, तं जहा—अप्पयरा वा भुज्जयरा वा×, तेसिं च णं जणजाणवयाइं परिग्गहियाइं भवंति, तं जहा—अप्पयरा वा भुज्जयरा वा, तहप्पगारेहिं कुलेहिं आगम्म अभिभूय एगे भिक्खायरियाए समुट्ठिता संतो वि एगे णायओ [अणायओ] य उवगरणं च विप्पजहाय भिक्खायरियाए समुट्ठिता, असतो वा [ वि ] णायओ य अणायओ य उवगरणं च विप्पजहाय भिक्खायरियाए समुट्ठिता, [ जे ते सतो वा असतो वा णायओ य अणायओ य उवगरणं च विप्पजहाय भिक्खायरियाए समुट्ठिता ] पुव्वमेव तेहिं णायं भवति, तं जहा—

व्याख्या—यादृकामभोगेष्व(ना)सक्तः सन्नन्तरा नावसीदति पद्मवरपुण्डरीकोद्धरणाय च समर्थो भवति तदेतदहं ब्रवीमि—प्राचीनादिकामन्यतरां दिशमुद्दिश्य एके केचन मनुष्याः सन्ति, आर्याऽनार्याः उच्चैर्गोत्राः नीचैर्गोत्राः * 'कायवन्तः' प्रांशवः 'ह्रस्वाः' वामनाः * सुवर्णाः दुर्वर्णाः सुरूपाः कुरूपाः, एके केचन कर्मपरवशा भवन्ति, तेषां च क्षेत्राणि वास्तूनि—[ गृहाणि ]

× × नास्त्येतच्चिन्हान्तर्गतो मूलपाठः सवृत्तिकमुद्रितप्रतिषु, वृत्तिस्तु विहिता वृत्तिकृत्पूज्यैः ।

* एतच्चिन्हान्तर्गतो वृत्तिपाठः " कुरूपाः " इत्यतोऽनन्तरमस्ति सर्वास्वपि दीपिकाप्रतिषु, परं सूत्रानुसारतो युज्यतेऽत्रैवातोऽत्र नियोजितः ।

खातोच्छ्रिता[द्री]नि परिगृहीतानि भवन्ति, तान्येव विशिनष्टि–अल्पतराणि स्तोक[? प्रभूत ]तराणि वा भवन्ति, तेषामेव जन-[ जान ]पदाः परिगृहीता भवन्ति, तेऽप्यल्पतराः प्रभूततरा वा भवेयुस्तथा तेषु चाऽऽर्यादिविशेषणविशिष्टेषु तथाप्रकारेषु कुलेष्वागम्य एवम्भूतानि गृहाणि गत्वा, तथाप्रकारेषु कुलेषु वा आगम्य–जन्म लब्ध्वा अभिभूय च विषयकषायादीन् परीषहोपसर्गान् वा सम्यगुत्थानेनोत्थाय–प्रव्रज्यां गृहीत्वा एके केचन तथाविधसत्त्ववन्तो भिक्षाचर्यायां समुत्थितास्तथा 'सतो' विद्यमानानपि वा 'एके' केचन महासत्त्वोपेताः 'ज्ञातीन्' स्वज[नान् 'अज्ञातीन्' परिज ]नास्तथोपकरणं च–कामभोगाङ्गं धनधान्यहिरण्यादिकं विविधं प्रकर्षेण 'हित्वा' त्यक्त्वा भिक्षाचर्यायां समुत्थिताः । असतो वा ज्ञाती(नज्ञाती)-नुपकरणं च विप्रहाय भिक्षाचर्यायामेके केचनापगतस्वजनविभवाः समुत्थिताः, ये ते पूर्वोक्तविशेषणविशिष्टा भिक्षाचर्याया-मभ्युद्यताः 'पूर्वमेव' प्रव्रज्याग्रहणकाल एव तैरेतत् ज्ञातं भवति, तद्यथा—

इह खलु पुरिसे अन्नमन्नं ममट्ठाए एवं विप्पडिवेदेति, तं जहा–खेत्तं मे वत्थू मे हिरण्णं मे सुवन्नं मे धणं मे धन्नं मे कंसं मे दूसं मे, विपुलधणकणगरयणमणिमोत्तियसंखसिलप्पवाल-रत्तरयणसंतसारसावतेयं मे, सद्दा मे रूवा मे गंधा मे रसा मे फासा मे, एते खलु मम कामभोगा अहं खलु एतेसिं । से मेहावी पुव्वामेव अप्पणो एवं समभिजाणेज्जा, तं जहा–

व्याख्या—इह जगति, खलु–वाक्यालङ्कारे, अन्यदन्यद्वस्तूद्दिश्य ममैतद्भोगाय भविष्यतीत्येवमसौ प्रव्रज्यां प्रतिपन्नः

प्रविव्रजिषुर्वा ' प्रवेदयति ' जानाति, यथा-क्षेत्रं ' वास्तु ' गृहं हिरण्यं सुवर्णं धनं धान्यं काँस्यं दूष्यं [तथा] विपुलधनकनकरत्नमणिमौक्तिकशङ्खशिलाप्रवालरक्तरत्नादिकं सत्सारं ' स्वापतेयं ' द्रव्यजातं सर्वं मे, तत् ' मे ' ममोपभोगाय भविष्यति । तथा शब्दाः रूपाणि गन्धाः रसाः स्पर्शाः, एते सर्वे खलु मे कामभोगाय भविष्यन्ति, अहमप्येषां योगक्षेमार्थं प्रभविष्यामि, इत्येवं सम्प्रधार्य पूर्वमेवात्मानं विजानीया-देवं पर्यालोचयेत्तद्यथा—

इह खलु मम अन्नयरे [ दुक्खे ] रोगातंके समुप्पज्जेज्जा अणिट्ठे अकंते अप्पिए असुभे अमणुन्ने अमणामे दुक्खे णो सुहे से हंता, भयंतारो ! कामभोगा ! इमं मम अन्नतरं दुक्खं रोगायंकं परियाइयह, अणिट्ठं अकंतं जाव दुक्खं णो सुहं, ताऽहं दुक्खामि वा सोयामि वा जूरामि वा तिप्पामि वा पीडामि वा परितप्पामि वा इमाओ मं अन्नयराओ दुखाओ रोगातंकाओ परिमोयह, अणिट्ठाओ जाव अमणामाओ दुक्खाओ, णो सुहाओ, एवं नो लद्धपुव्वं भवति ।

व्याख्या—' इह ' संसारे, खल्ववधारणे । ' इह ' मनुष्यभवे ममान्यतरद्दुःख-शिरोवेदनादिकं ' आतङ्को ' वा आशुजीवितव्यापहारी शूलादिकः समुत्पद्यते । कीदृशः ? अनिष्टः अकान्तः अप्रियः अशुभः अमनोज्ञः अवनामः दुःखः, दुःखहेतुत्वात् ' णो सुहे ' सुखलेशेनाप्यस्पृष्टः, एवंविधः आतङ्क आयाति तदा कामभोगान् प्रत्येवं वक्ति, यथा-' हंत ' इति खेदे, भयात्रातारो यूयं क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यादिकाः परिग्रहविशेषाः, तथा शब्दादयो वा विषयाः, हे भ[ग]वन्तः !

कामभोगाः ! यूयं मया पालिताः परिगृहीता[श्च], अतो यूयमपीदं दुःखं रोगातङ्कं ' परियाइयह 'त्ति विभागशः परिगृह्णीत यूयं, अत्यन्तपीडयोद्विग्नः पुनस्तदेव दुःखं रोगातङ्कं च विशेषणद्वारेणोच्चारयति-[अनिष्टं] अकान्तमप्रियमशुभ, यावदमनोज्ञं दुःखमेव, ततोऽशुभमित्येवम्भूतं ममोत्पन्नं, यूयं विभजत, अहमतीव ' दुःखामि ' दुःखित इत्यादि पूर्ववन्नेयं, इत्यतो [ऽमुष्मान्] मामन्यतराद्दुःखाद्रोगाद्वा प्रतिमोचयत । अनिष्टादित्यादि विशेषणानि पूर्ववद्व्याख्येयानि, प्रथमं प्रथमान्तानि, पुनर्द्वितीयान्तानि, साम्प्रतं पञ्चम्यन्तानि । एवं तेन दुःखोद्विग्नेन प्रतिपादितं पर नैतल्लब्धपूर्वं भवति, न हि ते क्षेत्रादयः परिग्रहविशेषाः नापि शब्दादयः कामभोगास्तं दुःखितं दुःखाद्विमोचयन्तीत्येतदेव लेशतो दर्शयति—

इह खलु कामभोगा नो ताणाए वा[ णो ]सरणाए वा, पुरिसे वा एगया पुव्विं कामभोगे विप्पजहति, कामभोगा वा एगया तं पुरिसं विप्पजहंति, अन्ने खलु कामभोगा अन्नो अहमंसि, से किमंग पुण वयं अन्नमन्नेहिं कामभोगेहिं मुच्छामो इति संखाए णं वयं च कामभोगे विप्पजहिस्सामो ।

व्याख्या—इह खल्विमे कामभोगा अत्यन्तमभ्यस्ता न ' तस्य ' दुःखितस्य त्राणाय शरणाय[ वा ] भवन्ति । सुलालितानामपि कामभोगानां पर्यवसानं दर्शयति—' पुरुषो वा ' प्राणी ' एकदा ' रोगोत्पत्तिकाले जराजीर्णकाले वा अन्यस्मिन्वा राजाद्युपद्रवे ' तान् ' कामभोगान् परित्यजति स वा प्राणी द्रव्याद्यभावे तैः कामभोगैस्त्यज्यते । स च प्राण्येवमवधारयति-इमे कामभोगा अन्ये तेभ्यश्चाहमन्यः, तदेवमेतेषु परभूतेषु किमिति वयं मूर्च्छां कुर्म्मः ? एवं केचन महापुरुषाः

'परिसंख्याय' ज्ञात्वा [ ये ] "कामभोगान् [ वयं ] 'विप्रजहिष्याम'स्त्यक्ष्यामः" इत्येवमध्यवसायिनो भवन्ति–ते महापुरुषा ज्ञेयाः । पुनरपरं वैराग्योत्पत्तिकारणमाह—

से मेहावी जाणेज्जा बाहिरंगमेयं, इणमेव उवणीयतरागं, तं जहा–माता मे पिता मे भाया मे भइणी मे भज्जा मे पुत्ता मे धूया मे पेसा मे नत्ता मे सुण्हा मे सुही मे [ पिया मे सहा मे ] सयणसंगंथसंथुया मे, एते खलु मम नायओ अहमवि एतेसिं । एवं से मेहावी पुव्वामेव अप्पणा एवं समभिजाणिज्जा ।

व्याख्या—एते खलु क्षेत्रवास्तुप्रभृतयः परिग्रहविशेषाः शब्दादयश्च विषयाः दुःखपरित्राणाय न भवन्तीत्युक्तं, तदेते बाह्या विद्यन्ते, परमेते मातापित्रादयो ज्ञातयः पूर्वापरसंस्तुता एते ममोपकाराय भविष्यन्तीत्यहमपि [ए]तेषां स्नानभोजनादिनोपकरिष्यामीत्येव स मेधावी पूर्वमेवात्मना एवं समभिजानीयादित्येवं पर्यालोचयेत्–कल्पितवानिति । एतदध्यवसायी चासौ स्यादिति दर्शयितुमाह—

इह खलु मम अन्नयरे दुक्खे रोगायंके समुप्पज्जेज्जा अणिट्ठे जाव दुक्खे, णो सुहे, से हंता भयंतारो य णायओ य इमं मम अन्नयरं दुक्खं रोगायंकं परियादियह, अणिट्ठं जाव णो सुहं,

ताऽहं दुखामि वा सोयामि वा जाव परितप्पामि वा, इमाओ मं अन्नयराओ [दुक्खाओ] रोगायंकाओ परिमोएह अणिट्ठाओ जाव णो सुहाओ, एवामेव नो लद्धपुव्वं भवइ । तेसिं वा वि भयंताराणं मम णाययाणं अन्नयरे दुक्खे रोगातंके समुप्पज्जेज्जा अणिट्ठे जाव णो सुहे, से हंता अहमेतेसिं भयंताराणं णाययाणं इमं अन्नयरं दुक्खं रोगातंकं परियाइयामि अणिट्ठं जाव णो सुहं, मा मे दुक्खंतु वा [ जाव मा मे परितप्पंतु वा ], इमाओ[णं] अन्नयराओ दुक्खाओ रोयातंकाओ परिमोएमि अणिट्ठाओ जाव णो सुहाओ । एवामेव नो लद्धपुव्वं भवति—अन्नस्स दुक्खं अन्नो नो परियादियाति अन्नेण क(डं)तं अन्नो नो पडिसंवेदेति, पत्तेयं जायति पत्तेयं मरति पत्तेयं चयति पत्तेयं उववज्जति पत्तेयं झंझा पत्तेयं सन्ना पत्तेयं मन्ना, एवं विन्नू वेदणा,, इति खलु नातिसंजोगा णो ताणाए वा सरणाए वा, पुरिसे य एगया पुव्विं नातिसंजोए विप्पजहाति नातिसंजोगा वा एगया पुव्विं पुरिसं विप्पजहंति। अन्ने खलु नातिसंजोगा अन्नो अहमंसि, किमंग पुण वयं अन्नमन्नेहिं णातिसंगेहिं मुच्छामो ?

द्वितीय श्रु० केनाप्यग्राह्यत्वं स्वकृतकर्मफलस्य ।

इति संखाए णं वयं नातिसंजोगं विप्पजहिस्सामो इति * ।

व्याख्या—' इह ' अस्मिन् भवे मम वर्त्तमानस्य अनिष्टादिविशेषणविशिष्टो दुःखातङ्कः समुत्पद्येत, ततोऽसौ तद्दुःखदुःखितो ज्ञातीनेवमभ्यर्थयेत्, तद्यथा-इदं ममान्यतरं दुःखातङ्कं समुत्पन्नं परिगृह्णीत यूयं, अहमनेन दुःखातङ्केन पीडितोऽस्मि, अतोऽमुष्मान्मां परिमोचयत यूयमिति। न चैतत्तेन दुःखितेन लब्धपूर्वं भवति, न हि ते ज्ञातयस्तं दुःखान्मोचयितुमलमिति भावः, नाप्यसौ तेषां दुःखमोचनायालमिति । ' तेसिं वा वि भयंताराणं मम नाययाण'मित्यादि सर्वं प्राग्वद्योजनीयं, यावदेवं नो लब्धपूर्वं भवतीति । किमित्येवं नो लब्धपूर्वं भवतीत्याह—' अन्नस्स दुक्खं नो अन्नो परियादियइ 'इत्यादि, सर्वस्यैव संसारोदरविवरवर्त्तिनोऽसुमतः स्वकृतकर्म्मोदयाद्यद्दुःखमुत्पद्यते तदन्यस्य दुःखमन्यो मातापित्रादिको न पर्यादत्ते तस्मात्पुत्रादेर्दुःखेनात्यन्तं पीडिताः स्वजना नापि तद्दुःखमात्मनि कर्त्तुमलं । किमित्येवमाशङ्क्याह—' अन्नेण कडं अन्नो नो पडिसंवेदेति ' अन्येन जन्तुना मोहवशगेन यत्कृतं कर्म तदन्यः प्राणी नो प्रतिसंवेदयति-नानुभवति, तदनुभवने ह्यकृतागमकृतनाशौ स्यातां, न चेमौ युक्तिसंगतौ, अतो यद्येन कृतं तत्स एवानुभवति, यस्मात्स्वकृतकर्मफलेश्वरा जन्तवस्तस्मात् ' पत्तेयं जायति पत्तेयं मरति ' इत्यादि, सर्वोऽपि प्राणी प्रत्येकं जायते प्रत्येकं च म्रियते, यतः-" एकस्य जन्ममरणे, गतयश्च शुभाशुभा भवावर्त्ते। तस्मादाकालिकहित-मेकेनैवात्मनः कार्यम् ॥ १ ॥ " इति । तथा

* नास्त्येष शब्दो मुद्रितासु सवृत्तिकप्रतिषु हर्षकुलीयदीपिकायामपि ।

प्रत्येकं [ क्षेत्रवास्तु ] हिरण्यसुवर्णादिकं परिग्रहं शब्दादींश्च विषयान्मातापितृपुत्रकलत्रादिकं [च] त्यजति। प्रत्येकमुपपद्यते, प्रत्येकं 'झंझा' कलहः कषायाश्च प्रत्येकं मन्द-तीव्रतया समुत्पद्यन्ते। तथा प्रत्येकं 'सञ्ज्ञा' अर्थपरिच्छित्तिः, साऽपि मन्दमन्दतरपटुपटुतरभेदात्प्रत्येकमुपजायते। सर्वज्ञादारतस्तरतमयोगेन मतेर्व्यवस्थितत्वात्। तथा प्रत्येकं 'मननं' पर्यालोचनं तथा +प्रत्येकमेव सुखदुःखानुभवः। उप[सं]जिघृक्षुराह-'इति खलु नातिसंजोगा नो ताणाए वा सरणाए वा' इति पूर्वोक्तप्रकारेण, यतो नान्येन कृतमन्यः प्रतिसंवेदयते प्रत्येकं[च]जातिजरामरणादिकं, ततः खल्वमी ज्ञातिसंयोगाः संसारेऽत्यन्तपीडितस्य तदुद्धरणे न त्राणाय नापि शरणाय। किमिति ? यतः पुरुष एकदा क्रोधोदयेन ज्ञातिसंयोगान् 'विप्रजहाति' त्यजति स्वजना वा तदनाचारदर्शनतस्तं पुरुषं त्यजन्ति। तदेवं व्यवस्थिते एवं भावयेत्-खल्वमी ज्ञातिसंयोगा मत्तो भिन्ना, एभ्यश्चाहमन्यः। ततः किमन्यै[रन्यै]र्ज्ञातिसंयोगैर्मूर्च्छां कुर्मः ? न तेषु मूर्च्छा क्रियमाणा न्याय्येत्येवं 'संख्याय' ज्ञात्वा वयमुत्पन्नवैराग्या ज्ञातिसंयोगांस्त्यक्ष्याम इत्येवं ये कृताध्यवसायिनस्ते 'भिक्षाः' पंडिताः, ते विदितवेद्या भवन्तीति। साम्प्रतमन्येन प्रकारेण वैराग्योत्पत्तिकारणमाह—

से मेहावी जाणिज्जा बाहिरगमेयं, इणमेव उवणीयतरागं, तंजहा—हत्था मे पाया मे बाहा मे ऊरू मे उदरं मे सीसं मे सीलं मे आऊ मे बलं मे वण्णो मे तया मे छाया मे सोयं मे चक्खू मे घाणं मे

+ "प्रत्येकमेव 'विष्णु'त्ति विद्वान्, तथा" इति वृहद्वृत्तौ।

जिब्भा मे फासा मे ममातिज्जति वयाओ पडिजूरति, तंजहा—आऊओ बलाओ वन्नाओ तयाओ छायाओ सोयाओ जाव फासाओ, सुसंधिता संधी विसंधी हवंति। वलि[य]तरंगे गाए भवति। किण्हा केसा पलिया भवंति। तंजहा—जंपि य इमं सरीरं उरालं आहारोवचियं, एयंपि य अणुपुव्वेणं विप्पजहियव्वं भविस्सति। एयं संखाए से भिक्खू भिक्खायरियाए समुट्ठिए दुहओ लोगं जाणेज्जा, [तंजहा—] जीवा चेव अजीवा चेव, तसा चेव थावरा चेव (सू. १३)।

व्याख्या—स मेधावी एतद्वक्ष्यमाणं जानीयात्, तद्यथा—बाह्यतरमेतज्ज्ञातिसम्बन्धनमिदं, इदमुपनीततर-मासन्नतरं, शरीरावयवानां आसन्नतरत्वात्। तद्यथा—हस्तौ मे पादौ मे पद्मगर्भसुकुमालौ, नान्यस्य कस्यापीदृशावित्यादि। शीर्षं मे उदरं मे शीलं मे आयुर्म्मे वर्णबलत्वचाछायाश्रोत्रचक्षुर्नासिकाजिह्वास्पर्शनेन्द्रियमित्याद्यंगोपाङ्गाः सर्वेऽपि सुन्दरतराः, इत्येवं 'ममाति' ममी करोति, यादृङ् मे न तादृगन्यस्येति भावः। एतच्च हस्तपादादिकं स्पर्शनेन्द्रियपर्यवसानं वयसः परिणामात्कालकृतावस्थाविशेषात् 'परिजूरइ'त्ति परिजीर्यते—जीर्णतां याति, प्रतिक्षणं विशरारुतां याति। तस्मिंश्च प्रतिक्षणं विशीर्यति शरीरे प्रतिसमयं प्राण्येतस्माद्धश्यते, तद्यथा—आयुषः पूर्वनिबद्धात्समयादिहान्या अपचीयते, आवीची-मरणेन प्रतिसमयं मरणाभ्युपगमात्। तथा बलादपचीयते, तथाहि—यौवनावस्थायाश्च्यवमाने शरीरके प्रतिक्षणं शिथिली-

भवत्सु सन्धिबन्धनेषु बलादस्य भ्रश्यते । तथा वर्णादिचश्छायातोऽपचीयते । अत्र सनत्कुमारचक्रिणो दृष्टान्तो वाच्यः । तथा जीर्यति शरीरे श्रोत्रादीन्द्रियाणि हीयन्ते । तथा च वयोहान्या ' सुमन्धितः ' सुबद्धः ' सन्धि ' जानुकूर्परादिको विसन्धिर्भवति-विग[लि]तबन्धनो जायते । तथा वलितरङ्गाकुलं सर्वतः शिरा( नाडी )जालवेष्टितमिदं वपुरुद्वेगकृद्भवति । तथा कृष्णाः केशाः वयोहान्या धवला जायन्ते । ततो वयःपरिणामे सन्मतिरेवं भावयेत्, तथाहि-यदपीदं शरीरं उदारशोभं विशिष्टाहारोपचितं एतदपि ममायश्यं प्रतिक्षणं विशीर्यमाणमायुषः क्षये विप्रहातव्यं भविष्यतीत्येतदवगम्य-संख्याय परित्यक्तसमस्तगृहप्रपञ्चो निष्किञ्चनतामुपगम्य संयमयात्रार्थं भिक्षाचर्यायां समुत्थितः सन् द्विधा लोकं जानीयात् । तदेव लोकद्वैविध्यं दर्शयति-' जीवा चेव अजीवा चेव, तसा चेव थावरा चेव ' तत्र जीवाः-प्राणधारणलक्षणास्तद्विपरीता अजीवा धर्मास्तिकायादयः, तत्र भिक्षोरहिंसाप्रसिद्धये जीवान् विभागेन दर्शयति-इह खलु जीवा अपि द्विधा-त्रसाः स्थावराश्च, तेऽपि सूक्ष्मबादरपर्याप्तापर्याप्तक्रमभेदेन बहुधा द्रष्टव्याः । एतेषु चोपरि बहुधा व्यापारः प्रवर्त्तते । अथ तदुपमर्दकव्यापारकर्तॄन् दर्शयितुमाह—

इह खलु गारत्था सारंभा सपरिग्गहा, संतेगतिया समणा माहणा वि सारंभा सपरिग्गहा, जे इमे तसा थावरा पाणा, ते सयं समारंभंति, अन्नेण वि समारंभावेंति, अन्नं पि समारंभंतं समणुजाणंति ।

व्याख्या—इह खलु संसारे गृहस्थाः ' सारम्भाः ' जीवोपमर्दकारिणो वर्त्तन्ते सपरिग्रहाश्च वर्त्तन्ते, न केवलं गृहस्था

एव, अन्येऽपि श्रमणाः शाक्यादयः ब्राह्मणाश्च पचनपाचनाद्यनुमतेः सारम्भाः सपरिग्रहाः एवंविधा एव-गृहिण एव, ततश्च ये इमे त्रसाः स्थावराश्च प्राणिनस्तान् स्वयं समारम्भन्ते, तदुपमर्दकं व्यापारं स्वत एव कुर्वन्तीत्यर्थः। तथा अन्यांश्च समारम्भयन्ति, समारम्भं कुर्वतश्चान्यान् समनुजानन्ति। तदेवं प्राणातिपातमुपदर्श्य परिग्रहं भोगाङ्गभूत दर्शयितुमाह—

इह खलु गारत्था सारंभा सपरिग्गहा, संतेगतिया समणा माहणा[वि]य सारंभा सपरिग्गहा य, जे इमे कामभोगा सचित्ता वा अचित्ता वा, ते सयं परिगिण्हंति, अन्नेण वि परिगिण्हाविंति, अन्नं पि परिगिण्हंतं समणुजाणंति।

व्याख्या—इह खलु जगति गृहस्थाः सारम्भाः सपरिग्रहाः, तथा श्रमणा ब्राह्मणा अपि केचन सारम्भाः सपरिग्रहाः, ते च किं कुर्वन्ति? ये इमे कामभोगाः सचित्ता अचित्ता वा भवेयुस्तदुपादानभूतांश्चार्थास्ते कामभोगार्थिनो गृहस्थादयः स्वत एव परिगृह्णन्ति, अन्येन च परिग्राहयन्ति, अपरं च परिगृह्णन्तं समनुजानते।

इह खलु गारत्था सारंभा सपरिग्गहा, संतेगतिया समणा माहणा वि सारंभा सपरिग्गहा, अहं खलु अणारंभे अपरिग्गहे, जे खलु गारत्था सारंभा सपरिग्गहा संतेगतिया समणा माहणा वि सारंभा सपरिग्गहा य, एतेसिं चेव निस्साए बंभचेरवासं वसिस्सामो, कस्स णं तं हेउं? जहा

पुव्वं तहा अवरं जहा अवरं तहा पुव्वं, अंजू एते अणुवरया अणुवट्ठिया पुणरावि तारिसगा चेव ।

व्याख्या—इह जगति विद्यन्ते गृहस्थास्तथाविधाः श्रमणा ब्राह्मणाश्च सारम्भाः सपरिग्रहाः, इत्येवं ज्ञात्वा स भिक्षुरेवमवधारयेत्—अहमेवात्र खल्वनारम्भोऽपरिग्रहश्च, ये चामी गृहस्थादयः सारम्भादिगुणयुक्तास्तदेतन्निश्रया—तदाश्रयेण 'ब्रह्मचर्यं' श्रामण्यमाचरिष्यामः, अनारम्भा अपरिग्रहाः सन्तो धर्माधारदेहप्रतिपालनार्थमाहारादिकृते सारम्भसपरिग्रहगृहस्थनिश्रया प्रव्रज्यां करिष्याम इति । ननु च यदि तन्निश्रया विहर्त्तव्यं किमर्थं पुनस्ते त्यज्यते ? इति जाताशङ्कः कश्चित्पृच्छति—'कस्य हेतोः' केन कारणेन तदेतद्गृहस्थश्रमणब्राह्मणत्यजनमभिहितमिति, आचार्योऽपि विदिताभिप्राय उत्तरं ददाति—"जहा पुव्वं तहा अवरं" यथा पूर्व—मादौ सारम्भपरिग्रहत्वं तेषां तथा 'पश्चादपि' सर्वकालमपि गृहस्थाः सारम्भादिदोषदुष्टाः, श्रमणाश्च केचन यथा 'पूर्वं' गृहस्थभावे सारम्भाः सपरिग्रहास्तथा '[अ]परस्मिन्' प्रव्रज्याकाले तथाविधा एव सारम्भाः सपरिग्रहाः प्रवर्त्तन्ते, तथा 'जहा अवरं तहा पुव्वं' यथा 'अपरं' अपरस्मिन् प्रव्रज्याप्रतिपत्तिकाले तथा पूर्वमपि गृहस्थभावादावपीति, यदि वा कस्य हेतोस्तद्गृहस्थाद्याश्रयणं क्रियते ? यतिनेत्याह—यथा 'पूर्वं' प्रव्रज्यारम्भकाले सर्वमेव भिक्षादिकं गृहस्थायत्तं वर्त्तते तथा पश्चादपि, अतः कथं नु नामानवद्या वृत्तिर्भविष्यतीत्यतः साधुभिरनारम्भैः सारम्भाश्रयणं विधेयम् । यथा चैते गृहस्थादयः सारम्भाः सपरिग्रहाश्च तथा प्रत्यक्षेणैवोपलभ्यन्त इति दर्शयितुमाह—'अंजू एते अणुवरया अणुवट्ठिया पुणरवि तारिसगा चेव' अंजू इति व्यक्तं—स्पष्टमेतदेते गृहस्थादयोऽथवा 'अंजू' इति प्रगुणेन न्यायेन सावद्यानुष्ठानेभ्य 'अनुपरता' अनिवृत्ताः परिग्रहारम्भाच्च सत्संयमा-

नुष्ठानेन वा 'अनुपस्थिताः' सम्यगुत्थानमकृतवन्तो येऽपि कथञ्चिद्धर्मकरणायोत्थितास्तेऽप्युद्दिष्टभोजित्वात्सावद्यानुष्ठानपरत्वाच्च गृहस्थकल्पा एवेति । [ साम्प्रतमुपसंहरति– ]

**जे खलु गारत्था सारंभा सपरिग्गहा, संतेगइया समणा माहणा वि सारंभा सपरिग्गहा, दुहतो पावाइं कुव्वंति, इति संखाए दोहि वि अंतेहिं आदिस्समाणो इति भिक्खू रीएज्जा ।**

व्याख्या—ये इमे गृहस्थादयस्ते द्विधाऽपि सारम्भसपरिग्रहत्वाभ्यामुभाभ्यामपि पापान्युपाददते, यदि वा रागद्वेषाभ्यां यदि वा गृहस्थप्रव्रज्यापर्यायाभ्या उभाभ्यां पापानि कुर्वत इत्येवं 'संख्याय' ज्ञात्वा द्वयोरप्यन्तयो[रारम्भपरिग्रहयो]रागद्वेषयोर्वा अदृश्यमानो भिक्षुरनवद्याहारभोजी सत्संयमानुष्ठाने 'रीयेत' प्रवर्त्तेत ।

**से बेमि– पाईणं वा ४ जाव एवं से परिन्नायकम्मे, एवं से वियय[ववेय]कम्मे । एवं से वियंतकरए भवतीति मक्खायं ( सू. १४ )**

व्याख्या—'से बेमि' तदहमधिकृतमेवार्थं विशेषिततरं सोपपत्तिकं ब्रवीमि—प्रज्ञापकापेक्षया प्रच्यादिकाया दिशोऽन्यतरस्याः समायातः–स भिक्षुर्द्वयोरप्यन्तयोरदृश्यमानतया सत्संयमे रीयमाणः सन्नेवमनन्तरोक्तेन प्रकारेण ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया च प्रत्याख्याय+ कर्म्मणामन्तकृद्भवति । अनेन प्रकारेण संसारस्याप्यन्तकृद्भवतीत्येतत्तीर्थ-

---

+ "परिज्ञातकर्मा भवति, पुनरपि 'एवमिति परिज्ञातकर्मत्वाद्व्यपेतकर्मा भवति–अपूर्वस्याबन्धको भवतीत्यर्थः, पुनरेवमित्य-

करगणधरैराख्यातमिति प्राणिवधप्रवृत्तस्य न कर्मापगमो भवति, यतस्तत्प्रवृत्तस्यात्मौपम्येन प्राणीनां पीडोत्पद्यते, तया च कर्मबन्धः, इत्येवं सर्वं मनस्याधायाह—

तत्थ खलु भगवया छज्जीवनिकाया हेऊ पन्नत्ता, तंजहा—पुढविका[ए]इया जाव तसका[ए]इया से जहा नामए ममं अस्सायं दंडेण वा अट्ठीण वा मुट्ठीण वा लेट्ठूण वा कवालेण वा आउडिज्जमाणस्स वा हम्ममाणस्स वा तज्जिज्जमाणस्स वा ताडिज्जमाणस्स वा परियाविज्जमाणस्स वा किलि-[किलामि]ज्ज माणस्स वा ×उद्दाविज्जमाणस्स वा जाव लोमुक्खणणमातमवि हिंसाकारगं दुःखं भयं पडिसंवेएमि, इच्चेवं जाणं सव्वे जीवा सव्वे भूया सव्वे पाणा सव्वे सत्ता दंडेण वा जाव कवालेण वा आउडिज्जमाणा + वा हम्ममाणा वा तज्जिज्जमाणा वा तालिज्जमाणा वा परिताविज्जमाणा वा किला-

बन्धकतया योगनिरोधोपायतः × × × विशेषेण " इति बृहद्वृत्तौ ।

× अर्थसङ्गत्या ' ओद्दविज्ज० ' इत्येवं पाठो युज्यत इत्येष ममाभिप्रायः ।

+ यद्यप्येतेषु सप्तस्वपि पदेषु ' माणाण वा ' इत्येवमेवोपलभ्यते पाठः सर्वास्वपि दीपिकाप्रतिषु. किन्तु मुद्रितासु सवृत्तिकप्रतिषु ' माणा वा ' इत्येवमस्ति, अर्थसङ्गत्या तु ' माणाण वा ' इत्येतदेव युक्तमाभाति ।

मिज्जमाणा वा उद्दविज्जमाणा वा जाव लोमुक्खणणमायमवि हिंसाकारगं दुक्खं भयं पडिसंवेदेंति, एवं नच्चा सव्वे पाणा न हंतव्वा न अज्जावेयव्वा न परिघेत्तव्वा न परियावेयव्वा न उवद्दवेयव्वा। से बेमि—

व्याख्या—'तत्रे'ति कर्मबन्धप्रस्तावे खलु भगवता षड्जीवनिकाया हेतुत्वेनोपन्यस्ताः, पृथिवीकायो यावत्त्रसकाय इति। तेषां च पीड्यमानानां यथा दुःखमुत्पद्यते तथा स्वसंवित्तिसिद्धेन दृष्टान्तेन दर्शयितुमाह–यथा नाम मम 'असातं' दुःखमुत्पद्यते तथा तेषामपीति। तद्यथा–दण्डेन अस्थ्ना मुष्टिना 'लेलुना' लोष्ठेन कपालेन 'आकोट्यमानस्य' सङ्कोच्यमानस्य हन्यमानस्य तर्ज्यमानस्य, ताड्यमानस्य कुड्यादावभिघातादिना, परिताप्यमानस्य तथा'ऽपद्राव्यमानस्य' मार्यमाणस्य यावल्लोमोत्खननमात्रमपि हिंसाकरं दुःखं भयं च यन्मयि क्रियते तत्सर्वमहं संवेदयामीत्येवं जानीहि। तथा सर्वे प्राणा जीवा भूतानि सत्त्वा, एतेषां दण्डादिनाऽऽकुट्यमानानां यावल्लोमोत्खननमात्रमपि दुःखं हिंसाकरं भयं चोत्पन्नं तेऽपि प्राणिनः सर्वेऽपि 'प्रतिसंवेदयन्ति' साक्षादनुभवन्तीत्येवमात्मोपमया पीड्यमानानां जन्तूनां यतो दुःखमुत्पद्यते, अतः सर्वेऽपि प्राणिनो न हन्तव्या न व्यापादयितव्या 'न आज्ञापयितव्या' न बलात्कारेण व्यापारे प्रयोक्तव्यास्तथा न परिग्राह्या न परितापयितव्याः नापद्रावयितव्याः। सोऽहं ब्रवीमि एतन्न स्वमनीषिकया, किन्तु सर्वतीर्थकराज्ञयेति[ दर्शयति ]—

जे[ य ]अतीया जे[ य ]पडुप्पन्ना जे[ य ]आगमिस्सा अरिहंता भगवंतो, ते सव्वे एवमाइक्खंति एवं भासंति एवं पन्नविंति एवं परूविंति–सव्वे पाणा जाव सव्वे सत्ता ण हंतव्वा जाव ण उवद्-

वेयवा, एस धम्मे धुवे णितिए सासए समेच्च लोगं खेयन्नेहिं पवेदिते ।

व्याख्या—' जे[य] अतीया ' इत्यादि सर्वं सुगमं । नवरमयं धर्मः प्राणिरक्षणलक्षणो ध्रुवो ' नित्यः ' अवश्यंभावी-शाश्वतः । इत्येष चाभिममेत्य-ज्ञानेनावलोक्य चतुर्दशरज्ज्वात्मक लोकं ' खेदज्ञै'स्तीर्थकृद्भिः प्रवेदितः । एवं ज्ञात्वा स भिक्षुर्विदितवेद्यो विरतः प्राणातिपाताद्यावत्परिग्रहादिति, एतदेव दर्शयितुमाह—

एवं से भिक्खू विरए पाणातिवायाओ जाव विरते परिग्गहाओ, नो खलु दंतपक्खालणेणं दंते पक्खालेज्जाणो अंजणेणं अंजेज्जा णो वमणं णो धूवणे णो तं परियाविएज्जा । से भिक्खू अकिरिए अलूसए अकोहे अमाणे अमाए अलोभे उवसंते परिनिव्वुडे, नो आसंसं पुरओ कुज्जा ।

व्याख्या—तथाऽपरिग्रहः साधुर्निष्किञ्चनः सन् नो दन्तप्रक्षालनेन दन्तान् प्रक्षालयेत्, नो अञ्जनं विभूषार्थमक्ष्णोर्दद्यात्, नो वमनविरेचनादिकाः क्रियाः कुर्यात्, न शरीरस्य वस्त्राणां वा धूपनं कुर्यात्, न कासाद्यपनयनार्थं धूमं योगवर्तिनिष्पादितमापिबेदिति । एवं गुणव्यवस्थितो भिक्षु'रक्रियः' सावद्यक्रियारहितः संवृतात्मकतया साम्परायिककर्माबन्धकः, कुत एवम्भूतो ? यतः प्राणिना'मलूषको'ऽहिंसकः, एवमक्रोधोऽमानोऽमायी अलोभः कपायोपशमाच्चोपशान्तः ' परिनिर्वृतः ' समाधिवान् । एवमैहिककामभोगेभ्यो निवृत्तः पारलौकिकेभ्योऽपि विरत इति दर्शयति—' नो आसंसं पुरओ कुज्जा 'नो नैवाशंसां-ममानेन तपसा जन्मान्तरे कामभोगावाप्तिर्भविष्यतीत्येवम्भूतामाशंसां न पुरतः कुर्यात् । इत्येतदेव दर्शयति—

इमेण मे दिट्ठेण वा सुएण वा मएण वा विन्नाएण वा इमेण वा सुचरियतवनियमबंभचेर-वासेणं इमेण वा जायामायावत्तिएणं धम्मेणं इओ चुए पिच्चा देवे सिया, कामभोगाण वसवत्ती सिद्धे वा अदुक्खमसुभे ।

व्याख्या—(+एतज्जन्मकृतस्य तपसः फलं आमर्षौषध्यादिलब्धिसम्प्राप्त्या दृष्टं ।) अनेन तपोनियमब्रह्मचर्यादि धर्मकरणीयेन इतो मृतो भवान्तरे देवो भूयासं एवंविधामाशंसां न करोति, अशेषकर्म्मवियुतो वा सिद्ध 'अदुःख अशुभ' शुभाशुभकर्म्मप्रकृत्यपेक्षया, एतावता मध्यस्थः स्यामहं इत्येवंविधाभाशंसां न करोति । तदकरणे कारणमाह—

एत्थ वि सिया एत्थ वि नो सिया । से भिक्खू सद्देहिं अमुच्छिए रूवेहिं* अमुच्छिए रसेहिं अमु-

---

+ एतस्मिन्नर्द्धचन्द्राकारचिन्हमध्यवर्त्तिपाठस्थाने निर्देक्ष्यमाणः पाठोऽस्ति बृहद्वृत्तौ–"इमेण मे–इत्यादि, अस्मिन्नेव जन्मन्य-मुना विशिष्टतपश्चरणफलेन दृष्टेनामर्षौषध्यादिना तथा पारलौकिकेन च श्रुतेनार्द्रकधम्मिल्लब्रह्मदत्तादीनां विशिष्टतपश्चरणफलेन, तथा 'मएण व' त्ति 'मन ज्ञाने' जातिस्मरणादिना ज्ञानेन तथाऽऽचार्यादेः सकाशाद्विज्ञातेन–अवगतेन ममापि विशिष्टं भविष्यती-त्येवं नाशंसां विदध्यात् ।"

* * यद्यप्येतच्चिन्हान्तर्गतः सूत्रपाठः सवृत्तिकासु मुद्रितप्रतिषु "गंधेहिं अमुच्छिए रसेहिं अमुच्छिए" इत्येवं व्यत्ययेनास्ति,

चिछए गंधेहिं अमुच्छिए* फासेहिं अमुच्छिए विरए कोहाओ माणाओ मायाओ लोभाओ पेज्जाओ दोसाओ कलहाओ अब्भक्खाणाओ पेसुन्नाओ परपरिवायाओ अरतीओ[ अराति ]रतीओ मायामोसाओ मिच्छादंसणसल्लाओ, इति से महतो आयाणाओ उवसंते उवट्ठिए पडिविरए से भिक्खू।

व्याख्या—अनेन विशिष्टतपसाऽपि स्यात् कदाचित् सिद्धिः कदाचिन्न स्यादपि । अतः आशंसां न कुर्यात् । तदेवमैहिकार्थमामुष्मिकार्थं च कीर्त्तिवर्णश्लोकाद्यर्थं च तपो न विधेयं—न कुर्यादिति। कथम्भूतो भिक्षुः ? शब्दे रूपे रसे गन्धे स्पर्शे अमूर्च्छितः । क्रोधमानमायालोभं यावन्मिथ्यादर्शनशल्यं, एवमष्टादश पापस्थानकेभ्यो विरतः । तथा स भिक्षुर्भवति यो महतः कर्मोपादानादुपशान्तः सन् संयमे चोपस्थितः सर्वपापेभ्यश्च विरतः प्रतिविरत इति। कर्म्मोपादानाद्विरमणं साक्षाद्दर्शयति—

जे इमे तसा थावरा पाणा भवंति ते णो सयं समारंभाति । नेवन्नेहिं समारंभावेंति । अन्ने समारंभंते वि न समणुज्जाणाति, इति से महतो आयाणाओ उवसंते उवट्ठिए पडिविरए [से भिक्खू]।

व्याख्या—इत्यादि सुगमम् । एवं महतः कर्मोपादानादुपशान्तः प्रतिविरतो भवति भिक्षुरिति । साम्प्रतं कामभोग-

---

पर दीपिकाप्रतिषु सर्वास्वप्येतत्क्रमेणैवास्ति, वृत्तिकारेणापि " एवं रूपरसगन्धस्पर्शेष्वपि वाच्यमित्य "नेन वाक्येनैतदेव क्रमः स्वीकृतोऽस्ति ।

निवृत्तिमधिकृत्याऽह—

जे इमे कामभोगा सचित्ता वा अचित्ता वा, ते णो सयं परिगिण्हति णो अन्नेणं परिगिह्णावेति अन्नं परिगिह्णंतं न समणुजाणइ, इति से महतो आयाणाओ उवसंते उवट्ठिए पडिविरते से भिक्खू।

व्याख्या—ये केचन काम(।)भोगाश्च ते सचित्ता वा अचित्ता वा भवेयुस्तांश्च न स्वतो गृह्णीयान्नाप्यन्येन ग्राहयेन्नाप्यपरं समनुजानीयादित्येवं कर्म्मोपादानाद्विरतो भिक्षुर्भवतीति।

जंपि य इमं संपराइयं कम्मं कज्जति, नो तं सयं करेति नेवन्नेणं कारवेति अन्नंपि करंतं नाणुजाणति, इति से महतो आदाणाओ उवसंते उवट्ठिए पडिविरते ( +भवति भिक्खू )।

व्याख्या—येन कर्म्मणा संसारे पर्यटनमनन्तशो जायते तत्साम्परायिकं कर्म्म, तच्च प्रद्वेषनिन्हवमात्सर्यान्तरायाशातनोपघातैर्बध्यते, तत्कर्म तत्कारणं वा न कृतकारितानुमतिभिः करोति स भिक्षुरभिधीयते। साम्प्रतं भिक्षाविशुद्धिमधिकृत्याऽह—

से भिक्खू जाणेज्जा असणं ४ वा अस्सिं ×पडियाए एगं साहम्मियं समुद्दिस्स पाणाइं भूताइं जीवाइं सत्ताइं समारंभं समुद्दिस्स कीतं पामिच्चं अच्छेज्जं अणिसिट्ठं अभिहडं आहट्टुद्देसियं तं चे-

---

+ नास्त्येतच्चिन्हान्तर्गतः शब्दः सवृत्तिकासु मुद्रितप्रतिषु।

× आहारदानप्रतिज्ञया यदिवाऽस्मिन् पर्याये—साधुपर्याये व्यवस्थितं साधुं साधर्मिकं समुद्दिश्य। इति टि० २।

तियं सिता, तं० नो सयं भुंजइ नेवन्नेणं भुंजावेति अन्नंपि भुंजंतं नो समणुजाणइ इति से महतो आयाणाओ उवसंते उवट्ठिए पडिविरते से भिक्खू ।

व्याख्या—सुगमम् । यो भिक्षुरेवम्भूतमाहारं +द्वाचत्वारिंशद्दोषदुष्टं स्वयं न गृह्णाति न ग्राहयति गृह्णन्तं न समनुजानाति स भवति भिक्षुरिति । स भिक्षुः पुनरेवं जानीयात्—

विज्जाति तेसिं परक्कमे जस्सट्ठाए चेइयं सिया, तं जहा—अप्पणो से पुत्ताणं धूयाणं सुण्हाणं धातीणं नातीणं राईणं दासाणं दासीणं कम्मकराणं कम्मकरीणं आदेसाणं पुढो पहेणाए सामासाए पातरासाए सन्निहिसंनिचए कज्जति इह मेगेसिं माणवाणं भोयणाए ।

व्याख्या—विद्यते 'तेषां' गृहस्थानां 'पराक्रमः' सामर्थ्य—आहारनिर्वर्त्तनं प्रत्याऽरम्भः, तेन च यदाहारजातं-

+" जानीयात् 'अस्सिं पडियाए' एतत्प्रतिज्ञया एक साधुसाधर्मिकं समुद्दिश्य कश्चित्प्रकृतिभद्रकः श्रावकः साध्वाहारदानार्थं प्राणिनः समारभ्य—प्राणिघातकमारम्भं कृत्वा सत्त्वान् समुद्दिश्य—तत्पीडा सम्यगुद्दिश्य क्रीतं 'प्रामित्य' उच्छिन्नक 'आच्छेद्यं' अन्यस्मादाच्छिद्य गृहीतं 'अनिसृष्टं' परेणाननुमतं 'अभ्याहृतं' साधुसम्मुखमानीतं 'आहृत्य' उपेत्य ज्ञात्वा साध्वर्थं कृतमुद्देशिकं, एवम्भूतमाहारं साधवे 'चेतित' दत्त स्यात्, साधुना वाऽकामेन गृहीतं स्यात्, तद्दोषदुष्टं ज्ञात्वा स्वयं न भुञ्जीत अन्यं न भोजयेत् न च भुञ्जानमन्यं समनुजानीयात्, एवं " इति हर्ष० ।

निर्वर्त्तितं ‘ यस्य चार्थाय ’ यत्कृते ‘ चेतितं ’ दत्तं, निष्पादितं स्याद्भवेत् । यत्कृते निष्पादितं तत्स्वनामग्राहमाह, तद्यथा ‘ आत्मनः ’ स्वनिमित्तमाहारादिपाकनिर्वर्त्तनं कृतमिति । तथा पुत्रा[द्य×]र्थं ‘ आदेशार्थं ’ प्राघूर्णकाद्यर्थं, तथा पृथक्-प्रहेणार्थं +विशिष्टाहारनिर्वर्त्तनं क्रियते, तथा ‘ श्यामा ’ रात्रिस्तस्यामशनं, तदर्थं यावत्प्रातराशः-प्रत्यूषस्येव भोजनं, तदर्थं सन्निधेः सञ्चयः, विशिष्टाहारसङ्ग्रहस्य सञ्चयः क्रियते । अनेन चैतत्प्रतिपादितं भवति-बालग्लानवृद्धादिनिमित्तं प्रत्यूषादिसमयेष्वपि भिक्षाटनं क्रियते, अतः सन्निधिसञ्चय इहैकेषां मानवानां भोजनार्थं भवति । तत्र भिक्षुरु-द्यतविहारी परकृतपरनिष्ठितमुद्गमोत्पादनैषणाशुद्धमाहारमाहरेत्, कथम्भूतमाहारं ? तदेवाह—

तत्थ भिक्खू परकडं परनिट्ठितमुग्गमुप्पायणेसणासुद्धं सत्थाईयं सत्थपरिणामितं अविहिंसितं एसितं वेसितं सामुदाणियं पत्तमसणं कारणट्ठा पमाणजुत्तं, अक्खो वंजणवणलेवणभूयं संजमजायामायावत्तियं बिलमिव पन्नगभूतेणं अप्पाणेणं आहारं आहारेज्जा, अन्नं अन्नकाले, पाणं पाणकाले, वत्थं वत्थकाले, लेणं लेणकाले, सयणं सयणकाले, से भिक्खू मायन्ने अन्नयरिं दिसं वा अणुदिसं वा पडिवन्ने धम्मं आइक्खे विभए किट्टे उवाट्ठिएसु वा अणुवाट्ठिएसु वा सुस्सूसमाणेसु पवेदए ।

व्याख्या—‘ सत्थाईयं ’ शस्त्रमग्न्यादिकं, तेनातीतं-प्रासुकीकृतं, शस्त्रपरिणामितमिति-शस्त्रेण स्वकायपरकायादिना

× आदिशब्दः प्रकारार्थत्वाद् दुहितृस्नुषाधात्र्याद्यर्थम् । + “ पहेणयं-भोजनोपायनमुत्सवश्चे”ति देशीनाममालावृत्तौ ।

निर्जीवीकृतं, वर्णगन्धरसादिभिश्च परिणामितं, हिंसां प्राप्तं हिंसितं, विरूपं हिंसितं विहिंसितं, न सम्यङ्निर्जीवीकृतमित्यर्थः, तत्प्रतिषेधादविहिंसितं निर्जीवमित्यर्थः । तदप्येषित–मन्वेषितं भिक्षाचर्याविधिना प्राप्तं 'वेसियं' वैषिकमिति केवलसाधुवेषावाप्तं+, तदपि 'सामुदानिकं' मधुकरवृत्त्याऽऽप्तं–सर्वत्र स्तोकं स्तोकं गृहीतं, तदपि गीतार्थेनोपात्तमानीतं तदपि–वेदनावैयावृत्त्यादिके कारणे सति, तदपि प्रमाणयुक्तं, नाऽतिमात्रं, तदपि न वर्णबलाद्यर्थं किन्तु यावन्मात्रेणाऽऽहारेण देहः क्रियासु वर्त्तते, यथाऽक्षस्योपाञ्जनं अभ्यङ्गो व्रणस्य 'लेपनं' प्र[व्रण]लेपस्तदुपमया आहारमाहरेत् । उक्तं च—

"अब्भंगेण व सगडं, न तरइ विगइं विणा उ जो साहू । सो रागदोसरहिओ, मत्ताएँ विहीइ तं सेवे ॥१॥×"

एतदेव दर्शयति–संयमयात्रायां मात्रा संयमयात्रा[मात्रा], यावत्याऽऽहारमात्रया संयमयात्रा प्रवर्त्तते । तथा बिलप्रवेशपन्नगभूतेनात्मना आहारमाहरेत्, यथा पन्नगो बिले प्रविशंस्तूर्णमेव प्रविशति एवं साधुनाप्याहारस्तत्स्वादमनास्वादयता शीघ्रं प्रवेशयितव्य इति । तदपि 'अन्न अन्नकाले' सूत्रार्थपौरुष्युत्तरका[लं]ले (?) भिक्षाकाले प्राप्ते, तथा पानकं पानककाले* तथा वस्त्रं वस्त्रकाले गृह्णीया–दुपभोगं वा कुर्यात् । तथा 'लयनं' गुहादिकमाश्रयस्तस्य वर्षास्ववश्यमुपादानमन्यदा त्वनियमः । तथा शय्यासंस्तारकः, स च शयनकाले । तत्राप्यगीतार्थानां प्रहरद्वयं निद्राविमोक्षो गीतार्थानान्तु

+ "न पुनर्जात्याद्याजीवनतो निमित्तादिना वोत्पादित"मिति वृहद्वृत्तौ ।

× अभ्यङ्गेनेव शकटं न शक्नोति विकृतिं विनैव यः साधुः । स रागद्वेषरहितो मात्रया विधिना तां सेवेत ॥ १ ॥

* "न तृषितो भुञ्जीत न बुभुक्षितः पानकं पिबेत् ।" इति हर्ष० ।

प्रहरमेकमिति। तथा स भिक्षुराहारोपधिशयनस्वाध्यायाध्ययनादीनां मात्रां जानातीति तद्विविज्ञः, अन्यतरां दिशमनुदिशं वा 'प्रतिपन्नः' समाश्रितो धर्ममाख्यापयेत्–प्रतिपादयेत्, यथेन [ साधुना गृहस्थेन वा ] विधेयं तद्यथायोगं विभजेत् धर्मफलानि च कीर्त्तयेत्। परहितार्थं प्रवृत्तेन साधुना सम्यगुपस्थितेषु वा [अनुपस्थितेषु] कौतुकादिप्रवृत्तेषु 'शुश्रूषमाणेषु' श्रोतुं प्रवृत्तेषु स्वपरहिताय 'प्रवेदयेत्' कथयेत्। यत्कथयेत्तद्दर्शयितुमाह—

**संतिविरतिं उवसमं निव्वाणं सोयवियं अज्जवियं मद्दवियं लाघवियं अणातिवातियं, सव्वेसिं पाणाणं, सव्वेसिं भूताणं जाव सव्वेसिं सत्ताणं अणुवीइ किट्टए धम्मं।**

व्याख्या—शान्ति–रुपशमः क्रोधजयः 'विरतिः' प्राणातिपातादिभ्यः शान्तिविरतिस्तां कथयेत। तथोपशमं इन्द्रियनोन्द्रियोपशमरूपं रागद्वेषाभावजनितं, तथा निर्वृतिं निर्वाणं, तथा 'शौचं' तदपि भावशौचं सर्वोपाधिविशुद्धं व्रतामालिन्यं 'अज्जवियं' आर्जवं मायारहितत्वं, तथा 'मार्दवं' मृदुभावः अकठोरत्वं सर्वत्र प्रश्रयत्वं विनयनम्रता, तथा 'लाघवियं' कर्मणां लाघवापादनं। साम्प्रतं सर्वशुभानुष्ठानाना मूलकारणमाह 'अतिपातः' प्राण्युपमर्दनं, तत्प्रतिषेधादनतिपातिकस्तं सर्वेषां प्राणिनां भूतानां यावत् सत्त्वाना धर्ममनुविचिन्त्य कथयेत्, सर्वप्राणिनां रक्षानिमित्तभूतं धर्म्मं कथयेत्।

**से भिक्खू धम्मं किट्टेमाणे णो अन्नस्स हेउं धम्ममाइक्खेज्जा, नो पाणस्स हेउं धम्ममाइक्खेज्जा,**

नो वत्थस्स हेउं धम्ममाइक्खेज्जा, नो लेणस्स हेउं [ धम्ममाइक्खेज्जा, ] नो सयणस्स हेउं [ धम्ममाइक्खेज्जा, ]नो अन्नेसिं विरूवरूवाणं कामभोगाणं हेउं धम्ममाइक्खेज्जा, अगिलाए धम्ममाइक्खेज्जा, नन्नत्थ कम्मनिज्जरट्ठयाए धम्माइक्खेज्जा ।

व्याख्या—स भिक्षुर्नान्नस्य हेतोर्ममायमीश्वरो धर्मकथाश्रवणेन विशिष्टाहारजातं दास्यतीत्येतन्निमित्तं न धर्ममाचक्षीत । तथा पानस्य वस्त्रलयनशयननिमित्तं न धर्ममाचक्षीत । अन्येषां वा 'विरूपरूपाणां' उच्चावचानां कार्याणां कामभोगानां वा निमित्तं न धर्ममाचक्षीत । तथा ग्लानिमनुपगच्छन् धर्ममाचक्षीत । कर्मनिर्जरायाश्चान्यत्र न धर्मं कथयेत्, अपरप्रयोजननिरपेक्ष एव धर्मं कथयेदिति । अथ धर्मकथनफलमुपदर्शयति—

इह खलु तस्स भिक्खुस्स अंतिए धम्मं सोच्चा निसम्म सम्मं उट्ठाणेणं उट्ठाय वीरा अस्सिं धम्मे समुट्ठिया ते एवं सव्वोवगता, ते एवं सव्वोवरता, ते एवं सव्वोवसंता, ते एवं सव्वत्ताई, परिनिव्वुडेत्ति बेमि ।

व्याख्या—इह खलु जगति तस्य भिक्षोर्गुणवतोऽन्तिके-समीपे धर्मं श्रुत्वा [निशम्य च] सम्यगुत्थानेनोत्थाय 'वीराः' कर्मविदारणसहिष्णवो ज्ञानदर्शनचारित्राख्ये मोक्षमार्गे प्राप्ताः सर्वपापस्थानेभ्यो निवृत्ताः सर्वत उपशान्ताः जितकषायतया

शीतलीभूताः, तथा त एवं ' सर्वात्मतया ' सर्वसामर्थ्येन सदनुष्ठाने उद्यमं कृतवन्तो, ये चैवम्भूतास्ते अशेषकर्म्मक्षयं कृत्वा परिनिर्वृत्ताः, अशेषकर्म्मक्षयं कृतवन्त इति । ब्रवीमीति पूर्ववत् । अथाध्ययनोपसंहारार्थमाह—

**एवं, से भिक्खू धम्मट्ठी धम्मविऊ नियागपडिवन्ने, से जहेयं बुइयं अदुवा पत्ते पउमवरपुंडरीयं अदुवा अपत्ते पउमवरपुंडरीयं । एवं से भिक्खू परिन्नायकम्मे परिन्नायसंगे परिन्नायगिहवासे उवसंते समिए सहिये सया जए, से एवं वयणिज्जे, तं जहा—**

व्याख्या—एवं स भिक्षुर्धर्म्मार्थी यथावस्थितं परमा[र्थतो ]र्थं(?) धर्म्मं सर्वोपाधिविशुद्धं जानातीति धर्म्मवित्, तथा ' नियागः ' संयमो विमोक्षो वा, तं प्रतिपन्नः-नियागप्रतिपन्नः, स चैवम्भूतः पञ्चमपुरुषजातः, तं चाऽऽश्रित्य तद्यथेदं प्राक् प्रदर्शितं, तत्सर्वमुक्तं, स च प्राप्तो वा स्यात् पद्मवरपौण्डरीकमनुग्राह्यं पुरुषविशेषं चक्रवर्त्यादिकं, तत्प्राप्तिश्च परमार्थतः केवलज्ञानावाप्तौ सत्यां भवति, साक्षाद्यथावस्थितवस्तुस्वरूपपरिछित्तेः, अप्राप्तो वा स्यान्मतिश्रुतावधिमनःपर्यायज्ञानैर्व्यस्तैः समस्तैर्वा समन्वितः । स चैवम्भूतो भिक्षुः परिज्ञातकर्म्मा( दिविशेषणविशिष्टो भवतीत्येतद्दर्शयितुमाह— ) स चैवम्भूतो भिक्षुः 'परिज्ञातकर्म्मा' परिज्ञातकर्म्मस्वरूपः, परिज्ञातसङ्गः, परिज्ञातगृहवासः, तथोपशान्तः, [ इन्द्रियनो ]-इन्द्रियोपशमात्तथा समितिभिः समितः, तथा सहितो ज्ञानादिभिः ' सदा यतः ' संयतः, एवंविधगुणकलापोपेत एतद्वचनीयः-स ईदृशः कथ्यते, ( तद्यथा- )

समणेति वा माहणेति वा खंतेति वा दंतेति वा गुत्तेति वा मुत्तेति वा इसीति वा मुणीति वा कतीति वा विदूति वा भिक्खूति वा लूहेति वा तीरट्ठेति वा चरणकरणपारविउत्ति बेमि [सूत्र १५]। बितियस्स [सुय]क्खंधस्स पोंडरीयं नाम पढमं अज्झयणं समत्तं ।

व्याख्या—स पूर्वोक्तगुणकलापोपेतः किंनामा कथ्यते ? श्रमणः तथा 'माहण'त्ति ब्राह्मणः, मा प्राणिनो व्यापादयेति माहनः ब्रह्मचारी वा ब्राह्मणः, क्षान्तः क्षमोपेतत्वात्, दान्तः इन्द्रिय[नोइन्द्रिय]दमनात्, तिसृभिर्गुप्तिभिर्गुप्तः, मुक्त इव मुक्तः, विशिष्टतपश्चरणो महर्षिः, मनुते जगतस्त्रिकालावस्थामिति मुनिः, कृतमस्यास्तीति 'कृती' पुण्यवान् परमार्थपण्डितो वा, तथा 'विद्वान्' सवि[सद्वि]द्योपेतः, तथा 'भिक्षु'र्निरवद्याहारतया भिक्षणशीलः, तथा अन्तप्रान्ताहारत्वेन रूक्षः, संसारतीरभूतो मोक्षस्तदर्थी, तथा चर्यत इति चरणं-मूलगुणाः, क्रियत इति करणं-उत्तरगुणास्तेषां 'पारं'तीरं पर्यन्तगमनं, तद्वेत्तीति करणचरणपारवित्। इतिशब्दःपरिसमाप्त्यर्थे, ब्रवीमीति तीर्थकरवचनात् सुधर्मस्वामी जम्बूस्वामिनमुद्दिश्यैवं भणतीति।

इति श्रीपरमसुविहितखरतरगच्छविभूषणपाठकप्रवरश्रीमत्साधुरङ्गगणिवरसन्दृब्धायां
श्रीमत्सूत्रकृताङ्गदीपिकायां समाप्तं द्वितीयश्रुतस्कन्धाध्ययनं प्रथमम् ॥

## ॥ अथ क्रियास्थानाख्यं द्वितीयमध्ययनम् ॥

साम्प्रतं द्वितीयश्रुतस्कन्धे द्वितीयं क्रियाध्ययनं प्रारभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तराध्ययने पुष्करिणी–पुण्डरीकदृष्टान्तेन तीर्थिकाः सम्यङ्मोक्षोपायाभावात्कर्म्मणां बन्धकाः प्रतिपादिताः सत्साधवश्च सम्यग्दर्शनादिमोक्षमार्ग्गप्रवृत्तत्वात् कर्म्मणां मोचकाः सदुपदेशदानतो परेषामपीति, तदिहापि यथा कर्म्म द्वादशभिः क्रियास्थानैर्बध्यते यथा च त्रयोदशेन मुच्यते तदेतत्पूर्वोक्तमेव बन्धमोक्षयोः प्रतिपादनं क्रियते, तथाहि—

**सुयं मे आउसंतेणं भगवया एवमक्खायं–इह खलु किरियाठाणे नामं अज्झयणे पन्नत्ते, तस्स णं अयमट्ठे ( पन्नत्ते– ) इह खलु संजूहेणं दुवे ठाणा एवमाहिज्जंति–धम्मे चेव अधम्मे चेव, उवसंते चेव अणुवसंते चेव।**

व्याख्या—सुधर्मस्वामी जम्बूस्वामिनमुद्दिश्येदमाह–श्रुतं मया आयुष्मता भगवतैवमाख्यातं–इह खलु क्रियास्थानं नामाध्ययनं भवति, तस्य चायमर्थः इह खलु 'संजूहेणं'ति सामान्येन संक्षेपेण च द्वे स्थाने भवतः। य एते क्रियावन्तस्ते सर्वेऽप्यनयोः स्थानयोरेवमाख्यायन्ते–धर्मे चैव अधर्म्मे चैव, इदमुक्तं भवति–धर्मस्थानमधर्मस्थानं च। कारणशुद्ध्या च कार्यशुद्धिर्भवतीत्याह–उपशान्तं यत्तद्धर्म्मस्थानं अनुपशान्तमधर्म्मस्थानं। लोकस्तु प्रायेणाधर्म्मप्रवृत्तो भवति, पश्चात्स-

दुपदेशयोग्याचार्यसंसर्गाद्धर्मस्थाने प्रवर्त्तते, अतः पूर्वमधर्मस्थानमधिकृत्याह—

तत्थ णं [ जे से ] पढमस्स ठाणस्स अधम्मपक्खस्स विभंगे, तस्स णं अयमट्ठे [ पण्णत्ते ]–इह खलु पाईणं वा ४ संतेगतिया मणुस्सा भवंति, [ तं जहा ]—

व्याख्या—तत्र प्रथमस्य अधर्मपक्षस्य 'विभंगो' विचारस्तस्यायमर्थ इति। 'इह खलु' इह अस्मिञ्जगति 'खलु' निश्चितं प्राच्यादिदिक्षु मध्ये अन्यतरस्यां दिशि 'सन्ति' विद्यन्ते एके केचन मनुष्यास्ते चैवम्भूता भवन्तीत्याह—

+आयरिया वेगे अणारिया वेगे, उच्चागोया वेगे णीयागोया वेगे, कायमंता वेगे हस्समंता वेगे, सुवन्ना वेगे दुव्वन्ना वेगे, सुरूवा वेगे दुरूवा वेगे, तेसिं च णं इमं एयारूवं दंडसमादाणं संपेहाए। तं जहा–नेरईएसु[वा]× तिरिक्खजोणीएसु माणुसेसु देवेसु जेयावन्ने तहप्पगारा पाणा विन्न[विन्नू] वेयणं वेयंति, तेसिं पि य णं इमाइं तेरस किरियाठाणाइं भवंतीतिमक्खायं, तं जहा–अट्ठादंडे १,

+ सर्वास्वपि दीपिकाप्रतिषु 'आयरिया' इति पाठो लेखकप्रमादज: सम्भाव्यते, मुद्रितासु सवृत्तिकप्रतिषु 'आरिया' इत्येवोपलभ्यते, योऽर्थदृष्ट्या युक्त आभाति। × मुद्रितासु सवृत्तिकप्रतिष्वेते चत्वारोऽपि पदा 'वा' शब्दान्ताः सन्ति, परं दीपिकाप्रतिषु नैवं एषोऽपि लेखकदोष एव सम्भाव्यते।

**अणट्ठादंडे २, हिंसादंडे ३, अकम्हादंडे ४, दिट्ठीविपरियासियादंडे ५, मोसवत्तिए ६, अदिन्नादाणवत्तिए ७, * अज्झत्थिए ८, माणवत्तिए ९, मित्तदोसवत्तिए १०, मायावत्तिए ११, लोभवत्तिए १२, इरियावहिए १३। [ सू० १ ]**

व्याख्या—एके आर्य्या एके अनार्य्याः भवन्ति, यावद्दूरूपाः सुरूपाश्चेति। तेषामार्य्यादीनामिदं—वक्ष्यमाणमेतद्रूपं 'दण्डः' पापोपादानसङ्कल्पस्तस्य 'समादानं' ग्रहणं 'संपेहाए'त्ति सम्प्रेक्ष्य, तच्चतुर्गतिकानामन्यतमस्य भवति, तद्यथा-नारकादिषु, ये चान्ये तथाप्रकारास्तद्भेदवर्त्तिनः सुवर्णदुर्वर्णादयः प्राणिनो विद्वांसो 'वेदना' ज्ञानं, तद्वेदयन्त्यनुभवन्ति, यदिवा सातासातरूपां वेदनामनुभवन्तीति, अत्र चत्वारो भङ्गास्तद्यथा-संज्ञिनो वेदनामनुभवन्ति विदन्ति च १, सिद्धास्तु विदन्ति नानुभवन्ति २, असंज्ञिनोऽनुभवन्ति न विदन्ति ३, अजीवास्तु न विदन्ति नानुभवन्ति ४। इह पुनः प्रथमतृतीयाभ्यामधिकारो, द्वितीयचतुर्थाववस्तुभूताविति। 'तेषां च' नारकतिर्यङ्मनुष्यदेवानां तथाविधज्ञानवतां 'इमानि' वक्ष्यमाणलक्षणानि त्रयोदश क्रियास्थानानि भवन्ति, एवमाख्यातं तीर्थकरगणधरादिभिरिति। कानि ? पुन-

---

* यद्यपि सटीकमुद्रितप्रतिष्वत्र परत्र च सर्वत्रापि 'अज्झत्थवत्तिए' इत्येकरूप एव पाठोऽस्ति, परं दीपिकाप्रतिषु समग्रास्वप्यत्र 'अज्झत्थिए' इत्येवमुपलभ्यते, वृत्तिकृताऽपि 'आत्मन्यध्यध्यात्मं-तत्र भव आध्यात्मिकः' इत्येवमर्थो विहित अतो दीपिकापाठः युक्त इत्याभाति।

स्त्वानीति दर्शयति–' तं जहे 'त्यादि, तद्यथा–' आत्मार्थाय ' स्वप्रयोजनकृते दण्डो–ऽर्थदण्डः–पापोपादानं १, तथाऽनर्थदण्ड इति निष्प्रयोजनमेव सावद्यक्रियाऽनुष्ठानमनर्थदण्डः २, तथा हिंसा–प्राण्युपमर्दरूपा, तया–दण्डो हिंसादण्डः ३, तथाऽकस्माद्दण्डः (?) अनुपयुक्तस्य [ दण्डः ] अकस्माद्दण्डः, अन्यस्य क्रिययाऽन्यस्य व्यापादनम् ४ । तथा दृष्टेर्विपर्यासो रज्ज्वामिव सर्पबुद्धिः, तया दण्डो दृष्टिविपर्यासदण्डस्तद्यथा–लेष्टुकाष्ठादिबुद्धया शराद्यभिघातेन चटकादिव्यापादनम् ५, तथा मृषावादप्रत्ययिकः, स च सद्भूतनिह्नवासद्भूतारोपणरूपः ६, तथा अदत्तस्य परकीयस्य ग्रहणं स्तैन्यं, तत्प्रत्ययिको दण्डः ७, तथाऽध्यात्मदण्डो–निर्निमित्तमेव दुर्मना उपहतमनःसंकल्पो हृदयेन दूयमानश्चिन्तासागरावगाढः संतिष्ठते ८, तथा जात्याद्यष्टमदस्थानोपहतमनाः परावहेलारूपस्तस्य मानप्रत्ययिको दण्डो भवति ९, तथा मित्राणामुपतापेन दोषो मित्रदोषस्तत्प्रत्ययिको[दण्डो] भवति १०, तथा ' माया ' परवञ्चनबुद्धिस्तया दण्डो माया[प्रत्ययिको] दण्डः ११, तथा लोभप्रत्ययिको–लोभनिमित्तो दण्ड इति १२, तथा पञ्चसमितित्रिगुप्तिभिरुपयुक्तस्येर्यापथप्रत्ययिकः सामान्येन कर्मबन्धो भवति १३, एतच्च त्रयोदशं क्रियास्थानमिति । अथानुक्रमेण क्रियास्थानानि व्याख्यानयति—

पढमे दंडसमादाणे अट्ठादंडवत्तिएत्ति आहिज्जइ, (+ तं जहा–) से जहा नामए केइ पुरिसे आयहेउं वा णाइहेउं वा अगारहेउं वा परिवारहेउं वा मित्तहेउं वा णागहेउं वा भूयहेउं वा

+ नास्ति बहुष्वादर्शेष्वयं पाठस्त्रयोदशस्वपि क्रियास्थानसूत्रेषु ।

जक्खहेउं वा तं दंडं तसथावरेहिं पाणेहिं सयमेव निसिरति अण्णेण[ वि ]निसिरावेति अन्नं पि निसिरंतं समणुजाणाति, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जाति, पढमे दंडसमादाणे अट्ठादंडवत्तिए आहिए ॥ [ सू० २ ]

व्याख्या—यत्प्रथममुपात्तं दण्डसमादानमर्थाय दण्ड इत्येवमाख्यायते। तद्यथा नाम कश्चित्पुरुषः, पुरुषग्रहणेन सर्वोऽपि चातुर्गतिकः प्राणी, आत्मनिमित्तं ज्ञातिनिमित्तं तथा गृहनिमित्तं परिवारो–दासीकर्मकरादिकस्तन्निमित्तं, तथा मित्रनागभूतयक्षनिमित्तं तथाभूतं स्वपरोपघातरूपं दण्डं त्रसस्थावरेषु प्राणेषु स्वयमेव 'निसृजति' निक्षिपति–उपतापयति प्राण्युपमर्दकारिणीं क्रियां करोति, तथाऽन्येन कारयति, तथा परं दण्डं निसृजन्तं समनुजानीते। एवं कृतकारितानुमतिभिः कर्मसम्बन्धो भवति, तदर्थदण्डप्रत्ययिकं प्रथमं क्रियास्थानमाख्यातमिति।

अहावरे दोच्चे दंडसमादाणे अणट्ठादंडवत्तिएत्ति आहिज्जाति। तं जहा–से जहा नामए केइ पुरिसे जे इमे तसा पाणा भवंति, ते णो अच्चाए णो अजिणाए णो मंसाए णो सोणियाए, एवं हिययाए पित्ताए वसाए पिच्छाए पुच्छाए वालाए सिंगाए विसाणाए दंताए दाढाए णहाए ण्हारुणीए अट्ठीए अट्ठिमंजाए णो हिंसिंसु मेत्ति णो हिंसंति मेत्ति णो हिंसिस्संति मेत्ति, णो

पुत्तपोसणयाए णो पसुपोसणयाए णो अगारपरिवूहणताए नो समणमाहणवत्तणाहेउं नो तस्स सरीरस्स किंचि विप्परियादित्ता भवंति । से हंता छेत्ता भेत्ता लुंपइत्ता विलुंपइत्ता उद्दवइत्ता उज्झिउं बाले वेरस्स आभागी भवति अणट्ठादंडे ।

व्याख्या—अथापर द्वितीयं[ दण्डसमादानं ]अनर्थदण्डप्रत्ययिकं अभिधीयते । स यथा नाम कश्चित्पुरुषः + ये केचन 'अमी' संसारान्तर्वर्तिनः प्रत्यक्षाश्छागादयः प्राणिनस्तांश्चासौ हनन् 'नो' नैव अर्चायै हिनस्ति, तथा नो 'अजिनाय' चर्मणे, नापि मांसशोणितहृदयपित्तवसापिच्छपुच्छवालशृङ्गविषाणनखस्नाय्व[स्थ्य]स्थिमिञ्जा इत्येवमादिकं कारणमुद्दिश्य, नैवाहिंसिषुर्नापि हिंसन्ति नापि हिंसयिष्यन्ति मां मदीयं चेति । तथा नो पुत्रपोषणाय-पुत्रं पोषयिष्यामीत्येतदपि कारणमुद्दिश्य न व्यापादयति, तथा नापि पशूनां पोषणाय, तथा 'अगारं' गृहं, ×न तदर्थं हिनस्ति, तथा न श्रमणब्राह्मणवर्त्तनाहेतुं, तथा यत्तेन पालयितुमारब्धं नो तस्य शरीरस्य किमपि परित्राणाय तत्प्राणिव्यपरोपणं भवति, इत्येवमादिकं कारणमनादृत्यैवासौ क्रीडया व्यसनेन वा प्राणिनां हन्ता भवति दण्डादिभिः, छेत्ता भवति कर्णनासिकादिविकर्त्तनतः, तथा भेत्ता-शूलादिना तथा लुम्पयिताऽन्यतराङ्गावयवविकर्त्तनतस्तथा विलुम्पयिता चक्षूत्पाटनचर्म्मविकर्त्तनकरपादादिच्छेदनतः परमाधार्म्मिकवत्प्राणिनां

+ " निर्निमित्तमेव निर्विवेकतया प्राणिनो हिनस्ति, तदेव दर्शयितुमाह—" इति वृ० वृ० । × " तस्य 'परिवृहणा' वृद्धिः " इति हर्ष० ।

निर्निमित्तमेव नानाविधोपायैः पीडोत्पादको भवति, तथा जीवितादप्यपद्रावयिता भवति। स च+ बालोऽसमीक्षितकारितया जन्मान्तरानुबन्धिवैरस्याभागी भवति । तदेवं निर्निमित्तमेव पञ्चेन्द्रियप्राणिपीडनतो यथाऽनर्थदण्डो भवति तथा प्रतिपादितं, अधुना स्थावरानधिकृत्योच्यते—

से जहा नामए केइ पुरिसे जे इमे थावरा पाणा भवंति, तं जहा—इक्कडाइ वा कडि(कढि)णाइ वा जंतुगाइ वा परगाइ वा मोक्खाइ वा तणाइ वा कुसाइ वा कुच्छगाइ वा पप्प[पव]गाइ वा पलालएइ वा, ते णो पुत्तपोसणयाए नो पसुपोसणयाए नो अगारपरिवूहणयाए नो समणमाहण-पोसणयाए नो तस्स सरीरगस्स किंचि वि परियाइत्ता भवति । से हंता छेत्ता भेत्ता लुंपइत्ता विलुंपइत्ता उद्दवइत्ता उज्झिउं बाले वेरस्स आभागी भवति अणट्ठादंडे ।

व्याख्या—स यथा नाम कश्चित्पुरुषो निर्विवेकः प[थि]रि(?)गच्छन् [निर्निमित्तमेव] वृक्षादेः पल्लवादिकं दण्डादिना प्रध्वंसयन् फलनिरपेक्षस्तच्छीलतया व्रजति, एतदेव दर्शयति—ये केचनामी-प्रत्यक्षाः स्थावरा वनस्पतिकायिकाः प्राणिनो भवन्ति तद्यथा-'इक्कडा'दयो वनस्पतिविशेषाः सुगमार्थाः । तदिहेयमिकडा, ममानया प्रयोजनमित्येवमभि[सं]धाय न

+ " सद्विवेकमुऽज्झित्वाऽऽत्मानं वा परित्यज्य बालवद्बाल"इति सू० वृत्तौ ।

छिनत्ति, केवलं तत्पत्रपुष्पफलादिनिरपेक्षस्तच्छीलतयेत्येतत्सर्वत्रानुयोजनीयमिति । तथा न पुत्रपोषणाय, न पशुपोषणाय, नागारकार्याय, न श्रमणब्राह्मणप्रवृत्तये, नापि शरीरस्य किञ्चित्परित्राणं भविष्यतीति, केवलमेवमेवासौ वनस्पतिं हन्ता छेत्तेत्यादि यावज्जन्मान्तरानुबन्धिनो वैरस्याभागी भवति। अयं वनस्पत्याश्रयोऽनर्थदण्डोऽभिहितः, साम्प्रतमग्न्याश्रितमाह—

**से जहा नामए केइ पुरिसे कच्छंसि वा दहंसि वा उदगंसि वा दवियंसि वा वलयंसि वा नूमंसि वा गहणंसि वा गहणविदुग्गंसि वा वणंसि वा वणविदुग्गंसि वा पव्वयंसि वा पव्वयविदुग्गंसि वा तणाइं ऊसविय २ सयमेव अगणिकायं निसिरति अण्णेहिं अगणिकायं निसिरावेति अन्नं पि जाव समणुजाणाति अणट्ठादंडे, एवं खलु तस्स पुरिसस्स तप्पत्तियं सावज्जंति आहिज्जति । दोच्चे दंडसमादाणे अणट्ठादंडवत्तिएत्ति आहिए [ सू० ३ ] ॥**

व्याख्या—स यथा नाम कश्चित् पुरुषो, निर्विवेकतया* कच्छादिषु दशसु स्थानेषु वनदुर्गपर्यन्तेषु 'तृणानि' कुशई-

* " कच्छे-नदीजलवेष्टिते वृक्षादिमति प्रदेशे, ह्रदे-प्रतीते, उदके-जलाशयमात्रे, द्रविके-तृणादिद्रव्यसमुदाये, वलये-वृत्ताकार नद्यादिजलकुटिलगतियुक्तप्रदेशे, नूमे-अवतमसे गहने वृक्षवल्लीसमुदाये, गहनेऽपि दुर्गे-पर्वतैकदेशावस्थितवृक्षवल्लीसमुदाये, वनविदुर्गे—नानाविधवृक्षसमूहे, एतेषु " इति हर्ष० ।

षिकादीनि पौनःपुन्येनोर्ध्वाधःस्थानि कृत्वाऽग्निकायं ' निसृजति ' प्रक्षिपत्यन्येन वा निसर्जयति प्रक्षिपयत्यन्यं च निसृजन्तं समनुजानीते । तदेवं योगत्रिकेण तस्य यत्किञ्चनकारिणस्तत्प्रत्ययिकं-दवदाननिमित्तं ' सावद्यं कर्म ' महापातकमाख्यातम् । एतच्च द्वितीयमनर्थदण्डसमादानमाख्यातमिति तृतीयमधुना व्याख्याति—

अहावरे तच्चे दंडसमादाणे हिंसादंडवत्तिएत्ति आहिज्जति । से जहा नामए केइ पुरिसे ममं वा ममिं वा, अन्नं वा अन्निं वा, हिंसिंसु वा हिंसति वा हिंसिस्सति वा, तं दंडं तसथावरेहिं पाणेहिं सयमेव निसिरति जाव अन्नंपि समणुजाणाति हिंसादंडे, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जति । तच्चे दंडसमादाणे हिंसादंडवत्तिएत्ति आहिते [ सू० ४ ] ॥

व्याख्या—' अहावरे ' इति, अथापरं तृतीयं दण्डसमादानं हिंसादण्डप्रत्ययिकमाख्यायते—स यथा नाम कश्चित् 'पुरुषः' पुरुषाकारं वहन्, स्वतो मरणभीरुतया वा मामयं घातयिष्यतीत्येव मत्वा कंसवद्देवकीसुतान् भावतो जघान, मदीयं वा पितरमन्यं वा ' मामकं ' ममीकारोपेत परशुरामवत् कार्त्तवीर्यं जघान, अन्य वा कञ्चनायं सर्पसिंहादिर्व्यापादयिष्यतीति मत्वा सर्प्पादिकं व्यापादयति, अन्यदीयस्य वा कस्यचिद्धिरण्यपश्वादेरयमुपद्रवकारीति कृत्वा तत्र दण्डं निसृजतीति । तदेवमयं मां मदीयमन्यमन्यदीयं वा हिंसितवान् हिनस्ति हिंसिष्यतीत्येवं सम्भाविते त्रसे स्थावरे वा ' तद्दण्डं ' प्राणव्यपरोपणलक्षणं स्वयमेव निसृजति अन्येन निसर्जयति निसृजन्तं वाऽन्यं समनुजानीते, इत्येतत्तृतीयं दण्डसमादानं हिंसा-

दण्ड प्रत्ययिकमाख्यातमिति ।

अहावरे चउत्थे दंडसमादाणे अकम्हा[अकस्मात्* ]दंडवत्तिए[ त्ति ] आहिज्जति । से जहा नामए केइ पुरिसे कच्छंसि वा जाव वणविदुग्गंसि वा मियवित्तिए मियसंकप्पे मियपणिहाणे मियवहाए गंता, एए मिएत्ति काउं अन्नयरस्स मियस्स वहाए उसुं आयामेत्ता णं णिसिरेज्जा, से मियं वहिस्सामीति कट्टु तित्तिरं वा वट्टगं वा[ चडगं वा ]लावगं वा कवोतगं वा कविं वा कविंजलं वा विंधेत्ता भवति । इह खलु से अन्नस्स अट्ठाए अन्नं फुसति अकम्हादंडे ।

व्याख्या—अथाऽपरं चतुर्थं दण्डसमादानमकस्माद्दण्डप्रत्ययिकमाख्यायते—तद्यथा नाम कश्चित् पुरुषो लुब्धकादिकः कच्छे वा यावद्वनदुर्गे वा गत्वा 'मृगै'राटव्यपशुभिर्वा वृत्तिर्यस्य स मृगवृत्तिकः, स चैवम्भूतस्तथा मृगसङ्कल्पः, मृगप्रणिधानः–क्व मृगान् द्रक्ष्यामीत्येतदध्यवसायी सन् मृगवधार्थं कच्छादिषु गन्ता भवति, तत्र च गतः सन् दृष्ट्वा [मृगानेते] मृगा इत्येवं कृत्वा तेषां मध्ये अन्यतरस्य मृगस्य वधार्थं 'इषुं' शरं आयामेन समाकृष्य मृगमुद्दिश्य निसृजति । स चैवं

* "इह चाकस्मादित्ययं शब्दो मगधदेशे सर्वेणाप्याबालगोपालाङ्गनादिना संस्कृत एवोच्चार्यत इति तदिहापि तथाभूत एवोच्चरित इति" वृ० वृत्तौ ।

सङ्कल्पो भवति–यथाऽहं मृगं हनिष्यामि, इतीषुं निक्षिप्तवान्, स च तेन इषुणा तित्तिरादिपक्षिविशेषं व्यापादयिता भवति, तदेवं खल्वसावन्यस्यार्थाय निक्षिप्तो दण्डो यदन्यं 'स्पृशति' घातयति सोऽकस्माद्दण्ड इत्युच्यते। अधुना वनस्पतिमुद्दिश्याकस्माद्दण्डमाह—

से जहा नामए केइ पुरिसे सालीणि वा वीहीणि वा कोद्दवाणि वा कंगूणि वा परगाणि वा रालाणि वा णिंति[णिलि]ज्जमाणे अन्नयरस्स तणस्स वहाए सत्थं निसिरेज्जा, से सामगं तणगं मुकुंद[कुमुदु]गं वीहीऊसियं कलेसुयं तणं छिंदिस्सामित्ति कट्टु सालिं वा वीहिं वा कोद्दवं वा कंगुं वा परगं वा रालगं वा छिंदित्ता भवति, इति खलु से अन्नस्स अट्ठाए अन्नं फुसति अकम्हादण्डे, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जति। चउत्थे दंडसमादाणे अकम्हादंडवत्तिएत्ति आहिते ॥ [सू० ५]

व्याख्या—स यथा नाम कश्चित्पुरुषः कृषीवलादिः शाल्यादेर्धान्यजातस्य श्यामादिकं तृणजातमपनयन् धान्यशुद्धिं कुर्वाणः सन्नन्यतरस्य तृणजातस्यापनयनार्थं शस्त्रं दात्रादिकं निसृजेत्, स च श्यामादिकं तृणं छेत्स्यामीति कृत्वा अकस्माच्छालिं वा यावद्रालकं वा छिन्द्यात्, रक्षणीयस्यैव धान्यस्य अकस्माच्छेत्ता भवतीत्येवमन्यस्यार्थाय अन्यकृतेऽन्यं वा 'स्पृशति'

छिनत्ति, तदेवं खलु तत्कर्त्तुस्तत्प्रत्ययिक-मकस्माद्दण्डनिमित्तं ‘ सावद्यं ’ पापमाधीयते-सम्बध्यते, तच्चतुर्थं दण्डसमादान-मकस्माद्दण्डप्रत्ययिकमाख्यातमिति ।

अहावरे पंचमे दंडसमादाणे दिट्ठीविप्परियासिया दंडवत्तिए आहिज्जति। से जहा नामए केइ पुरिसे माईहिंवा पीईहिं वा भाईहिं वा भइणीहिं वा भज्जाहिं वा पुत्तेहिं वा धूयाहिं वा सुण्हाहिं वा सद्धिं संवसमाणे मित्तं अमित्तमि[ति]व मन्नमाणे मित्ते हयपुव्वे भवति दिट्ठीविप्परियासियादंडे।

व्याख्या—अथाऽनन्तरं पञ्चमं दण्डसमादानं दृष्टिविपर्यासदण्डप्रत्ययिकमाख्यायते-तद्यथा नाम कश्चित् पुरुषश्चारभटादिको मातृपितृभ्रातृभगिनीभार्यापुत्रपुत्रिकास्नुपादिभिः सार्द्धं [सं]वसंस्तिष्ठन् ज्ञातिपालनकृते मित्रमेव दृष्टिविपर्यासादमित्रोऽयमित्येवं मन्यमानो ‘ हन्यात् ’ व्यापादयेत्, तेन च दृष्टिविपर्यासवता मित्रमेव हतपूर्वं भवतीत्यतो दृष्टिविपर्यासदण्डोऽयम् । पुनरन्यथा तमेवाह—

से जहा नामए केइ पुरिसे गामघायंसि वा नगरघायंसि वा खेड० कब्बड० मडंबघायंसि वा दोणमुहघायंसि वा पट्टणघायंसि वा × आसम० सन्निवेस० निगम० रायहाणीघायंसि वा अतेणं

× “संबाहघायसि वा” इति हर्ष०। ग्रामादिलक्षण चेदं—‘ग्रामो वृत्त्या वृतः स्यान्नगरमुरुचतुर्गोपुरोद्भासिशोभं, खेटं

तेणमिति मन्नमाणे अतेणे हयपुव्वे भवति दिट्ठीविप्परियासियादंडे, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जति। पंचमे दंडसमादाणे दिट्ठीविप्परियासियादंडवत्तिएत्ति आहिए। [ सू० ६ ]॥

व्याख्या—स यथा नाम कश्चित्पुरुषः पुरुषाकारमुद्वहन् ग्रामघातादिके विभ्रमे भ्रान्तचेता दृष्टिविपर्यासादचौरमेव चौरोऽयमित्येवं मन्यमानो व्यापादयेत्, तदेवं तेन भ्रान्तमनसा विभ्रमाकुलेनाचौर एव हतपूर्वो भवति, सोऽयं दृष्टिविपर्यासदण्डस्तदेवं खलु 'तस्य' दृष्टिविपर्यासवतस्तत्प्रत्ययिकं सावद्यं कर्म्माधीयते। तदेवं पञ्चमं दण्डसमादानं दृष्टिविपर्यासप्रत्ययिकमाख्यायते※।

अहावरे छट्ठे मोसवत्तिए किरियाठाणे +आहिज्जति—से जहा नामए केइ पुरिसे आयहेउं वा नाइहेउं वा अगारहेउं वा परिवारहेउं वा सयमेव मुसं वयति अन्नेणं मुसं वयावेति मुसं वयंतं

नद्यद्रिवेष्टं परिवृतमभितः कर्बटं पर्वतेन। ग्रामो युक्तं मडम्बद[? क]लितदशशतैः पत्तनं रत्नयोनि, द्रोणाख्यं सिंधुवेलावलयितमथ सम्बाधनं चाद्रिशृङ्गः ॥१॥' इति। आश्रमस्तापसस्थानं, सन्निवेशः—सार्थकटकादिवासः, निगमो—बहुवणिग्वासः, राजधानी—राजकुलस्थानम्।" इति हर्ष०।

※ 'ख्यात इति' प्र०। 'ख्यातमिति' वृ. वृ.।

+ मुद्रितासु सवृत्तिकप्रतिषु 'छट्ठे किरियट्ठाणे मोसावत्तिएत्ति' इत्येवमस्ति, तत्समीचीनं प्रतिभाति, दीपिकाकारेणाप्ययं एतत्क्रमेणैव कृतत्वात्। किञ्च—'किरियट्ठाणे मोसावत्तिए' इत्यत्र 'किरियाठाणे मोसवत्तिए' इति सम्यगाभाति।

अन्नं समणुजाणाति, एवं खलु तस्स तप्पतियं सावज्जंति आहिज्जति, छट्ठे किरियाठाणे मोसवत्तिए[ त्ति ] आहिते [ सू० ७ ] ॥

व्याख्या—अथाऽपरं षष्ठं क्रियास्थानं मृषावादप्रत्ययिकमाख्यायते, तत्र पूर्वोक्तानां पञ्चानां क्रियास्थानानां सत्यपि क्रियास्थानत्वे प्रायशः परोपघातो भवतीति कृत्वा दण्डसमादानसंज्ञा कृता, षष्ठादिषु च बाहुल्येन परव्यापादनं न भवतीति कृत्वा क्रियास्थानमित्येषा संज्ञोच्यते। स यथा नाम कश्चित् पुरुषः स्वपक्षावेशादागृही आत्मनिमित्तं यावत्परिवारनिमित्तं वा सद्भूतार्थनिन्हवरूपमसद्भूतोद्भावनरूपं वा स्वयमेव मृषावादं वदति, तद्यथा–नाहं मदीयो वा कश्चिच्चौरः, स च चौरमपि सद्भूतमप्यर्थमपलपति, तथा परमचौरं चौरमिति वदति, तथाऽन्येन मृषावादं भाणयति, तथाऽन्यांश्च मृषावादं वदतः समनुजानीते। तदेवं खलु तस्य योगत्रिककरणत्रिकेण मृषावादं वदतस्तत्प्रत्ययिकं सावद्यं कर्माधीयते–सम्बध्यते, तदेतत्षष्ठं क्रियास्थानं मृषावादप्रत्ययिकमाख्यातमिति।

अहावरे सत्तमे किरियाठाणे अदिन्नादाणवत्तिए[ त्ति] आहिज्जति–से जहा नामए केइ पुरिसे आयहेउं वा जाव परिवारहेउं वा सयेमव अदिन्नं आदियति अन्नेण वि अदिन्नं आदियावेति अदिन्नं आदियंतं अन्नं समणुजाणति, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जति। सत्तमे किरियाठाणे आदिन्नादाणवत्तिएत्ति अहिते [ सू० ८ ] ॥

व्याख्या—अथापरं सप्तमं ' क्रियास्थानमदत्तादानप्रत्ययिकमाख्यायते, एतदपि प्राग्वज्ज्ञेयम् । स यथा नाम कश्चित्पुरुष आत्मनिमित्तं यावत्परिवारनिमित्तं [ स्वयमेव ] परद्रव्यमदत्तमेव गृह्णीयात् अपरं च ग्राहयेत् गृह्णन्तमप्यपरं समनुजानीयादित्येवं तस्यादत्तादानप्रत्ययिकं कर्म बध्यते । सप्तमं क्रियास्थानमाख्यातमिति ।

अहावरे अट्ठमे किरियाठाणे अज्झत्थवत्तिएत्ति आहिज्जति । से जहा नामए केइ पुरिसे णत्थि णं केति किंचि विसंवादेति, सयमेव हीणे दीणे दुट्ठे दुम्मणे ओहयमणसंकप्पे चिंतासोगसागरसंपविट्ठे करतलपल्हत्थमुहे अट्टज्झाणोवगए भूमिगयदिट्ठीए झियाइ, तस्स णं अज्झत्थिया असंसइया चत्तारि ठाणा एवमाहिज्जंति, तंजहा—कोहे माणे माया लोहे, अज्झत्थमेव कोहमाणमायालोहे, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जति, अट्ठमे किरियाठाणे अज्झत्थिएत्ति आहिए [ सू० ९ ]॥

व्याख्या—अथापरमष्टमं क्रियास्थानमाध्यात्मिकमित्यन्तःकरणोद्भवमाख्यायते, मानसिकमित्यर्थः । तद्यथा नाम कश्चित् पुरुषश्चित्तोत्प्रेक्षाप्रधानस्तस्य च नास्ति कश्चिद्विसंवादयिता—न तस्य कश्चिद्विसंवादेन परिभवेन वाऽसद्भूतोद्भावनेन वा चित्तदुःखमुत्पादयति, तथाऽप्यसौ स्वयमेव वर्णापशदवद्धीनो दुर्गतवद्दीनो दुश्चित्ततया दुष्टो दुर्मनास्तथोपहतोऽस्वस्थतया

मनःसङ्कल्पो यस्य स तथा चिन्ताशोकसागर(सं)प्रविष्टः । तथा करतलपर्यस्तमुखः, तथाऽऽर्त्तध्यानोपगतो–निर्विवेकतया धर्म्मध्यानाद्दूरवर्ती [भूमिगतदृष्टिः] निर्निमित्तमेव द्वन्द्वोपहतवद्ध्यायति, तस्यैवं चिन्ताशोकसागरावगाढस्य सत 'आध्यात्मिकानि' अन्तःकरणोद्भवानि मनःसंश्रितान्यशंमयितानि वा–निःशंमयानि चत्वारि वक्ष्यमाणानि स्थानानि भवन्ति, तानि चैवमाख्यायन्ते, तद्यथा–क्रोधस्थानं मानस्थानं मायास्थानं लोभस्थानमिति । ते च चत्वारोऽपि कषाया आध्यात्मिकाः, एभिरेव सद्भिर्दुष्टं मनो भवति, तदेवं तस्य दुर्मनसः क्रोधमानमायालोभवत एवमेवोपहतमनःसङ्कल्पस्य 'तत्प्रत्ययिकं' अध्यात्मनिमित्तं सावद्यं कर्म्म आधीयते–सम्बद्ध्यते, तदेवमष्टममेतत् क्रियास्थानमाध्यात्मिकाख्यमाख्यातमिति ।

अहावरे नवमे किरियाठाणे माणवत्तिए[त्ति] आहिज्जति। से जहा नामए केइ पुरिसे जातिमएण वा कुलमएण वा बलमएण वा रूवमएण वा तवमएण वा सुयमएण वा लाभमएण वा ईसरियमएण वा पन्नामएण वा अन्नतरेण वा मदट्ठाणेणं मत्ते समाणे परं हीलेति निंदति खिंसति गरहति परिभवति अवमन्नाति, इत्तरिए अयं, अहंमंसि पुण विसिट्ठजाइकुलबलाइगुणोववेए, एवमप्पाणं समुक्कसे ।

व्याख्या—अथापरं नवमं क्रियास्थान मानप्रत्ययिकमाख्यायते । स यथा नाम कश्चित्पुरुषो जात्यादिगुणोपेतः सन् जातिकुलबलरूपतपःश्रुतलाभैश्वर्यप्रज्ञामदाख्यैरष्टभिर्मदस्थानैरन्यतरेण वा मत्तः परमवमबुद्ध्या हीलयति तथा निन्दति

जुगुप्सते गर्हति परिभवति, एतानि चैकार्थिकानि। यथा परिभवति तथा दर्शयति—'इतरोऽयं' जघन्यो हीनजातिकस्तथा मत्तः कुलबलरूपादिभिर्दूरमपभ्रष्टः सर्वजनावगीतो×ऽयमिति, अहं पुनर्विशिष्टजातिकुलबलादिगुणोपेतः, एवमात्मानं समुत्कर्षयेदिति+। साम्प्रतं मानोत्कर्षविपाकमाह—

**देहा चुए कम्मबितिए अवसे पयाइ, तं जहा-गब्माओ गब्भं जम्माओ जम्मं माराओ मारं नरगाओ नरगं, चंडे थद्धे चवले माणी आवि भवति, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जति। नवमे किरियाठाणे माणवत्तिए[त्ति] आहिते [सू० १०]॥**

व्याख्या—'देहा चुए'त्ति, तदेवं जात्यादिमदोन्मत्तः सभिहैन लोके गर्हितो भवति, ✽जातिमदः कस्यचिन्न कुलमदोऽपरस्य कुलमदो न जातिमदः, अपरस्योभयं, अपरस्यानुभयमिति, एवं [पदद्वयेन चत्वारो भङ्गाः] पदत्रयेणाष्टौ, चतुर्भिः षोडशेत्यादि यावदष्टभिः पदैः षट्पञ्चाशदधिकं शतद्वयमिति, सर्वत्र मदाभावरूपश्चरमभङ्गः शुद्ध इति। परलोकेऽपि च मानी दुःखभाग्भवतीत्यनेन प्रदर्श्यते। स्वायुषः क्षये देहाच्युतो भवान्तरं गच्छन् शुभाशुभकर्मद्वितीयः कर्म्मपरायत्तत्वादवशः—

---

× निन्दनीयः। + वक्ष्यमाणः 'तदेव' मित्यादितः 'शुद्ध' इति पर्यन्तः पाठोऽत्रत्य आभाति। 'परलोकेऽपी'ति वाक्यं च 'भवती'त्यस्याग्रे। इति टिप्पणं आगमोदयसमितिमुद्रितासु सवृत्तिकप्रतिषु। ✽ "अत्र च जात्यादिपदद्वयादिसंयोगा द्रष्टव्याः, ते चैवं भवन्ति" इति वृत्तौ।

परतन्त्रः प्रयाति । त[द्य]थाहि (?) गर्भाद्गर्भं पञ्चेन्द्रियापेक्षं, तथा गर्भादगर्भं विकलेन्द्रियापेक्षं–विकले[न्द्रिये]षूत्पद्यमानः पुनरगर्भाद्गर्भं, एवमगर्भादगर्भं, एतच्च नरककल्पगर्भदुःखापेक्षया अभिहितम् । उत्पद्यमानदुःखाऽपेक्षया त्विदमभिधीयते– जन्मन एकस्मादपरजन्मान्तर व्रजति, मरणान्मरणान्तरं व्रजति । नरकदेश्यात् श्वपाकादिग्रामाद्रत्नप्रभादिकं नरकान्तरं व्रजति, यदिवा नरकात्सीमन्तादिकादुद्वर्त्य सिंहमत्स्यादावुत्पद्य पुनरपि तीव्रतर नरकान्तरं व्रजति । तदेवं नटाद्रङ्गभूमौ संसारचक्रवाले स्त्रीपुंनपुंसकादीनि बहून्यवस्थान्तराण्यनुभवति । तदेवं मानी परपरिभवे मति 'चण्डो' रौद्रो भवति परस्यापकरोति, तदभावे ह्यात्मानं व्यापादयति । तथा स्तब्धश्चपलो यत्किञ्चनकारी, मानी सन् सर्वोऽप्येतदवस्थो भवति । तदेवं मानप्रत्ययिकं सावद्यं कर्म्म बद्ध्यते । नवमं [ए]तत्क्रियास्थानमाख्यातमिति ।

अहावरे दसमे किरियाठाणे मित्तदोसवत्तिएत्ति आहिज्जति । से जहा नामए केइ पुरिसे माईहिं वा पिईहिं वा भाईहिं वा भइणीहिं वा भज्जाहिं वा धूयाहिं वा पुत्तेहिं वा सुण्हाहिं वा सद्धिं संवसमाणे तेसिं अन्नयरेसिं वा [ अन्नयरंसि ] अहालहुगंसि अवराहंसि सयमेव गरुयं दंडं निवत्तेति । तं जहा–सीओदगवियडंसि वा कायं उच्छोलित्ता भवति, उसिणोदगवियडेण वा कायं उसिंचित्ता भवति, अगणिकाएणं वा कायं उवडहित्ता भवइ, जोत्तेण वा वेत्तेण वा णेत्तेण वा

तयाइ वा कसेण वा छियाए वा लयाए वा पासाइं उद्दालेत्ता भवइ, डंडेण वा अट्ठीण वा मुट्ठीण वा लेलूण वा कवालेण वा कायं आउट्टित्ता भवति, तहप्पगारे पुरिसजाते संवसमाणे दुम्मणा भवंति, पवसमाणे सुमणा भवंति, तहप्पगारे पुरिसजाए दंडपासी दंडगुरुए दंडपुरक्खडे अहिए इमंसिं लोगंसि अहिए परंसि लोगंसि संजलणे कोहणे पिट्ठिमंसियावि भवति, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जति, दसमे किरियाठाणे मित्तदोसवत्तिएत्ति आहिते ॥ सू० । ११ ॥

व्याख्या—अथापरं दशमं क्रियास्थानं मित्रदोषप्रत्ययिकमाख्यायते–तद्यथा नाम कश्चित् पुरुषः प्रभुकल्पो मातापितृसुहृत्स्वजनादिभिः सार्द्धं परिवसँस्तेषां च मातापित्रादीनामन्यतमेनाऽनाभोगतया यथाकथञ्चिल्लघुतरेऽप्यपराधे वाचिके दुर्वचनादिके तथा कायिके हस्तपादादिसङ्घट्टनरूपे कृते सति ' स्वयमेव ' आत्मना क्रोधाध्मातो गुरुतरं दण्डं दुःखोत्पादकं ' निर्वर्त्तयति ' करोति । तद्यथा–शीतोदके ' तस्य ' अपराधकर्तुः कायमधो बोलयिता भवति, तथोष्णोदकविकटेन कायं सिञ्चयिता भवति, तत्र विकटग्रहणादुष्णतैलेन काँजिकादिना वा कायमुपतापयिता भवति, तथाऽग्निकायेनोल्मुकेन तप्तायसा वा कायं उप[ दाहयिता ]तापयिता वा (?) भवति, तथा जो[ यो ]त्रेण वा, वेत्रेण वा, [ नेत्रेण वा ] ' त्वचा वा ' सनादिकया लतया वाऽन्यतमेन वा दवरकेण ताडनातः ' तस्य ' अल्पापराधकर्तुः शरीरपार्श्वाणि ' उद्दालयितुं ' चर्माणि लुम्पयितुं ( प्रस्तुतो ) भवति, तथा दण्डादिना कायमुपताडयिता भवति, तदेवमल्पापराधिन्यपि महाक्रोधदण्डवति तथा-

प्रकारे पुरुषजाते एकत्र वसति सति तत्सहवासिनो मातापित्रादयो दुर्मनसस्तदनिष्टाशङ्कया भवन्ति, तस्मिंश्च देशान्तरं गच्छति तत्सहवासिनः सुमनसो भवन्ति । तथाप्रकारश्च पुरुषजातोऽल्पेऽप्यपराधे महान्तं दण्डं कल्पयतीति, तदेव दर्शयति–दण्डपार्श्वी स्वल्पेऽप्यपराधे कुप्यति दण्डं च पातयति, दण्डेन गुरुको भवति, तथा दण्डपुरस्कृतः–सदा पुरस्कृतदण्ड इत्यर्थः । स चैवम्भूतः 'अस्मिँल्लोके' अस्मिञ्जन्मनि अहितः प्राणिनामहितदण्डापादनात्, तथा परस्मिन्नपि जन्मन्यसावहितः, येनकेनचिन्निमित्तेन क्षणे क्षणे सञ्ज्वलतीति सञ्ज्वलनः, स चात्यन्तक्रोधनो वधबन्धछविच्छेदनादिषु शीघ्रमेव क्रियासु प्रवर्त्तते, तदभावेऽप्युत्कटद्वेषतया मर्मोद्धट्टनतः पृष्ठिमांसमपि खादेत्तदसौ त्रुयाद्येनासौ परः सञ्ज्वलति, तदेवं तस्य महादण्डप्रवर्त्तयितुस्तद्दण्डप्रत्ययिकं सावद्यं कर्म्म बध्यते, तदेतद्दशमं क्रियास्थानं मित्रद्रोहप्रत्ययिकमाख्यातमिति×।

अहावरे एक्कारसमे किरियाठाणे मायावत्तिएत्ति आहिज्जति, जे इमे भवंति गूढायारा तमोकासिया उलूगपत्तलहुया पव्वयगुरुआ, ते आरिया वि संता अणारियाओ भासाओ वि पउंज्जंति, अन्नहा संता अप्पाणं अन्नहा मन्नंति, अन्नं पुट्ठा + अन्नं वागारिंति, अन्नं आइक्खियव्वं अन्नं

× " अन्ये पुनरष्टमं क्रियास्थानमात्मदोषप्रत्ययिकमाचक्षते, नवमं तु परदोषप्रत्ययिकं, दशमं पुनः प्राणवृत्तिकमिति " हर्षकुलः ।

+ यद्यपि दीपिकाप्रतिषु सर्वास्वपि ' अन्नं पुण कुणंति अन्नं० ' इत्येवंरूपः पाठोऽस्ति मूले, परं सवृत्तिकमुद्रितप्रतिषु ' अन्नं पुट्ठा अन्नं० ' इत्येवम्भूतोऽस्ति, अर्थो दीपिकायामप्येवविध एव विहित इत्ययमेव मूले निवेशितः ।

आइक्खंति ।

व्याख्या—अथापरं एकादशं [ मायाप्रत्ययिकं ] क्रियास्थानमाख्यायते-ये केचनामी भवन्ति पुरुषाः गूढाचाराः गलकर्त्तकग्रन्थिछेदादयस्ते च नानाविधैरुपायैर्विश्रम्भमुत्पाद्य पश्चादपकुर्वन्ति, प्रद्योतादेरभयकुमारादिवत्, ते च मायाशील-त्वेनाप्रकाशचारिणः । तमःकाषिणः-पराविज्ञाताः क्रियाः कुर्वन्ति, ते च स्वचेष्टयैव ' उलूकपत्रवल्लघवः ' कौशिकप[क्ष]-त्रवल्लघीयांसोऽपि पर्वतवद्गुरुमात्मानं मन्यन्ते, यदिवाऽकार्यप्रवृत्तेः पर्वतवन्नो स्तम्भयितुं शक्यन्ते, ते चार्यदेशोत्पन्नाः सन्तः धूर्त्तप्राया आत्मप्रच्छादनार्थमपरभयोत्पादनार्थं वा अनार्यभाषाः प्रयुञ्जन्ते, परव्यामोहार्थं स्वमतिपरिकल्पितभाषाभिर-पराविदिताभिर्भाषन्ते, तथाऽन्यथा वा व्यवस्थितमात्मानमन्यथा-मान्याकारेण मन्यन्ते व्यवस्थापयन्ति च, तथाऽन्यत्पृष्टा मातृस्थानतोऽन्यदाचक्षते, यथाऽऽम्रान् पृष्टाः कोविदारकान्+ आचक्षते, वादकाले वा कश्चिन्न्यायवादितया व्याकरणे [ पृष्टे ] प्रवीण [ प्रवणं ] स्त(?)र्कमार्ग्गमवतारयति, तथाऽन्यस्मिन्नर्थे कथयितव्येऽन्यमेवार्थमाचक्षते । तेषां च मवार्थ-विसंवादिनां कपटप्रपञ्चचतुराणां विपाकोद्भावनाय दृष्टान्त दर्शयितुमाह—

से जहा नामए केइ पुरिसे अंतोसल्ले, तं सल्लं नो सयं णीहराति नो अन्नेणं वीहरावेइ नो पडिविद्धंसेति, एवमेव निण्हवेइ, आविउट्टमाणे अंतो अंतो झि[ रि ]याति, एवमेव माई मायं कट्टु णो

+ ' कोविदारो-युगपत्रः ' इति हेमवचनाद्वनस्पतिः ' कचनार 'इति लोके ।

आलोएति नो पडिक्कमति नो निंदइ नो गरिहइ नो विउट्टति नो विसोहेइ नो अकरणयाए अब्भुट्ठेइ नो अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जति, माई अस्सिं लोए पच्चायाति माई परंसि लोए [ पुणो पुणो ] पच्चायाति । निंदइ गरिहइ पसंसइ णिच्चरति, णो नियट्टति णिसिरियं दंडं छाएति मायी असमाहडसुहलेस्से आवि भवति, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जति । एक्कारसमे किरियाठाणे मायावत्तिएत्ति आहिए ॥ सूत्र १२ ॥

व्याख्या—' से जहे 'त्यादि, तद्यथा नाम कश्चित्पुरुषः सङ्ग्रामादपक्रान्तोऽन्तःसशल्यः, शल्यषद्धनवेदनाभीरुतया तच्छल्यं न स्वतो निर्हरति–अपनयति नोद्धरति, नाप्यन्येनोद्धारयति नापि तच्छल्यं वैद्योपदेशेनौषधोपचारयोगादिभिरुपायैः प्रध्वंसयति, अन्येन केनचित्पृष्टोऽपृष्टो वा तच्छल्यं ' एवमेव ' निष्प्रयोजनमेव निह्नुते–अपलपति, तेन च शल्येनाऽऽवन्तर्वर्त्तिना ' अविउट्टमाणे 'त्ति पीड्यमानः ' अन्तो अन्तो ' मध्ये मध्ये पीड्यमानोऽपि ' रीयते ' व्रजति, तत्कृतां वेदनामधिसहमानः क्रियासु प्रवर्त्तते । साम्प्रतं दार्ष्टान्तिकमाह–' एवमेवे 'त्यादि, यथाऽसौ सशल्यो दुःखभाग् भवत्येवमेवासौ ' मायी ' मायाशल्यवान् यत्कृतमकार्यं तन्मायया निगूहयन्मायां कृत्वा न तां मायामन्यस्मै ' आलोचयति ' कथयति नापि तस्मात् स्थानात् प्रतिक्रामति–न ततो निवर्त्तते, नाप्यात्मसाक्षिकं तन्मायाशल्यं निन्दति, तद्यथा–धिङ्मां !! यदहमेवम्भूतमकार्यं कर्म्मोदयात्कृतवान् । नापि परसाक्षिकं ' गर्हति ' आलोचयति नापि च जुगुप्सते तथा

'नो विउट्टइ,' इति नापि तन्मायाशल्यं वित्रोटयति, अपुनःकरणतया न निवर्त्तयतीत्यर्थः। +[ नापि तन्मायाऽऽदिकमकार्यं सेवित्वाऽऽलोचनाऽर्हायाऽऽत्मानं निवेद्य तदकार्याकरणतयाऽभ्युत्तिष्ठते, प्रायश्चित्तं प्रतिपद्यापि नोद्युक्तविहारी भवतीत्यर्थः। तथा नापि गुर्वादिभिरभिधीयमानोऽपि यथाऽर्हमकार्यनिर्वहणयोग्यं प्रायचित्तं-शोधयतीति प्रायश्चित्तं तपःकर्म्म विशिष्टं चान्द्रायणाद्यात्मकं ' प्रतिपद्यते ' अभ्युपगच्छति । ] नो यथायोग्यं प्रायश्चित्तं प्रतिपद्यते, तदेवं मायया सत्कार्यप्रच्छादकोऽस्मिन्नेव लोके मायावीत्येवं सर्वकार्येष्वेवाविश्रम्भणत्वेन 'प्रत्यायाति' प्रख्याति याति, तथाभूतश्च सर्वस्याविश्वा[स्यो]सो ( ? ) भवति । तथाऽतिमायावित्वादसौ परलोके सर्वाधमेषु यातनास्थानेषु नरकतिर्यगादिषु पौनःपुन्येन प्रत्यायाति-भूयोभूयस्तेष्वेवारघट्टघटीन्यायेन प्रत्यागच्छति । तथा नानाविधैः प्रपञ्चैर्वञ्चयित्वा परं ' निन्दति ' जुगुप्सते, तद्यथा-अयमज्ञो मूर्खः पशुकल्पो, नानेन किमपि प्रयोजनमित्येवं परं निन्दति आत्मानं प्रशंसयति, तथाऽऽत्मप्रशंसया तुष्यति, एव चासौ लब्धप्रसरोऽधिकं तथाविधानुष्ठायी भवति । निश्चरति-तस्मान्मातृस्थानान्न निवर्त्तते । तथाऽसौ मायया ' दण्डं ' प्राण्युपमर्दकारिणं ' निसृज्य ' पातयित्वा पश्चाच्छादयति-अपलपति अन्यस्य[ वा ]उपरि प्रक्षिपति । स च मायावी सर्वदा वञ्चनपरायणः संस्तन्मनाः सर्वानुष्ठानेऽप्येवम्भूतो भवति-' असमाहृता ' अनङ्गीकृता शोभना लेश्या येन स तथा, आर्त्तध्यानोपहततया अशोभनलेश्य इत्यर्थः । तदेवमपगतधर्म्मध्यानोऽसमाहितोऽशुद्धलेश्यश्चापि भवति । तदेवं तस्य मायाशल्यप्रत्ययिकं सावद्यं कर्माधीयते, तदेतदेकादशं क्रियास्थानं मायाप्रत्ययिकं व्याख्यातम् ।

+[ ] नास्त्येतच्चिह्नान्तर्गतपाठः प्रत्यन्तरेषु ।

अहावरे बारसमे किरियाठाणे लोभवत्तिएत्ति आहिज्जति—जे इमे भवंति, [ तं जहा— ] आरन्निया आवसहिया गामंतिया कण्हुई राहस्सिया नो बहुसंजया नो बहुपडिविरया सवपाणभूयजीवसत्तेहिं, ते अप्पणा सच्चामोसाइं एवं वि[प]उंजंति—अहं न हंतवो अन्ने हंतवा, अहं न अज्जावेयवो अन्ने अज्जावेयवा, अहं न परिघेत्तवो अन्ने परिघेत्तवा, अहं न परितावेयवो अन्ने परितावेयवा, अहं न उद्दवेयवो अन्ने उद्दवेयवा, एवामेव ते इत्थिकामेहिं मुच्छिया गिद्धा गढिया गरहिया अज्झोववन्ना जाव वासाइं चउपंचमाइं छद्दसमाइं अप्पयरो वा भुज्जयरो वा भुंजित्तु [ भोग]भोगाइं कालमासे कालं किच्चा अन्नयरेसु आसुरिएसु किब्बिसिएसु ठाणेसु उववत्तारो भवंति । ततो विप्पमुच्चमाणा भुज्जो भुज्जो एलमूयत्ताए तमूयत्ताए जातिमूयत्ताए पच्चायंति, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जति, दुवालसमे किरियाठाणे लोभवत्तिएत्ति आहिए । इच्चेयाइं दुवालसकिरियाठाणाइं दविएणं समणेणं वा माहणेणं वा सम्मं सुपरिजाणियवाणि भवंति ॥ [ सू. १३ ] ॥

व्याख्या—अथ द्वादशं क्रियास्थानं लोभप्रत्ययिकमाख्यायते, [ तद्यथा ]—य इमे वक्ष्यमाणा अरण्ये वसन्त्यारण्यकास्ते

च कन्दमूलफलाहाराः सन्तः केचन वृक्षमूले वसन्ति, केचन 'आवसथेषु' शूद्र( घूड )वा[उटजा]कारेषु गृहेषु, तथाऽपरे ग्रामादिकमुपजीवन्तो ग्रामसमीपे वसन्तीति ग्रामान्तिकाः, क्वचि( कदाचि )त्कार्ये मण्डलप्रवेशादिके रहस्यं येषां ते राहसिकास्ते च 'न बहुसंयताः' न सर्वसावद्यानुष्ठानेभ्यो विरता, एतदुक्तं भवति—न बाहुल्येन त्रसेषु दण्डसमाऽऽरम्भं विदधति, एकेन्द्रियोपजीविनस्त्वविगानेन तापसादयो भवन्ति, तथा 'न बहुविरता' न सर्वेष्वपि प्राणातिपातविरमणादिव्रतेषु वर्त्तन्ते, किन्तु द्रव्यतः कतिपयव्रतवर्त्तिनो, न भावतो, तत्कारणस्य सम्यग्दर्शनस्याभावादित्यभिप्रायः। इत्येतदेवाऽऽविर्भावयितुमाह—'सव्वपाणे'त्यादि, ते ह्यारण्यकादयः सर्वप्राणभूतजीवसत्त्वेभ्य 'आत्मना' स्वतोऽविरताः— तदुपमर्दकादारम्भादविरता इत्यर्थः। ते पाषण्डिका आत्मना बहूनि स(त्य)त्यामृषाभूतानि वाक्यानि 'एवं' वक्ष्यमाणनीत्या विशेषेण प्रयुञ्जन्ति, यदिवा सत्यान्यपि तानि प्राण्युपमर्दकत्वेन मृषाभूतानि स(त्य)त्यामृषाणि, एवं ते प्रयुञ्जन्तीति दर्शयति, तद्यथा—अहं ब्राह्मणत्वान्न हन्तव्योऽन्ये तु शूद्रत्वाद्धन्तव्याः, तथाहि तद्वाक्यं—'शूद्रं व्यापाद्य प्राणायामं +जपेत् किञ्चिद्वा दद्यात्, तथा 'क्षुद्रसत्त्वानामनस्थिकानां शकटभरमपि व्यापाद्य ब्राह्मणं भोजये'दित्यादि, अपरश्चाहं वर्णोत्तमत्वान्न आज्ञापयितव्योऽन्ये तु मत्तोऽवमाः[ ऽधमाः ]ममाज्ञापयितव्याः, तथा नाहं परितापयितव्यः [ अन्ये तु परितापयितव्याः ], तथाऽहं वेतनादिना कर्म्मकरणाय न ग्राह्यः अन्ये तु शूद्रा ग्राह्या × इति। किम्बहुनोक्तेन ? नाहमुपद्रावयितव्यो—न जीविताद्व्यपरोपयितव्योऽन्येत्व( तु )पद्रावयितव्या इति। तदेवं परपीडोपदेशनतोऽतिमूढतयाऽसम्बद्धप्रलापिनामज्ञानावृताना-

+ श्वासप्रश्वासरोधनम्। × मूले ग्रहणसूत्रानन्तरं परितापसूत्रमस्ति।

मातम्मरीणां विषमदृष्टीनां न प्राणातिपातविरतिरूपं व्रतमस्ति, तथा मृषावादादत्तादानविरमणाभावोऽप्यायोज्यः, अधुना त्वनादिभवाभ्यासाद्दुस्त्यजत्वेन प्राधान्यात्स्त्रैणैवात्राधिकृत्याऽऽह–'एवामेवे'त्यादि, 'एवमेव' पूर्वोक्तेनैव कारणेनातिमूढतया परमार्थमजानानास्ते तीर्थिकाः स्त्रीषु कामेषु च शब्दादिषु मूर्च्छिता गृद्धा ग्रथिता अध्युपपन्नाः यावद्वर्षाणि चतुष्पञ्च षड्दशकानि, अयं च मध्यमः कालो गृहीतः, प्रायस्तीर्थिका अतिक्रान्तवयस एव प्रव्रजन्ति, तत्र च ते त्यक्त्वाऽपि गृहवासं भुक्त्वा भोगभोगानिति ते च किल वयं प्रव्रजिता इति वदन्तोऽपि न भोगेभ्यो निवृत्ताः, यतो मिथ्यादृष्टितयाऽज्ञानान्धत्वात्सम्यग्विरतिपरिणामरहिताः, ते चैवम्भूतपरिणामाः स्वायुषः क्षये कालमासे कालं कृत्वा विकृष्टतपसोऽपि सन्तोऽन्यतरेष्वासुरिकेषु किल्बिषिकस्थानेषूत्पादयितारो भवन्ति, ते ह्यज्ञानतपसा मृता अपि किल्बिषिके[षु स्थाने]षूत्पत्स्यन्ते, तस्मादपि स्थानादायुषः क्षयाद्विप्रमुच्यमानाः किल्बिषबहुलास्तत्कर्मशेषेण एलमूकभावेनोत्पद्यन्ते, यथा एडमूकोऽव्यक्तवाग्भवति एवमसावप्यव्यक्तवाक्समुत्पद्यते, तथा 'तमूयत्ताए'त्ति तमस्त्वेन–अत्यन्तान्धतमसत्वेन जात्यान्धतयाऽत्यन्ताज्ञानावृततया [वा] तथा जातिमूकतया-ऽपगतवाच इह प्रत्यागच्छन्तीति। तदेवम्भूतं खलु तीर्थिकानां सावद्यानुष्ठानादनिवृत्तानां तत्प्रत्ययिकं सावद्यं कर्माधीयते, तदेतल्लोभप्रत्ययिकं द्वादशं क्रियास्थानमाख्यातमिति। इत्येवमर्थदण्डादीनि लोभप्रत्ययिकक्रियास्थानपर्यवमानानि द्वादश क्रियास्थानानि + 'द्रविकेण' मुक्तिगमनयोग्येन श्रमणेन माहनेन एतानि 'सम्यग्' यथावस्थितस्वरूपनिरूपणतो मिथ्यादर्शनाऽऽश्रितानि संसारकारणानीति कृत्वा ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहर्त्तव्यानि।

+ "कर्मग्रन्थि द्रावणाद्रवः–संयमः, स विद्यते यस्यासौ द्रविकस्तेन" इति हर्ष०।

आहावरे तेरसमे किरियाठाणे इरियावहिएत्ति आहिज्जति—इह खलु अतत्ताए संवुडस्स अणगारस्स इरियासमियस्स भासासमियस्स एसणासमियस्स आयाणभंडमत्तनिक्खेवणासमियस्स उच्चारपासवणखेलसिंघाणजल्लपारिट्ठावणियासमियस्स, मणसमियस्स वयसामियस्स कायसमियस्स, मणगुत्तस्स वयगुत्तस्स कायगुत्तस्स, गुत्तिंदियस्स गुत्तबंभचारिस्स, आउत्तं गच्छमाणस्स आउत्तं चिट्ठमाणस्स आउत्तं निसियमाणस्स आउत्तं तुयट्टमाणस्स आउत्तं भुंजमाणस्स आउत्तं भासमाणस्स आउत्तं वत्थं पडिग्गहं कंबलं पायपुंछणं गिह्ममाणस्स वा निक्खिवमाणस्स वा जाव चक्खुपम्हनिवायमवि अत्थि वेमाता सुहुमा किरिया इरियावहिया नाम कज्जइ, सा पढमसमए बद्धा पुट्ठा, बितियसमए वेइया, तइयसमए निज्जिण्णा, सा बद्धा पुट्ठा उदीरिया वेइया निज्जिण्णा, सेयकाले अकम्मए यावि भवइ, एवं खलु तस्स तप्पत्तियं सावज्जंति आहिज्जति, तेरसमे किरियाठाणे इरियावहिएत्ति आहिज्ज[ए]ति। *तेरसमे किरियाठाणे इरियावहिएत्ति

* ❀ एतच्चिन्हान्तर्गतो मूलपाठो नास्ति मुद्रितासु सवृत्तिकप्रतिषु हर्षकुलीयदीपिकास्वपि, परमेतद्दीपिकाप्रतिषु सर्वास्वप्यस्ति,

आहि[तिं]ता* । से वेमि जे अतीया जे य पडुप्पन्ना जे य आगामिस्सा अरहंता भगवंता सव्वे ते एयाइं चेव तेरस किरियाठाणाइं भासिंसु वा भासिंति वा भासिस्संति वा, पन्नविंसु वा पन्नविंति वा पन्नविस्संति वा, एवं चेव तेरसमं किरियाठाणं सेविंसु वा सेविंति वा सेविस्संति वा॥ [सू० १४॥]

व्याख्या—अथापरं त्रयोदशं क्रियास्थानमीर्यापथिकं × नामाख्यायते–इह खलु प्रवचने संयमे वा [आत्मनो भाव] आत्मत्वं, तदर्थमात्मत्वार्थं संवृतस्य अनगारस्य ईर्यादिसमितस्य तथा त्रिगुप्तिगुप्तस्य गुप्तेन्द्रियस्य नवब्रह्मचर्यगुप्त्युपेतब्रह्मचारिणश्च सतः, तथोपयुक्तं गच्छतस्तिष्ठतो निषीदतस्त्वग्वर्तनां कुर्वाणस्य, तथोपयुक्तमेव वस्त्रं पतद्ग्रहं कम्बलं पादप्रोञ्छनकं वा गृह्णतो निक्षिपतो वा, यावच्चक्षुःपक्ष्मनिपातमप्युपयुक्तं कुर्वतः सतोऽप्यनुपयुक्तस्याप्यस्ति–विद्यते विविधा मात्रा [विमात्रा], तदेवंविधा सूक्ष्माक्षिपक्ष्मसञ्चलनरूपादिकेर्यापथिका नाम क्रिया केवलिनाऽपि क्रियते, तथाहि–सयोगी जीवो न शक्नोति क्षणमप्येकं निश्चलः स्थातुं, अग्नितात्यमानोदकवत्कार्मणशरीरानुगतः सदा परिवर्त्तमानआस्ते, केवलिनोऽपि

किन्तु सर्वेषामपि क्रियास्थानानामुपसंहारसूत्रवदत्रापि 'आहिज्जती'त्यस्य स्थाने 'आहिते' वा 'आहिए' इति भवितुमर्हतीत्युद्बोधनार्थं लेखकादिभिः पुनरुक्ततया लिखितो भविष्यतीति सम्भावनायां न किमप्ययुक्तत्वं प्रतिभासते । × "ईरणं–ईर्या, तस्यास्तया वा पन्था ईर्यापथः स विद्यते यस्य तदीर्यापथिकं, एतच्च शब्दव्युत्पत्तिनिमित्तं, प्रवृत्तिनिमित्त तु इदं–सर्वत्रोपयुक्तस्य निष्कषायस्य समीक्षितमनोवाक्कायक्रियस्य या[ क्रिया ]तया यत्कर्म तदीर्यापथिकं सैव वा क्रिया ईर्यापथिकम्" इति हर्ष० कुळः ।

सूक्ष्मगात्रसञ्चारा भवन्ति, तया क्रियया यद् बध्यते कर्म तस्य च कर्मणो या अवस्थास्ताः क्रियाः, ता एव दर्शयितुमाह–'सा पढमसमये'त्यादि, याऽमावकषायिणः क्रिया तया यद्बध्यते कर्म, तत्प्रथमसमय एव बद्धं स्पृष्टं चेति कृत्वा तत्क्रियैव बद्धस्पृष्टेत्युक्ता, तथा द्वितीयसमये वेदिता तृतीयसमये निर्जीर्णा, एतदुक्तं भवति–कर्म योगनिमित्तं बध्यते, तत् स्थितिश्च कषायायत्ता तदभावाच्च न तस्य सांपरायिकस्येव स्थितिः, किन्तु योगसद्भावाद्बध्यमानमेव 'स्पृष्टतां' संश्लेषं याति, द्वितीयसमये त्वनुभूयते, तच्च प्रकृतितः सातावेदनीय स्थितितो द्विसमयस्थितिकं अनुभावतः शुभानुभावमनुत्तरोपपातिकदेवसुखातिशायि प्रदेशतो बहुप्रदेशमस्थिरबन्ध बहुव्ययं च। तदेवं सा ईर्यापथिका क्रिया प्रथमसमये बद्धस्पृष्टा द्वितीये समये उदिता वेदिता निर्जीर्णा भवति। 'सेयकाले'त्ति आगामिनि तृतीयसमये तत्कर्मापेक्षया अकर्मतापि च भवति। एवं तावद्वीतरागस्येर्याप्रत्ययिकं कर्म 'आधीयते' सम्बध्यते। तदेतत्त्रयोदशमं क्रियास्थानं व्याख्यातं, ये पुनस्तेभ्योऽन्ये प्राणिनस्तेषां सांपरायिको बन्धः। तेषां त्वीर्यापथवर्जाणि द्वादशक्रियास्थानानि, तेषु( ? ) वर्त्तन्ते, तेषां च तद्वर्तिनामसुमतां मिथ्यात्वाविरतिप्रमादकषाययोगनिमित्तः साम्परायिको बन्धो भवति, स त्वनेकप्रकारस्थितिकः, तद्रहितस्तु केवलयोगप्रत्ययिको द्विसमयस्थितिरेवेर्याप्रत्ययिक इति स्थितम्। एतानि त्रयोदशक्रियास्थानानि न वर्द्धमानस्वामिनैवोक्तानि, किन्त्वन्यैरपीत्येतद्दर्शयितुमाह–'से बेमी'त्यादि, सोऽहं ब्रवीमि–यत्प्रागुक्तं तद्ब्रवीमि इति, तद्यथा—येऽ(र्हन्तोऽ)तिक्रान्ताः, ये च वर्त्तमानाः, ये चागामिनि काले भविष्यन्ति, ते सर्वेऽप्येवं +प्ररूपितवन्तः प्ररूपयन्ति प्ररूपयिष्यन्ति, तथैतदेव त्रयोदशं क्रि॰ -

+ 'अभाषिषुः भाषन्ते भाषिष्यन्ते च। तथा तत्स्वरूपतस्तद्विपाकतश्चे'ति बृहद्वृत्तौ।

स्थानं सेवितवन्तः सेवन्ते सेविष्यन्ते च, यथा हि-जम्बूद्वीपे सूर्यद्वयं तुल्यप्रकाशं भव[तः]ति यथा वा सदृशोपकरणाः प्रदीपास्तुल्यप्रकाशा भवन्त्येवं तीर्थकृतोऽपि निरावरणत्वात्कालत्रयवर्त्तिनोऽपि तुल्योपदेशा भवन्ति ।

साम्प्रतं त्रयोदशसु क्रियास्थानेषु यन्नाभिहितं पापस्थानं तद्विभणिषुराह—

**अदुत्तरं च णं पुरिसविजयविभंगमाइक्खिस्सामि ।**

व्याख्या—अस्मात्त्रयोदशक्रियास्थानप्रतिपादनादुत्तर यदत्र न प्रतिपादितं तदनेन सूत्रसन्दर्भेण प्रतिपाद्यते-पुरुषविजयविभङ्गो* स च विभङ्गवदवधिविपर्ययवद्विभङ्गो ज्ञानविशेषस्तमेवम्भूतं ज्ञानक्रियाविशेषमाख्यास्यामि-प्रतिपादयिष्यामि । यादृशानां चासौ भवति तांल्लेशतः प्रतिपादयितुमाह—

**इह खलु नाणापण्णाणं नाणाछंदाणं नाणासीलाणं नाणादिट्ठीणं नाणारुईणं नाणारंभाणं नाणाज्झवसाणसंजुत्ताणं नाणाविहपावसुयज्झयणं एवं भवइ, तं जहा—**

व्याख्या—इह खलु जगति नानाप्रकारा विचित्रक्षयोपशमात्प्रज्ञा येषां ते नानाप्रज्ञास्तेषां, तथा छन्दो-ऽभिप्रायः,

* " पुरुषा ' विचीयन्ते ' मृग्यन्ते-विज्ञानद्वारेणान्वेष्यन्ते येन स पुरुषविचयः पुरुषविजयो वा-केषाञ्चिदल्पसत्त्वाना तेन ज्ञानलवेनाविधिप्रयुक्तेनानर्थानुबन्धिना विजयादिति " वृहद्वृत्तौ । " विजयो ना[म]मार्गणा, विविधो विशिष्टो वा विभागो-विभङ्गः, तं पुरिसजातविभग आइक्खिस्सामि " इति चूर्णौ ।

स नाना येषां ते तथा, तेषां, नानाशीलानां, तथा नानारूपा दृष्टि-रन्तःकरणप्रवृत्तिर्येषां ते तथा, तेषामिति, तथा नानारुचिर्येषां ते नानारुचयस्तेषां, तथाहि-आहारशयनासनाच्छादनाभरणयानवाहनगीतवादित्रादिषु मध्येऽन्यस्यान्याऽन्यस्यान्या रुचिर्भवति, तेषां नानारुचीनामिति, तथा नानारम्भाणामिति कृषिपाशुपाल्यविपणिशिल्पकर्म्मसेवाद्यन्यतमारम्भेण, तथा नानाऽध्यवसायसंयुतानां शुभाशुभाध्यवसायभाजामिति, इहलोकप्रतिबद्धानां परलोकनिष्पिपासानां विषयतृषितानामिदं नानाविधं पापश्रुताध्ययनं भवति । तद्यथा—

भोमं उप्पायं सुविणं अंतलिक्खं अंगं सरलक्खणं ( लक्खणं ) वंजणं इत्थिलक्खणं पुरिसलक्खणं हयलक्खणं गयलक्खणं गोणलक्खणं मिंढलक्खणं कुक्कडलक्खणं तित्तिरलक्खणं वट्टगलक्खणं लावगलक्खणं चक्कलक्खणं छत्तलक्खणं चम्मलक्खणं दंडलक्खणं असिलक्खणं मणिलक्खणं कागिणिलक्खणं सुभगाकरं दुब्भगाकरं गब्भाकरं मोहणकरं आहव्वणिं पागसासणिं दव्वहोमं खत्त[ खत्तिय ]विज्जं चंदचरियं सूरचरियं सुक्कचरियं वहस्सतिचरियं उक्कापायं दिसादाहं मियचक्कं वायसपरिमंडलं पंसुवुट्ठिं केसवुट्ठिं मंसवुट्ठिं रुहिरवुट्ठिं वेतालिं अद्धवेतालिं ओसोवणिं तालुग्घाडणिं सोवा[ गिं ]गिणिं सावरिं दासलिं कालिंगिं गोरिं गंधारिं उवत्ताणिं उप्पयणिं जंभिणिं

थंभणिं लेसणिं आमयकरणिं विसल्लकरणिं पक्कमणिं अंतद्धाणिं आयमणिं, एवमाइयाओ विज्जाओ अन्नस्स हेउं पउंजंति पाणस्स हेउं पउंजंति वत्थस्स० लेणस्स० सयणस्स० अन्नेसिं वा विरूवरूवाणं कामभोगाणं हेउं पउंजंति, तेरिच्छं ते विज्जं सेवंति, अणारिया विप्पडिवन्ना कालमासे कालं किच्चा, अन्नयराइं आसुरियाइं, किब्बिसियाइं ठाणाइं उववत्तारो भवंति, +ते ततो विप्पमुच्चमाणा भुज्जो एलमूयत्ताए तमअंधयाए पच्चायंति । ( सू० १५ )

व्याख्या—भूमौ भवं भौमं-निर्घातभूकम्पादिकं, उत्पातं-कपिहसितादिकं, स्वप्नं-गजसिंहवृषभादिकं× अंगं-अक्षिबाहुस्फुरणादिक, स्वरलक्षणं-काकस्वरगम्भीरस्वरादिकं, लक्षणं-यवपद्मादिकं, व्यञ्जनं-मषतिलकादि, तथा स्त्रीलक्षणं [ रक्तकरचरणादिकं, एवं ]पुरुषलक्षणादीनां काकिणीरत्नपर्यन्तानां लक्षणप्रतिपादकशास्त्रपरिज्ञानं, तथा मन्त्रविशेषरूपा विद्या, तथाहि-सौभाग्यकरां, दुर्भाग्यकरां, तथा ' गर्भकरां ' गर्भाधानविधायिनीं, मोहकरां-व्यामोहोत्पादिकां, आथर्वणीं-सद्योऽनर्थकारिणीं, तथा ' पाकशासनीं ' इन्द्रजालसंज्ञिकां, तथा नानाविधद्रव्यैः कणवीरपुष्पादिभिः घृतमध्वादिभिर्हवनं, तथा क्षत्रियाणां विद्या धनुर्वेदादिका( तां ), तथा ज्योतिषमधीत्य व्यापारयन्ति, ' चंदचरिय 'मित्यादि, चन्द्रचरित्रं वर्णसंस्थान—

+ नास्ति एतौ शब्दौ सवृत्तिकमुद्रितप्रतिषु । × ' तथाऽऽन्तरीक्षं-अमोघादि ' इति बृहद्वृत्तौ ।

प्रमाणप्रभानक्षत्रयोगराहुग्रहणादिकं, सूर्यचरितं-सूर्यस्य मण्डलपरिमाणराशिपरिभोगोद्योतावकाशराहूपरागादिकं, तथा शुक्रचारो वीथीत्रयप्रचारादिकः, तथा बृहस्पतिचारः [ उदयास्तवर्षफलादि ] शुभाशुभफलप्रदः संवत्सरराशिपरिभोगादिकः, तथोल्कापातदिग्दाहाश्च वायव्यादिषु मण्डलेषु भवन्तः शस्त्राग्निक्षुत्पीडाविधायिनो भवन्ति, तथा मृगशृगालादीनां आरण्यकजीवानां रुतदर्शनग्रामनगरप्रवेशादौ ( या ) शुभाशुभचिन्ता तन्मृगचक्र, तथा वायसादीनां पक्षीणां यत्र स्थानदिक्स्वराश्रयणात् शुभाशुभफलं चिन्त्यते तद्वायसपरिमण्डलं, तथा पांशुकेशमांसरुधिरादिवृष्टयोऽनिष्टफलदा यत्र शास्त्रे चिन्त्यते, तथा विद्या नानाप्रकाराः क्षुद्रकर्मकारिण्यस्ताश्चेमाः-वैताली नाम विद्या नियताक्षरप्रतिबद्धा, सा च किल कतिभिर्जापैर्दण्डमुत्थापयति, तथाऽर्द्धवैताली तमेवोपशमयति, तथाऽवस्वापिनी+प्रमुखाः सर्वा अपि विद्या ज्ञातव्याः । तदेवमादिकाः प्रज्ञप्त्यादिकाश्च गृह्यन्ते, एताश्च पाषण्डिका अविदितपरमार्था गृहस्था वा स्वयूथ्या वा द्रव्यलिङ्गधारिणोऽन्नपानाद्यर्थं प्रयुञ्जन्ति, अन्येषां वा विरूपरूपाणां कामभोगानां कृते प्रयुञ्जन्ति । सामान्येन विद्यासेवनमनर्थकारीति दर्शयितुमाह-'तेरिश्च'मित्यादि, तिरश्चीनां सदनुष्ठानविघातिनीं ते अनार्या विप्रतिपन्ना विद्यां सेवन्ते, यद्यपि ते भाषार्याः क्षेत्रार्यास्तथाप्यनार्यकर्मकारित्वादनार्या एव द्रष्टव्याः । ते च स्वायुषः क्षये कालमासे कालं कृत्वा यदि कथञ्चिद्देवलोकगामिनो भवन्ति, ततोऽन्यतरेष्वासुरीयेषु किल्बिषिकादिस्थानेषूत्पत्स्यन्ते, ततोऽपि विप्रमुक्ता यदि मनुष्येषूत्पद्यन्ते, तत्र च तत्कर्मशेषतया

+ "तालोद्घाटीनी स्वापाकी शाबरी द्राविडी कालिङ्गी गौरी गान्धारी अवपतनी उत्पतनी जम्भिनी स्तम्भिनी श्लेषिणी आमयकारिणी विशल्यकारिणी अन्तर्द्धानकारिणी" इति हर्ष० ।

एडमूकत्वेनाव्यक्तभाषिणस्तमस्त्वेनान्धतया मूकतया वा प्रत्यागच्छन्ति । ततोऽपि नानाप्रकारेषु यातनास्थानेषु नारकतिर्यगादिषूत्पद्यन्ते ।

साम्प्रतं गृहस्थानुद्दिश्याधर्मपक्षासेवनमुच्यते—

से एगइओ आयहेउं वा णायहेउं वा, सयणहेउं वा अगारहेउं वा परिवारहेउं वा नाय[ गं वा ]हेउं वा ( ? ) सहवासियं वा णिस्साए ।

व्याख्या—स एकः कदाचित् कोऽपि गृहस्थः निस्त्रिंशः साम्प्रतापेक्षी अपगतपरलोकभयः कर्मपरतन्त्रः सुखभोगमिच्छन् आत्मनिमित्तं यानि कर्कशानि कर्माणि कुरुते तान्याह–' आयहेउं वा, ' आत्मनिमित्तं, तथा ज्ञातयः स्वजनास्तन्निमित्तं, तथा ' अगारनिमित्तं ' गृहसंस्करणार्थं, सामान्येन वा कुटुम्बाऽर्थं [ वा ] परिवारनिमित्तं दासीदासकर्मकरादिकृते, तथा ज्ञात एव ' ज्ञातकः ' परिचितस्तमुद्दिश्य ' सहवासिकं ' प्रातिवेश्मिकमुद्दिश्य, एतानि वक्ष्यमाणानि कुर्यादिति सम्बन्धः । तानि च दर्शयितुमाह—

अदुवा अणुगामिए १, अदुवा उवचरए २, अदुवा पाडिपहिए ३, अदुवा संधिच्छेदए ४, अदुवा गंठिच्छेदए ५, अदुवा उरब्भिए ६, अदुवा सोयरिए ७, अदुवा वागुरिए ८, अदुवा साउणिए ९, अदुवा मच्छिए १०, अदुवा गोवालए ११, अदुवा गोघायए १२, अदुवा सोवणिए १३, अदुवा

सोतणियंतिए १४ ।

व्याख्या—अथवा 'आनुगामिकः' कश्चिदकार्यकरणाय गच्छति, तमनुगच्छति, अथवा अकार्यकरणाय, अथवाऽपकारकर्त्तर्यपकारकृते विश्रमनाय उपचारको भवति, अथवा तस्य प्रातिपथिको भवति, 'प्रतिपथं' सन्मुखमागच्छति, अथवा स्वजनाद्यर्थं मन्थिच्छेदको ( ग्रन्थिच्छेदकश्चापि ) भवति—चौर्यं प्रतिपद्यते, तथोरभ्रै-र्मेषैश्चरति, औरभ्रिको भवति, [ अथवा सौकरिकः ] अथवा शकुनिभिश्चरति शाकुनिको भवति, अथवा 'वागुरया' मृगाऽदिबन्धनरज्ज्वा चरति रक्षकः ×[ वागुरि ], अथवा मत्स्यैश्चरति मा[त्स्यिकः]च्छिकः, अथवा गोपालभावं प्रतिपद्यते, अथवा गोघातकः स्यात्, अथवा श्वभिश्चरति शौवनिकः—शुनां परिपालको भवति, अथवा मृगयां कुर्वन् श्वभिर्मृगघातं करोति । अथैतानि चतुर्दशस्थानानि आदितो विवृणोति—

से एगतिओ आणुगामियं भावं पडिसंधाय तमेव अणुगामियाणुगामियं हंता छेत्ता भेत्ता लुंपइत्ता विलुंपइत्ता उद्दवइत्ता आहारं आहारेति इति से महया पावेहिं कम्मेहिं अत्ताणं उवक्खाइत्ता भवइ ॥ १ ॥

व्याख्या—तत्रैकः कश्चिदात्माद्यर्थं अपरस्य ग्रामान्तरं गच्छतः किञ्चिद्द्रव्यजातमवगम्य केटके गत्वा अवसरं लब्ध्वा

× मूले शाकुनिकवागुरिकयोः स्थाने वागुरिकशाकुनिकयोरिति व्यत्ययेन निर्देशः ।

तद्द्रव्यं गृहीतुमनाः पथिकं [ दण्डादिभिः ] हन्ता भवति, तथा छेत्ता भवति खड्गादिभिः, तथा भेत्ता [ वज्रमुष्ट्यादिभिः ] लुम्पयिता-केशाकर्षणादिकदर्थनतः, तथा विलुम्पयिताऽत्यन्तं दुःखमुत्पादयति, तथाऽपद्रावयति जीविताद्व्यपरोपयति। तदेवमादिकं कृत्वाऽऽहारमाहारयति, एतदुक्तं भवति-गलकर्त्तकः कश्चिदन्यस्य धनवतोऽनुगामुकभावं प्रतिपद्य तं बहुविधै-रुपायैर्विश्रम्भे पातयित्वा, भोगार्थी-मोहान्ध इहलोकार्थी तस्य धनवतो गलकर्त्तनादिकं कृत्वा तस्य द्रव्यजातमादायाऽऽहारादिकां भोगक्रियां विधत्ते, इत्येवमसौ 'महद्भिः' क्रूरैः 'कर्मभि'रनुष्ठानैर्महापातकभूतैस्तीव्रानुभावैरात्मानमुपख्यापयिता भवति। तथाहि—असौ महापापकारीत्येवमात्मानं ख्यापयति। तथा लोके तद्विपाकाऽऽपादितेनावस्थाविशेषेण नारक-तिर्यगादिगतावात्मानमाख्यापयिता भवति ॥ १ ॥

से एगइओ उवचरगभावं पडिसंधाय तमेव उवचरितं हंता छेत्ता भेत्ता जाव आहारं आहारेति, इति से महया पावेहिं कम्मेहिं अत्ताणं उवक्खाइत्ता भवति ॥ २ ॥

व्याख्या—एकः कश्चिदकर्त्तव्यकारी कस्यापि धनवतो धनं जिघृक्षुः उपचारकभावं प्रतिमन्वाय पश्चात्तं नानाविधै-रुपायैरुपचरति, उपचर्य च विश्रम्भे पातयित्वा तद्द्रव्यार्थी तस्य हन्ता छेत्ता भेत्ता यावदपद्रावयिता भवतीत्येवमसौ [ आत्मानं ] महद्भिः पापैः कर्मभिरुपाख्यापयिता भवतीति ॥ २ ॥

से एगइओ पाडिपहियभावं पडिसंधाय तमेव पाडिपहे ठिच्चा हंता छेत्ता जाव उद्दवइत्ता

आहारं आहारेति इति से महया पावेहिं कम्मेहिं अत्ताणं उवक्खाइत्ता भवति ॥ ३ ॥

व्याख्या—अथैकः कश्चिदागन्तुकस्य पथिकादेर्धनवतः प्रातिपथिकभावं प्रतिपद्यते—सम्मुखं गत्वा प्रच्छन्नो मार्गं बद्ध्वा तिष्ठति, ततः प्रतिपथे स्थित्वा तस्यार्थवतो विश्रम्भतो हन्ता छेत्ता यावदपद्रावयिता भवतीत्येवमसावात्मानं पापैः कर्मभिः ख्यापयतीति ॥ ३ ॥

से एगतिए संधिच्छेदगभावं पडिसंधाय तमेव संधिं छेत्ता भेत्ता जाव इति से महया पावेहिं कम्मेहिं अत्ताणं उवक्खाइत्ता भवति ॥ ४ ॥

व्याख्या—एकः कश्चित्पुरुषो विरूपकर्म्मणा जीवितार्थी 'सन्धिच्छेदकभावं' खत्रखननत्वं प्रतिपद्यते, ततोऽसौ 'सन्धि छिन्दन्' खात्रं खनन् प्राणिनां हन्ता छेत्ता भेत्ता भवतीत्येतच्च कृत्वाऽऽहारमाहारयतीत्येवमसौ महद्भिः पापकर्मभिः संसारे भ्रमति ॥ ४ ॥

से एगतिए गंठिच्छेद[ग]भावं पडिसंधाय तमेव गंठिं छेत्ता भेत्ता जाव इति से महया पावेहिं कम्मेहिं अप्पाणं उवक्खाइत्ता भवति ॥ ५ ॥

व्याख्या—अथ कश्चित्पापकर्मकारी घुर्घुरादिना ग्रन्थिच्छेदकभावं प्रतिपद्य तमेव हन्ता छेत्ता यावत् परद्रव्यमादाय कर्मबन्धं करोति, ततः संसारे पर्यटतीति पूर्ववत् ॥ ५ ॥

से एगतिए उरब्भियभावं पडिसंधाय उरब्भं वा अन्नतरं वा तसं पाणं हंता जाव उवक्खाइत्ता भवइ, एसो अभिलावो सव्वत्थ ६ ।

व्याख्या—कश्चिदधर्म्मवृत्तिः 'औरभ्रिकभावं' औरणिकभावं प्रतिपद्यते, स च औरभ्रिकस्तद्वर्णया तन्मांसादिना वाऽऽत्मानं वर्त्तयति, तदेवमसौ तद्भावं प्रतिपद्य उरभ्रं वा अन्यं वा त्रसं वा (?) प्राणिनं स्वमांसपुष्ट्यर्थं व्यापादयति, तस्य वा हन्ता छेत्ता भवतीति, शेषं पूर्ववत् ॥ ६ ॥

से एगतिए सोयरियभावं पडिसंधाय महिसं वा अन्नयरं वा तसं पाणं हंता जाव उवक्खाइत्ता भवति ॥ ७ ॥

व्याख्या—कश्चित् शौ(व)निक+भावं (शौवनिका)श्चाण्डालाः खाटिकास्तद्भावं प्रतिपद्यते, शेषं पूर्ववत् ॥ ७ ॥

से एगइओ वागुरियभावं पडिसंधाय मियं वा अन्नयरं वा तसं वा पाणं हंता जाव उवक्खाइत्ता भवति ॥ ८ ॥

व्याख्या—कश्चित्पापात्मा 'वागुरिकभावं' लुब्धकत्वं प्रतिपद्य वागुरया मृगं अन्यं वा त्रसं प्राणिनं शशकादिकमात्म-

+ " अत्रान्तरे सौकरिकपदं, तच्च स्वबुद्ध्या व्याख्येय, सौकरिकाः—श्वपचाश्चाण्डालाः खट्टिका इत्यर्थः " इति वृत्तौ ।

पुष्ट्यर्थं स्वजनाद्यर्थं वा व्यापादयति, शेषं पूर्ववत् ॥ ८ ॥

से एगइओ साउणियभावं पडिसंधाय सउणियं वा अन्नयरं वा तसं पाणं हंता जाव उवक्खाइत्ता भवइ ॥ ९ ॥

व्याख्या—कश्चिदधमोपायजीवी 'शकुना' लावकादयस्तैश्चरति, ततश्च तन्मांसाद्यर्थी 'शकुनिं' पक्षिणं [अन्यं वा] तित्तिरादिकं व्यापादयति, शेषं पूर्ववत् ॥ ९ ॥

से एगइओ मच्छियभावं पडिसंधाय मच्छं वा अन्नयरं वा तसं पाणं हंता जाव उवक्खाइत्ता भवति ॥ १० ॥

व्याख्या—कश्चिन्मात्स्यिकभावं प्रतिपद्यते, तद्भावं प्रतिपद्य जलचरजीवान् व्यापादयति, शेषं पूर्ववत् ॥ १० ॥

से एगइओ गोघायगभावं पडिसंधाय गोणं वा अन्नयरं वा तसं पाणं हंता जाव उवक्खाइत्ता भवइ ॥ ११ ॥

व्याख्या—यथा कश्चित्क्रूरकर्मकारी गोघातकभावं प्रतिपद्यते, शेषं पूर्ववत् ॥ ११ ॥

से एगतिओ गोपालगभावं पडिसंधाय तमेव गोणं [ अन्नयरं वा तसं पाणं ] परिजविय

परिजविय हंता जाव उवक्खाइत्ता भवति ॥ १२ ॥

व्याख्या—कश्चित् गोपालकभावमादृत्य 'गोणं' वृषमं गोकुलाद्दालयित्वा 'परिजविय परिजविय' पृथक्कृत्य तस्य हन्ता छेत्ता इत्यादि पूर्ववत् ॥ १२ ॥

से एगतिओ सोवणियभावं पडिसंधाय मणुस्सं [सुणयं] वा अन्नयरं वा तसं पाणं हंता जाव आहारं आहारेति, इति से महया पावेहिं कम्मेहिं अत्ताणं उवक्खाइत्ता भवति ॥ १३ ॥

व्याख्या—कश्चिजघन्यकर्मकारी, सौ[ शौ ]वनिकभावं (–पापर्द्धिभाव प्रतिपद्यते), सारमेयं गृहीत्वा आखेटकक्रियां करोति, तेन मृगशूकरादिक व्यापादयति, शेषं पूर्ववत् ॥ १३ ॥

से एगतिओ सोवणि[यंति]यभावं पडिसंधाय मणुस्सं वा अन्नयरं वा तसं पाणं हंता छेत्ता जाव आहारं आहारेति, इति से महया पावेहिं कम्मेहिं अत्ताणं उवक्खाइत्ता भवति १४। [सू० १६]

व्याख्या—अथैकः कश्चिन्महाक्रूरकर्मकारी अत्यन्तनिस्त्रासी क्रूरसारमेयपालको दुष्ट सारमेयपरिग्रहं प्रतिपद्य मनुष्यं वा कश्चन पथिकं–अभ्यागतमन्यं वा मृगशूकरादिकं त्रसं प्राणिनं हन्ता भवति, तदेवमसौ महाक्रूरकर्मभिरात्मानमुपख्यापयिता भवतीति ॥ १४ ॥ आजीविकार्थे पापकर्म उक्तं, अथ केनापि हेतुना यत्पापं क्रियते तदाह—

संतेगतिया मणुस्सा परिसामज्झाओ उट्ठेत्ता अहमेयं हणामि त्ति कट्टु तित्तिरं वा वट्टगं वा लावगं वा कवोतगं वा कविंजलं वा अन्नयरं वा तसं पाणं हंता जाव उवक्खाइत्ता भवति ॥

व्याख्या—अथैकः कश्चिन्मांसादनेच्छया व्यसनेन क्रीडया कुपितो वा परिषदो मध्यादुत्थायैवम्भूतां प्रतिज्ञां विदध्यात्, यथाऽहमेनं वक्ष्यमाणं प्राणिनं हनिष्यामीति प्रतिज्ञां कृत्वा पश्चात्तित्तिरादिकं हन्ता छेत्ता यावदात्मानं पापेन कर्मणा ख्यापयिता भवतीति । अत्र पूर्वमनपराधक्रुद्धा अभिहिताः, साम्प्रतमपराधक्रुद्धान्दर्शयति—

से एगईओ केणवि आयाणेणं विरुद्धे समाणे, अदुवा खलदाणेणं अदुवा सुराथालएणं गाहावतीण वा गाहावतिपुत्ताण वा सयमेव अगणिकाएणं सस्साइं झामेइ अन्नेण वि अगणिकाएणं सस्साइं झामावेइ अगणिकाएणं सस्साइं झामंतं पि अन्नं समणुजाणति, इति से महया पावेहिं कम्मेहिं अत्ताणं उवक्खाइत्ता भवति ।

व्याख्या—अथैकः कश्चित् प्रकृत्या क्रोधनः केनापि हेतुना कुपितः सन् परस्यापकुर्यात्, तत्र शब्दादानेन केनचिदाक्रुष्टो निन्दितो वा विरुद्ध्येत, रूपादानेन तु बीभत्सं कञ्चन दृष्ट्वाऽपशकुनाध्यवसायेन कुप्येत, गन्धरसादिक स्वादानं सूत्रणैव दर्शयति-[ अथवा ] 'खलस्य' कुथितादिविशिष्टस्य दानं खलके [ खलस्य ]वाऽल्पधान्यादेर्दानं, तेन कुपिताऽथवा

संरायाः 'स्थालकं' कोशकादि तेन विवक्षितलाभाभावात् कुपितो गृहपत्यादेरेतत्कुर्यादित्याह—स्वयमेवाग्निकायेनाग्निना खलकवर्त्तीनि 'शस्यानि' धान्यानि 'ध्मापयेद्' दहेदन्येन वा दाहयेद्दहतो वाऽन्यान्समनुजानीयादित्येवमसौ महापापकर्मभिरात्मानमुपख्यापयिता भवति । साम्प्रतमन्येन प्रकारेण पापोपादानमाह—

से एगइओ केणइ आयाणेणं विरुद्धे समाणे अदुवा खलदाणेणं अदुवा सुराथालएणं गाहावतीण वा गाहावतिपुत्ताण वा उट्टाण वा गोणाण वा घोडगाण वा गद्दभाण वा सयमेव घूराओ कप्पेति अन्नेण वा कप्पावेति कप्पंतं [ पि ] अन्नं समणुजाणाति, इति से महया जाव भवति ।

व्याख्या—अथैकः कश्चित्केनचित् खलदानादिनाऽऽदानेन गृहपत्यादेः कुपितस्तत्सम्बन्धिन उष्ट्रादेः स्वयमेवात्मना-पर्श्वादिना 'घूरिया[ घूरा ]ओ' त्ति जङ्घाः* खलका वा 'कल्पयति' छिनत्ति अन्येन वा छेदयति अन्यं वा छिन्दन्तं समनुजानीते, इत्येवमसावात्मानं पापेन कर्म्मणा उपख्यापयिता भवतीति । किञ्च—

से एगतिओ केणइ आदाणेणं विरुद्धे समाणे अदुवा खलदाणेणं अदुवा सुराथालएणं गाहावतीण वा गाहावतिपुत्ताण वा उट्टसालाओ वा गोणसालाओ वा घोडगसालाओ वा गद्दभ-

* 'ट(ङ्का)ङ्का(?)' इति प्रत्यन्तरे । "जङ्घावयववान्" इति हर्ष० ।

सालाओ वा, कंटगबोंदियाहिं पडिपिहित्ता सयमेव अगणिकाएणं झामेइ अन्नेण वि झामावेति झामंतं पि अन्नं समणुजाणाति, इति से महया पावकम्मेहिं उवक्खाइत्ता भवति ।

व्याख्या—अथैकः कश्चित्केनचिन्निमित्तेन गृहपत्यादेः कुपितस्तत्सम्बन्धीनामुष्ट्रादीनां 'शाला' गृहाणि कण्टकशाखाभिः 'पिधाय' स्थगयित्वा स्वयमेवाग्निकायेन दहेत्, शेषं पूर्ववत् ।

से एगतिओ केणइ आयाणेणं विरुद्धे समाणे अदुवा खलदाणेणं अदुवा सुराथालएणं गाहावतीण वा गाहावतिपुत्ताण वा कुंडलं वा मणिं वा मोत्तियं वा सयमेव अवहरति अन्नेण वि अवहरावेति अवहरंतं[ पि ] अन्नं समणुजाणाति, इति से महया जाव भवति ।

व्याख्या—अथैकः कश्चित्केनचिदादानेन कुपितो गृहपत्यादेः सम्बन्धिकुण्डलादिकं द्रव्यजातं स्वयमेवापहरेदवशिष्टं पूर्ववत् । साम्प्रतं पाषण्डिकोपरि कुपितः सन् यत्कुर्यात्तद्दर्शयति—

से एगइओ केणइ आदाणेणं विरुद्धे समाणे अदुवा खलदाणेणं अदुवा सुराथालएणं समणाणं वा माहणाणं वा छत्तगं वा दंडगं वा भंडगं वा मत्तगं वा लट्ठिगं वा भिसिगं वा चेलगं वा चिलिमिलिगं वा चम्मगं वा चम्मच्छेयणगं वा चम्मकोसियं वा सयमेव अवहरति जाव समणु-

जाणति, इति से महया जाव उवक्खाइत्ता भवति ।

व्याख्या—अथैकः कश्चित्स्वदर्शनानुरागेण वा वादपराजितो वा[ऽन्येन] केनचिन्निमित्तेन वा कुपितः सन्नेतत्कुर्यात्—श्रमणानां शाक्यादीनां माहनानां वा केनचिदादानेन कुपितः सन् दण्डच्छत्रादिक + मुपकरणजातमपहरेत्, अन्येन वा हारयेत् अन्यं वा हरन्त ममनुजानीयादित्यादि पूर्ववत्। एवं तावद्विरोधिनोऽभिहिताः साम्प्रतं इतरेऽभिधीयन्ते—

से एगइओ नो वितिगिंछइ [तं जहा—] गाहावतीण वा गाहावतिपुत्ताण वा सयमेव अगणिकाएणं ओसहीओ झामेति जाव अन्नंपि झामंतं समणुजाणाति, इति[से]महया जाव भवति ।

व्याख्या—कश्चित्पुरुषोऽत्यन्तमूर्खतया नो 'वितिगिंछइ' न स्वचेतसि विमृशते, यथाऽनेन कार्येण कृतेन परलोको महते दुःखाय भविष्यतीति न मीमांसतेऽतिमूर्खत्वात्, मदीयमिदमनुष्ठानं पापानुबन्धीत्येवं न पर्यालोचयति, ततश्च परलोकविरोधिनीक्रियाः कुर्यात्। एतदेवोद्देशतो दर्शयति, [× तद्यथा—गृहपत्यादेर्निर्निमित्तमेव—तत्कोपकरणमन्तरेणैव 'स्वयमेव' आत्मना 'अग्निकायेन' अग्निना 'ओषधीः' शालिव्रीह्यादिकाः 'ध्मापयेद्' दहेत्तथाऽन्येन दाहयेद्दहन्तं च समनु-

+ " भाण्ड किञ्चिद्वस्तु 'मात्रक' पात्र 'लट्ठिं' यष्टिं 'भिसिग' वृषीं आसनमिति यावत् 'चेलक' वस्त्र 'चिलिमिलिगं' प्रच्छादनपटी 'चर्मकं' पादुकादि 'चर्मच्छेदनकं' शस्त्रादि 'चर्मकोशकं' शस्त्रक्षेपकोत्थलकं स्वयमपहरेत्," इति वृ०।

× [ ] एतच्चिन्हान्तर्गतः पाठो नास्ति सर्वास्वपि दीपिकाप्रतिष्वतो वृहद्वृत्तितोऽत्रोद्धृतः।

जानीयादित्यादि ]।

[ से एगइओ णो वितिगिंछइ, ] तं जहा—गाहावईण वा गाहावतिपुत्ताण वा उट्टाण वा गोणाण वा घोडगाण वा गद्दभाण वा सयमेव घूराओ कप्पेति अन्नेण वा कप्पावेति अन्नं पि कप्पंतं समणुजाणाति ॥ १ ॥ से एगतिओ णो वितिगिंछति, तं जहा—गाहावतीण वा गाहावतिपुत्ताण वा उट्टगसालाओ वा जाव गद्दभसालाओ वा कंटगबोंदिया[ हिं ]ए पडिपिहित्ता सयमेव अगणिकाएणं झामेइ जाव समणुजाणाति ॥ २ ॥ से एगतिओ णो वितिगिंछति, तं जहा—गाहावतीण वा गाहावति-पुत्ताण वा कुंडलं वा जाव मोत्तियं वा सयमेव अवहरति जाव समणुजाणाति ॥ ३ ॥ से एगतिओ णो वितिगिंछति, [ तं जहा— ] समणाणं वा माहणाणं वा [छत्तगं वा ] दंडगं वा जाव चम्मच्छेद[ण]गं वा सयमेव अवहरति जाव समणुजाणाति ॥४॥ इति से महया जाव उवक्खाइत्ता भवति।

व्याख्या—एते आलापकाः पूर्ववद् व्याख्येयाः, विशेषस्त्वयं—प्राक्तनेष्वालापकेषु केनापि कारणेन कुपितः सन् पापक्रियाः कुरुते, अत्रालापकेषु निरर्थकं पापं गृह्णाति, अयं विशेषः। साम्प्रतं विपर्यस्तदृष्टय आगाढमिथ्यादृष्टयोऽभिधीयन्ते—

से एगतिओ समणं वा माहणं वा दिस्सा णाणाविहेहिं पावकम्मेहिं अत्ताणं उवक्खाइत्ता भवति।

व्याख्या—अथैकः कश्चिन्मिथ्यादृष्टिरभद्रकः साधुं दृष्ट्वा प्रत्यनीकतया श्रमणादीनां निर्गच्छतां प्रविशतां स्वतश्च निर्गच्छन् प्रविशन् वा नानाविधैः पापोपादानभूतैः कर्मभिरात्मानमुपख्यापयिता भवतीत्येतदेव दर्शयति—

अदुवा णं अच्छराए आफालित्ता भवति अदुवा णं फरुसं वदित्ता भवति कालेण वि से अणुप्पविट्ठस्स असणं वा ४ जाव नो दवावित्ता भवति, जे इमे भवंति वोन्नमंता भारुक्कंता अलसगा वसलया किवणगा समणगा पव्वयंति ।

व्याख्या—अथवेति पक्षान्तरोपग्रहार्थः, कश्चित्साधुदर्शने सति मिथ्यात्वोपहतदृष्टितया अपशकुनोऽयमित्येवं मन्यमानः सन् दृष्टिपथादपसारयन् साधुमुद्दिश्याच्छटयाऽप्सरया-चपुटिकाया आस्फालयिता भवति, अथवा तिरस्कारमापादयन् परुषं वचो ब्रूयात्, तद्यथा-ओदनमुण्ड ! निरर्थककायक्लेशपरायण ! दुर्बुद्धे ! अपसरायतः, ततोऽसौ भ्रुकुटिं विदध्यादसभ्यं वा ब्रूयात्, तथा भिक्षाकालेनापि तस्य भिक्षोरन्येभ्यो भिक्षाचरेभ्योऽनु-पश्चात्प्रविष्टस्य सतोऽतिदुष्टतया अन्नादेर्नो दापयिता भवति अपरञ्च दानोद्यतं निषेधयति, तत्प्रत्यनीकतया एवं ब्रूते-ये इमे पाषण्डिका भवन्ति ते एवम्भूता भवन्तीत्याह-' वोन्नमंत 'त्ति तृणकाष्ठाहारादिकमध[म]र्म(?)कर्म तद्वन्तस्तथा भारेण-कुटुम्ब[भारेण पोट्टलिकादि]भारेण वा'ऽऽक्रान्ताः ' परामग्नाः सुखलिप्सवोऽलसाः-क्रमागतं कुटुम्बं पालयितुमसमर्थाः, ते पाषण्डमाश्रयन्ति, तथा ' वसलग 'त्ति ' वृषला ' अधमाः शूद्रजातयः, तथा 'कृपणाः' क्लीबा अकिञ्चित्कराः श्रमणा भवन्ति, प्रव्रज्यां गृह्णन्तीति ।

ते इणमेव जीवितं धिज्जीवितं संपडिबूहिंति, नाइ ते परलोगस्स अट्ठाए किंचि वि सिलीसंति, ते दुखंति ते सोयंति ते जूरंति ते तिप्पंति ते पिट्टंति ते परितप्पंति ते दुक्खण-सोयण-जूरण-तिप्पण-पिट्टण-परितप्पण-वह-बंधण-परिकिलेसाओ अपडिविरता भवंति। ते महया आरंभेणं ते महया समारंभेणं ते महया [आ]रंभसमारंभेणं विरूवरूवेहिं पावकम्मकिच्चेहिं ओरालाइं माणुस्सगाइं भोगभोगाइं भुंजित्तारो भवंति।

व्याख्या—'ते इणमेवे'त्यादि, ते हि साधुवर्गापवादिनः सद्धर्म्मप्रत्यनीका 'इदमेव जीवितं' परापवादोद्घट्टनजीवितं 'धिग्जीवितं' साधुनिन्दापरायणं कुत्सितजीवितं [सम्प्रतिबृंहन्ति]—एतदेवासद्वृत्तजीवितं प्रशंसन्तीति, ते चेहलोके प्रतिबद्धाः साधुनिन्दाजीविनो मोहान्धाः साधूनपवदन्ति, न च ते साधूनामनुष्ठानं स्वल्पमपि 'श्लिष्यन्ति' समाश्रयन्ति, केवलं ते वचोभिः साधून् 'दुःखयन्ति' पीडामुत्पादयन्ति, तथा तेऽज्ञानान्धास्तत्कुर्वन्ति येनाधिकं शोचन्ते परानपि शोचयन्ति दुर्भाषितादिभिः शोकञ्चोत्पादयन्ति, तथा ते परान् 'जूरयन्ति' गर्हन्ति तथा 'तिप्यन्ति' सुखात् च्यावयन्ति आत्मानं पराँश्च, तथा अपुष्टधर्म्माणः असदनुष्ठानैः स्वतः पीड्यन्ते पराँश्च पीडयन्ति, तथा ते पापेन कर्म्मणा 'परितप्यन्ते' अन्तर्दह्यन्ते पराँश्च परितापयन्ति, तदेवं ते सद्वृत्तेष्वसन्तो दुःखनशोचनादिक्लेशादप्रतिविरताः सदा भवन्ति, एवम्भूताश्च सन्तस्ते महताऽऽरम्भेण महता समारम्भेण प्राणिपरितापनरूपेण तयोभाभ्यामप्यारम्भसमारम्भाभ्यां 'विरूपरूपैश्च' नानाप्रकारैः

सावद्यानुष्ठानैः पापकर्म्मकृत्यैरुदारान्मानुष्यकान् भोगभोगान् [ते] सावद्याऽनुष्ठायिनो भोक्तारो भवन्ति। एतदेव दर्शयति।

तं जहा—अन्नं अन्नकाले पाणं पाणकाले वत्थं वत्थकाले लेणं लेणकाले सयणं सयणकाले, [स]पुव्वावरं च णं ण्हाए कयबलिकम्मे कयकोउयमंगलपायच्छित्ते सिरसा ण्हाए कंठे मालकडे आविद्धमणिसुवण्णे कप्पियमालामउली पडिबद्धसरीरे वग्घारियसोणिसुत्तगमल्लदामकलावे अहतवत्थपरिहिते चंदणो[क्खित्त]किन्नगायसरीरे महतिमहालियाए कूडागारसालाए महति महालयंसि सीहासणंसि इत्थीगुम्मसंपरिवुडे सव्वराइएणं, जोइणा य झियायमाणेणं महया हयनट्टगीयवाइयतंतीतलतालतुडितघणमुइंगपडुप्पवाइयरवेणं ओरालाइं माणुस्सगाइं भोगभोगाइं भुंजमाणे विहरइ।

व्याख्या—तद्यथा–अन्नमन्नकाले यथेप्सितं तस्य पापानुष्ठानात्सम्पद्यते, एवं पानवस्त्रशयनासनादिकमपि यथाकाले सर्वमपि सम्पद्यते, यद्यदा प्रार्थ्यते तत्तदा सम्पद्यते, इत्यभिलषितार्थप्राप्तिमेव लेशतो दर्शयति, तद्यथा–विभूत्या स्नातः तथा कृतं देवतादिनिमित्तं बलिकर्म येन स तथा, तथा कृतानि कौतुकान्यवतारणकादीनि तथा मङ्गलानि–दध्यक्षतचन्दनादीनि तथा दुःस्वप्नप्रतिघातकानि प्रायश्चित्तानि [ येन स ] कृतकौतुकमङ्गलप्रायश्चित्तः, + तथा कल्पितमालामुकु[टी]ट (?) प्रति-

+ तथा " शिरसि स्नातः नानाविधविलेपनावलिप्तश्चे "ति बृहद्वृत्तौ। अत्र वृत्तिकृदभिप्रायेण मूले कतिचित्पदानां प्राक्पश्चाद्भाविवमस्ति।

बद्धशरीरः [ दृढावयवः ], तथा 'वग्घारियं'ति प्रलम्बितं 'श्रोणीसूत्रं' कटिसूत्रं मल्लदामकलापः, × तदेवं स यथोक्त-भूषणभूषितः 'महतिमहालियाए'त्ति विस्तीर्णायां कूटाकारशालायां 'महतिमहालये' विस्तीर्णे सिंहासने समुपविष्टः 'स्त्रीगुल्मेन' युवतिजनेन मार्द्दमवरपरिवारेण 'सम्परिवृतो' वेष्टितः, महता गीतवादित्रतन्त्र्यादिरवेणोदारान् मानुष्य-कान् भोगभोगान् भुञ्जानो विहरति।

तस्स णं एगमवि आणवेमाणस्स जाव चतारि पंच जणा अवुत्ता चेव अब्भुट्ठंति।

व्याख्या—तस्य च प्रयोजने समुत्पन्ने सति एकमपि पुरुषमाज्ञापयतो यावच्चत्वारः पञ्च वा पुरुषाः अनुक्ता एव समुपतिष्ठन्ते, ते च किं कुर्वाणाः ? एतद्वक्ष्यमाणमूचुस्तद्यथा—

भण[ह] देवाणुप्पिया ! किं करेमो ? किं आहरेमो ? किं उवणेमो ? किं उवट्ठे[आचिट्ठा]मो ? किं भे हियं इच्छियं ? किं भे आसगस्स सदाति ?। तमेव पासित्ता अणारिया एवं वदंति—देवे खलु अयं पुरिसे देवसिणाए खलु अयं पुरिसे देवजीवणिज्जे खलु[ अयं ]पुरिसे, अन्नेवि[ य ]णं उवजीवंति, तमेव पासित्ता आरिया वदंति—अभिक्कंतकूरकम्मे खलु अयं पुरिसे, अतिधूते

× "अहतं अखण्डितं वस्त्रं परिहितं येन स तथा, चन्दनेन 'उक्षिप्तं' सिक्तं 'गात्रं शरीरं शरीरावयवा यस्य स तथा, नानाविधविलेपनावलिप्त इत्यर्थः।" इति हर्ष०।

अइयायरक्खे दाहिणगामिए नेरइए कण्हपक्खिए आगमिस्साणं दुल्लहबोहियाए यावि भविस्सइ ।

व्याख्या—भण स्वामिन्नाज्ञापय, धन्या वयं, येन भवताऽप्येवमादिश्यन्ते, किं कुर्म ? इत्यादि सुगमं, यावत् हृदयेप्सितमिति, तथा किञ्च 'भे' युष्माकं 'आस्यकस्य' मुखस्य 'स्वदते' स्वादु प्रतिभाति ? [ अथवा ] यदेव त्वदीयआस्यात् 'श्रवति' निर्गच्छति तदेव वयं कुर्मः । तथा तमेव राजानं तथाक्रीडमानं दृष्ट्वाऽन्येऽनार्याः एवं वदन्ति, तद्यथा—देवः खल्वयं पुरुषस्तथा 'देवस्नातको' देवश्रेष्ठो बहूनामुपजीव्यः । तथा तमेवासदनुष्ठायिनं दृष्ट्वा 'आर्याः' विवेकिनः—सदाचारा एवं ब्रुवते—अभिक्रान्तक्रूरकर्मा खल्वयं पुरुषो, हिंसादिप्रवृत्त इत्यर्थः । तथाऽसौ 'धूयते' रेणुवद्वायुना संसारचक्रवाले भ्राम्यते येन तद्धूतं—कर्म अष्टप्रकारं यस्य सोऽतिधूतः, तथा अतीवात्मनः पापैः कर्मभिः रक्षा यस्य स आत्मरक्षः, संसारे बहुभिः पापकर्मभिः बहुकालं स्थास्यतीति भावः, तथा दक्षिणदिग्गामी, यो हि क्रूरकर्मा साधुनिन्दापरायणः साधुदाननिषेधकः स दक्षिणदिग्गामुको भवति, दाक्षिणात्येषु नरकतिर्यङ्मनुष्याऽमरेषूत्पद्यते, 'नेरइए'त्यादि, नरकेषु भवो नारकः, तथा कृष्णपाक्षिकः×, इदमुक्तं भवति—प्रायेण दिक्षु मध्ये दक्षिणा दिगप्रशस्ता, गतिषु नरकगतिः, पक्षयोः कृष्णपक्षः, तदस्य साधुप्रद्वेषमतेर्दानान्तरायविधायिनो दिगादिकं सर्वमप्रशस्तं दर्शितं, अन्यदपि यदप्रशस्तं गत्यादिकमबोधिलाभादिकं तद्योजनीयमस्येति । एतद्विपरीतस्य साधुप्रशंसावतः सदनुष्ठानपरस्य अदक्षिणगामुकत्वं सुदेवत्वं शुक्लपाक्षिकत्वं सुमानुषायातस्य सुलभबोधित्वमित्येवमादिकं सद्धर्मानुष्ठायिनो भवतीति । साम्प्रतमुपसंजिघृक्षुराह—

× " तथा आगामिनि काले नरकादुद्वृत्तो दुर्लभबोधिकश्चायं बाहुल्येन भविष्यति " इति बृहद्वृत्तौ ।

इच्चेयस्स ठाणस्स उट्ठिया वेगे अभिगि[ज्झं]ह्मंति, अणुट्ठिया वेगे अभिगि[ज्झं]ह्मंति, अभिझंझाउरा अभिगि( ज्झं )ह्मंति, एस ठाणे अणारिए अकेवले अपडिपुन्ने अणेयाउए असंसुद्धे असल्लगत्तणे असिद्धिमग्गे अमुत्तिमग्गे अनिव्वाणमग्गे अनिज्जाणमग्गे असव्वदुक्खप्पहीणमग्गे। एगंतमिच्छे असाहू, एस खलु पढम(स्स) ठाणस्स अधम्मपक्खस्स विभंगे एवमाहि[ए]ज्जति ( सू० १७ )

व्याख्या—इत्येतस्य पूर्वोक्तस्य स्थानस्यैश्वर्यलक्षणस्य शृङ्गारमूलस्य साँमारिकस्य परित्यागबुद्ध्या 'एके' केचन विपर्यस्तमतयः पापण्डिकोत्थानेनोत्थिताः परमार्थमजानाना 'अभिगिज्झंति 'त्ति आभिमुख्येन लुभ्यन्ते-लोभवशगा भवन्तीत्यर्थः। तथा 'एके' केचन साम्प्रतेक्षिणस्तस्मात्स्थानादनुपस्थिता गृहस्था एव सन्तः 'अभिझंझ 'त्ति, झञ्झा-तृष्णा, तदातुराः सन्तोऽर्थेषु अत्यन्तं लुभ्यन्ते, अतो ह्येतत्स्थानमनार्यं महापुरुषैरनाचीर्णं, तथा 'अकेवलियं' अशुद्धमिति, अस्मिन् स्थाने न केवलज्ञानावाप्तिरिति भावः। तथाऽपरिपूर्णमितरपुरुषाचीर्णत्वात्तथा सद्गुणविरहात्तुच्छं, तथाऽनैयायिकं-न्यायमार्गाद्बहिः, [ असंशुद्धं-समलं ] तथा 'असल्लगत्तणं' ( असल्लगत्वं- ) इन्द्रियासंवरणरूपं अथवा न शल्यकर्त्तनं, न सिद्धिमार्गः, तथाऽशेषकर्मक्षयलक्षणायाः मुक्तेर्न मार्गस्तथा अनिर्वाणमार्गः, तथा अनिर्याणमार्गस्तथा न सर्वदुःखानां प्रक्षीणमार्गः। कुत एवम्भूतं तत्स्थानं ? इत्याशङ्क्याह—एतत्स्थानमनार्यमेकान्तेन मिथ्यात्वरूपं, अत एव असाधुः, असदाचारत्वान्न ह्ययं सत्पुरुषसेवितः पन्था, येनास्मिन्मार्गे विषयान्धाः प्रवर्त्तन्ते, एतावताऽयं प्रथम[स्य] स्थान-

स्याधर्मपक्षस्य पापोपादानभूतस्य ' विभङ्गो ' विशेषः स्वरूपमिति । साम्प्रतं द्वितीयं धर्मोपादानभूत पक्षमाश्रित्याह—

अहावरे दोच्चस्स ठाणस्स धम्मपक्खस्स विभंगे एवमाहिज्जति—इह खलु पाईणं वा पडीणं वा उदीणं वा दाहिणं वा संतेगइया मणुस्सा भवंति, तं जहा—आरिया वेगे अणारिया वेगे उच्चागोया वेगे नीयागोया वेगे कायमंता वेगे हस्समंता वेगे सुवन्ना वेगे दुवन्ना वेगे सुरूवा वेगे दुरूवा वेगे, तेसिं च णं खेत्तवत्थूणि परिगहियाइं भवंति, एसो आलावगो जहा पुंडरीए तहा नेयव्वो, जाव सव्वओ (वसंता)सव्व(त्ताए)याओ (?) परिनिवुडे त्ति बेमि, एस ठाणे आरिए केवले जाव सव्वदुक्खप्पहीणमग्गे एगंतसम्मे साहू दोच्चस्स ठाणगस्स धम्मपक्खस्स विभंगे एवमाहिते ॥ ( सू० १८ ) ॥

व्याख्या—अयमालापकः सुगम एव, यथा पुण्डरीकाध्ययने तथेहापि सर्वं निरवशेषं भणितव्यं, यावत्ते ' एवं ' पूर्वोक्तेन प्रकारेण सर्वेभ्यः पापस्थानेभ्य उपशान्ताः, तथा अत एव सर्वात्मतया परिनिर्वृता इत्यहमेवं ब्रवीमि । तदेनमेतत्स्थानं कैवलिकं प्रतिपूर्णं नैयायिकमित्यादि प्राग्वद्विपर्ययेण नेयं, यावद्द्वितीयस्य स्थानस्य धार्मिकस्यैव ' विभङ्गः ' स्वरूपव्याख्यानमिति । साम्प्रतं धर्माधर्मयुक्तं तृतीयस्थानमाश्रित्याह—

अहावरे तच्चस्स ठाणस्स मीसगस्स विभंगे एवमाहिज्जति—जे इमे भवंति आरण्णिया आव-

सहिया गामणियंतिया कहूणुई राहस्सिया, जाव ते तओ विप्पमुच्चमाणा भुज्जो २ एलमूयत्ताए [ तमूत्ताए ] पच्चायंति। एस ठाणे अणारिए अकेवलिए जाव असव्वदुक्खप्पहीणमग्गे एगंतमिच्छे असाहू, एस खलु तच्चस्स ठाणस्स मीसगस्स विभङ्गे एवमाहिते ॥ [ सू० १९ ]

व्याख्या—अथापरस्य तृतीयस्य स्थानकस्य मिश्राख्यस्य विभङ्गः-स्वरूपमाख्यायते, अत्राधर्म्मपक्षेण युक्तो धर्म्मपक्षो मिश्र इत्युच्यते, तत्राधर्मस्य प्राचुर्यादधर्मपक्ष एव द्रष्टव्यः, एतदुक्तं भवति-यद्यपि मिथ्यादृष्टयः काश्चित्तथाप्रकारां प्राणातिपातादिनिवृत्तिं कुर्वन्ति तथाप्याशयाविशुद्धत्वात् अभिनवे पित्तोदये सति शर्करामिश्रक्षीरपानवदूषरप्रदेशवृष्टिवद्विवक्षितकार्यासाधकत्वान्निरर्थकतामापद्यते, तथा मिथ्यात्वानुभवान्मिश्रपक्षोऽप्यधर्मपक्ष एवात्रगन्तव्यः। [ए]तदेव दर्शयितुमाह-ये इमे आरण्यिकाः-कन्दमूलफलाशिनस्तापसाः वनवासिनो, ये च आवसथिकाः-गृहिणस्ते च कुतश्चित्पापस्थानान्निवृत्ता अपि प्रबलमिथ्यात्वोपहतबुद्धयः, ते च यद्युपवासादिना महता कायक्लेशेन देवगतयः केचन भवन्ति, तथापि ते आसुरीयेषु स्थानेषु किल्बिषिकेषु उत्पद्यन्ते, इत्यादि सर्वं पूर्वोक्तं भणनीयं, यावत्ततश्च्युता मनुष्यभवं प्रत्यायाता एलकमूकत्वेन तमोऽन्धतया जायन्ते, तदेवमेतत्स्थानमनार्यं अकेवलं-असम्पूर्णं अनैयायिकमित्यादि यावदेकान्तमिथ्याभूतं सर्वथैवैतदसाध्विति तृतीयस्थानस्य मिश्रस्यायं 'विभङ्गः-स्वरूपमाख्यातमिति। उक्तान्यधर्म्मधर्ममिश्रस्थानानि, साम्प्रतं तदेव विशेषेण कथयति-

अहावरे पढम[स्स] ठाणस्स अहम्मपक्खस्स विभंगे एवमाहिज्जति, इह खलु पाइणं वा ४

संतेगतिया मणुस्सा भवंति–[गिहत्था] महेच्छा महारंभा महापरिग्गहा अधम्मिया अधम्माणु-[ण्णा]या अधम्मिट्ठा अहम्मक्खाई अहम्म[पायजीविणो]जीवी अहम्मपलोई अहम्मपलज्जणा अहम्मसीलसमुदायारा अहम्मेणं चेव वित्तिं कप्पेमाणा विहरंति ।

व्याख्या—अथापरोऽन्यः प्रथमस्य स्थानस्य अधर्म्मपक्षस्य 'विभङ्गो' विभाग एवमाख्यायते, इह खलु मनुष्या एवंस्वभावा भवन्तीति, एते च प्रायो गृहस्था एव भवन्तीत्याह 'गिहत्था' (इत्यादि०) । 'महेच्छा' महती–राज्यविभवपरिवारादिका सर्वातिशायिनी 'इच्छा' मनःप्रवृत्तिर्येषां ते महेच्छाः, तथा महारम्भाः–कृषिकरणादिभ्योऽविरताः, तथा महापरिग्रहाः–द्विपदचतुष्पदधनधान्यादिपरिग्रहोपेताः, अत एवाधार्मिकाः, तथाऽधर्म्मिष्ठा–निस्त्रिंशकर्म्मकारित्वादधर्म्मबहुलाः, तथाऽधर्म्मे कर्त्तव्ये 'अनुज्ञा' अनुमोदनं येषां ते अधर्म्मानुज्ञाः, एवमधर्म्ममाख्यातुं शीलं येषां ते तथा, [एवमधर्मप्रायजीविनः] । एवमधर्म्ममेव प्रलोकितुं शील येषां ते अधर्म्मप्रलोकिनः, तथाऽधर्म्मप्रायेषु कर्मसु प्रकर्षेण रज्यन्त इत्यधर्म्म[प्र]रक्ताः, तथाऽधर्म्मशीला-अधर्म्मस्वभावा, तथाऽधर्म्मात्मकः समुदाचारो–यत्किञ्चनानुष्ठानं येषां ते अधर्मशीलसमुदाचाराः, तथा 'अधर्म्मेण' पापेन 'वृत्ति'र्निर्वाहो येषां ते तथा, एवंविधाः विहरन्तः कालमतिनाहयन्ति । पापानुष्ठानमेव लेशतो दर्शयितुमाह—

हण छिंद भिंद विगत्तगा लोहितपाणी चंडा रुद्दा खुद्दा साहस्सिया उकुंचणवंचणमायानिय-

डिकूडकवडसातिसंपओगबहुला दुस्सीला दुव्वता दुप्पडियाणंदा असाहू सव्वाओ पाणाइवायाओ
अप्पडिविरया जावज्जीवाए जाव सव्वाओ परिग्गहाओ अप्पडिविरया जावज्जीवाए, सव्वाओ कोहाओ
जाव मिच्छादंसणसल्लाओ अप्पडिविरया, सव्वाओ ण्हाणुमद्दणवण्ण[ग]गंधविलेवणसद्दफरिसरस-
रूवगंधमल्लालंकाराओ अप्पडिविरता जावज्जीवाए, सव्वाओ सगडरहजाणजुग्गगिल्लिथिल्लिसीयासंद-
माणियासयणासणजाणवाहणभोगभोयणपवित्थरविहीओ अप्पडिविरया जावज्जीवाए, सव्वाओ
कयविक्कयमासद्धमासरूवगसंववहाराओ अप्पडिविरया [ जावज्जीवाए ], सव्वाओ हिरण्णसुवण्ण-
धणधन्नमणिमोत्तियसंखसिलप्पवालाओ अप्पडिविरया [ जावज्जीवाए ], सव्वाओ कूडतुलकूड-
माणाओ अप्पडिविरया [ जावज्जीवाए ], सव्वाओ आरंभसमारंभाओ अप्पडिविरया [ जाव-
ज्जीवाए ], सव्वाओ करणकारावणाओ अप्पडिविरया जावज्जीवाए, सव्वाओ पयणपयावणाओ अप्प-
डिविरया [ जावज्जीवाए ], सव्वाओ कुट्टणपिट्टणतज्जणताडणवहबंध[ण]परिकिलेसाओ अप्पडिविरता
जावज्जीवाए, जेआवण्णे तहप्पगारा सावज्जा अबोहिता कम्मंता परपाणपरितावणकरा जे

अणारिएहिं कज्जंति, ततो वि अप्पडिविरया जावज्जीवाए—

व्याख्या—ते अनार्याः स्वत एव हननादिकाः क्रियाः कुर्वाणा अपरेषामपि एवमेवोपदेशं ददति। तत्र हननं दण्डादिभिस्तत्कारयन्ति। तथा छिन्धि कर्णादिकं, भिन्धि शूलादिना 'विकर्त्तकाः' प्राणिनां चर्मापनेतारः अत एव लोहितपाणयः, तथा [चण्डाः]। 'रौद्रा'निस्त्रिंशाः, क्षुद्राः क्षुद्रकर्मकारित्वात्, तथा साहसिकाः असमीक्षितकारित्वात्, तथोत्कुञ्चनवञ्चनमायानिकृतिकूटकपटादिभिः सहातिसम्प्रयोगो—गार्द्ध्यं, तेन बहुलास्तत्प्रचुराः, एते चोत्कुञ्चनादयो मायापर्यायाः, इन्द्रशक्रादिवत् कथञ्चित्क्रियाभेदेऽपि द्रष्टव्याः +। तथा दुःशीलाश्चिरमुपचरिता अपि क्षिप्रं विसंवदन्ति, दुःखानुनेयदारुणस्वभावा इत्यर्थः। तथा दुष्टव्रताः माँसभक्षणव्रतकालममासौ प्रभूततरसत्त्वोपघातेन माँसप्रदानं, अन्यदपि नक्तभोजनादिकं दुष्टव्रतमिति, तथा दुःखेन प्रत्यानन्द्यन्ते [हर्षं प्राप्यन्ते] दुष्प्रत्यानन्दा, दुराराध्या इत्यर्थः, उपकारेऽपि दोषमेव गृह्णन्ति, यत एवमतोऽसाधवस्ते, पापकर्मकारित्वात्, तथा यावज्जीवतया सर्वस्मादपि प्राणातिपातादविरताः, लोकनिन्दनीयात् स्त्रीहत्याबालब्राह्मणऋषिघातादेरप्यविरताः, एवं मृषावादादत्तादानमैथुनपरिग्रहक्रोधमानमायालोभप्रेमद्वेषकलहाभ्याख्यानपैशून्यपरपरिवादरत्य-

+ "तत्र शूलाद्यारोपणार्थमूर्ध्वं कुञ्चनमुत्कुञ्चनं। वञ्चनं—प्रतारणं, यथाऽभयकुमारः प्रद्योतगणिकाभिर्धर्मवञ्चनया वञ्चितः। माया—वञ्चनबुद्धिः, प्रायो वणिजामिव। निकृतिस्तु वक्रवृत्त्या देशभाषादिविपर्ययकरणं। कूट तुलामानादेर्न्यूनाधिककरणं। कपट—यथाऽऽषाढभूतिना वेषपरावृत्त्याऽऽचार्योपाध्यायसङ्घाटकारमार्थं वारंवारं मोदका लब्धाः।" इति हर्ष०।

रतिमायामृषामिथ्यादर्शनशल्यादिभ्योऽसदनुष्ठानेभ्यो यावज्जीवयाऽप्रतिविरता भवन्तीति, तथा सर्वस्मात् स्नानोद्वर्त्तनवर्णकविलेपनशब्दस्पर्शरूपरसगन्धमाल्याऽलङ्कारात्—कामाङ्गान् मोहजनितादप्रतिविरताः यावज्जीवया, तथा सर्वतः शकटरथादेर्यानविशेषादिकात् प्रविस्तरविधेः परिकररूपात् परिग्रहादप्रतिविरताः, तदेवमन्यस्मादपि वस्त्रादेः परिग्रहादुपकरणभूतादविरतास्तथा 'सर्वतः' सर्वस्मात् क्रयविक्रयाभ्यां करणभूताभ्यां यो माषकार्द्धमाषकरूपककार्षापणादिभिः पण्यविनिमयात्मकः संव्यवहारस्तस्मादविरताः, यावज्जीवयेति, तथा 'सर्वतः' सर्वस्मात् हिरण्यसुवर्णादेः प्रधानपरिग्रहादविरतास्तथा कूटतुलकूटमानादेरविरताः, तथा सर्वतः कृषिपाशुपाल्यादेर्यत् स्वतः करणं अन्येन यत्किञ्चित्कारयन्ति तस्मादविरतास्तथा पचनपाचनतस्तथा खण्डनकुट्टनपिट्टनतर्जनताडनवधबन्धनादिना यः परिक्लेशः प्राणिनां तस्मादविरताः। साम्प्रतमुपसंहरति—ये चान्ये तथाप्रकाराः परपीडाकारिणः सावद्याः कर्म्मसमारम्भाः 'अबोधिकाः' बोधिलाभविघातिनः, तथा [परप्राण]परितापनकराः गोग्राहबन्दीग्रहग्रामघातात्मकाः, ये अनार्य्यैः क्रियन्ते, ततोऽप्रतिविरताः यावज्जीवयेति। पुनरन्यथा बहुप्रकारमधार्म्मिकपदं प्रतिपिपादयिषुराह—

से जहा नामए केइ पुरिसे कलममसूरतिलमुग्गमासणिप्फावकुलत्थआलिसंदगपलिमंथगमादिएहिं अयते कूरे मिच्छादंडं पउंजंति, एवामेव तहप्पगारे पुरिसजाए तित्तिरवट्टगलावगकपोतकविंजलमियमहिसवराहगाहगोहकुम्मसिरीसिवमादिएहिं अयते कूरे मिच्छादंडं पउंजंति,

जावि य से बाहिरिया परिसा भवति, तं जहा—

व्याख्या—यथा नाम अस्मिन् विचित्रे संसारे केचनैवम्भूताः पुरुषाः, ये कलममसूरतिलमुद्गादिषु पचनपाचनादिकया क्रियया स्वपरार्थमयताः क्रूराः मिथ्यादण्डं प्रयुञ्जन्ति, निरपराधेष्वपि मिथ्यादण्डं विदधति, तथैवमेव निष्प्रयोजनं तथाप्रकाराः पुरुषा निर्दयाः जीवोपघातनिरतास्तित्तिरवर्त्तकलावकादिषु जीवनप्रियेषु प्राणिषु अयताः—क्रूरकर्माणो नराः, मिथ्यादण्डं प्रयुञ्जन्ति, तेषां क्रूरधिया "यथा राजा तथा प्रजा" इति वचनात् परिवारोऽपि तथाभूत एव क्रूरो भवतीति, तथा दर्शयितुमाह—'जावि य से' इत्यादि, यापि च तेषां बाह्या पर्षद्भवति, तद्यथा—

दासेइ वा पेसेइ वा भयएति वा भाइल्लेति वा कम्मकरएति वा भोगपुरिसेति वा, तेसिंपि य णं अन्नयरंसि वा अहालहुगंसि अवराहंसि सयमेव गरुयं दंडं निव्वत्तेति । तं जहा—इमं दंडेह इमं मुंडेह इमं तज्जेह इमं तालेह इमं अंडुयबंधणं करेह इमं नियडबंधणं करेह इमं हडिबंधणं करेह इमं चारगबंधणं करेह, इमं नियलजुयलसंकोडियमोडियं करेह, इमं हत्थछिन्नयं करेह इमं पायछिन्नयं करेह इमं कन्नछिन्नयं करेह इमं नक्कउट्ठसीसमुखछिन्नयं करेह, वेयगच्छहियं अंगच्छहियं पक्फोडियप [ पक्खाफोडि ] यं करेह इमं नयणुप्पाडियं करेह दसणवसण-

जिब्भुप्पाडियं करेह, उल्लंबियं ऊ[घ]सियं करेह घोलियं करेह सूलाइयं करेह [सूला]भिन्नयं खारवत्तियं दब्भवत्तियं करेह सीहपुच्छियगं करेह वसहपुच्छियगं करेह दवग्गिदड्ढ(यं)गं कागिणिमंसखावियंगं भत्तपाणनिरुद्धगं इमं जावज्जीवं वहबंधणं करेह इमं अन्नयरेणं असुभेणं कुमारेणं मारेह—

व्याख्या—दासः 'प्रेष्यः' प्रेषणयोग्यो 'भृतको' वेतनेनोदकाद्यानयनविधायी, तथा भागिको यः षष्ठांशादिलाभेन कृष्यादौ व्याप्रियते, तथा कर्म्मकरः प्रतीतः [तथा नायकाश्रितः कश्चिद्भोगपरः], तदेवं ते दासादयोऽन्य( तरस्मिन् ? )स्य लघावप्यपराधे शब्दाश्रवणादिके गुरुतर दण्डं प्रयुञ्जन्ति प्रयोजयन्ति च। स च नायकस्तेषां दासादीनां बाह्यपर्षद्भूतानामन्य[तर]स्मिंल्लघावप्यपराधे शब्दाश्रवणादिके गुरुतरं दण्डं-प्रयुंक्ते, तद्यथा-इमं दासं सर्वस्वापहारेण दण्डयत यूयमित्यादिसूत्रसिद्धं यावदिममन्यतरेणाशुभेन कुत्सितमारेण व्यापादयत यूयं।

जावि य से अब्भिंतरिया परिसा भवति, तं जहा—मायाति वा पिताति वा भायाति वा। भइणीति वा भज्जाइ वा पुत्ताइ वा सुण्हाइ वा धूयाइ वा, तेसिं पि य णं अन्नयरंसि अहालहुगंसि अवराहंसि सयमेव गरुयं दंडं निवत्तेइ, सीओदगवियडंसि उच्छोलित्ता भवइ जहा मित्तदोसवत्तिए

[जाव] अहिए परंसि लोगंसि, ते दुखंति सोयंति जूरंति तिप्पंति पिट्टंति परितप्पंति, ते दुक्खण-सोयणजूरणतिप्पणापिट्टणपरितावणवहबंधणपरिकिलेसाओ अप्पडिविरया भवंति ।

व्याख्या—याऽपि च क्रूरकर्मवतामभ्यन्तरा पर्षद्भवति, तद्यथा–मातापित्रादिका, मित्रदोषप्रत्ययिकक्रियास्थानवन्नेयं यावदहितोऽ[यम]स्मिल्लोके इति, तथाहि–आत्मनोऽपथ्यकारी परस्मिल्लोके, तदेवं ते मातापित्रादीनां स्वल्पापराधिनामपि गुरुतरदण्डापादनतो दुःखमुत्पादयन्ति तथा नानाविधैरुपायैस्तेषां शोकमुत्पादयन्तीत्येवं प्राणिनां बहुप्रकारपीडोत्पादका यावद्वधबन्ध(न)परिक्लेशादप्रतिविरता भवन्ति । ते च विषयासक्ततयैतत्कुर्वन्तीत्येतद्दर्शयितुमाह—

एवामेव ते इत्थिकामेहिं मुच्छिया गिद्धा गढिया अज्झोववन्ना जाव वासाइं चउपंचमाइं छद्दसमाइं वा अप्पतरो वा भुज्जतरो वा कालं भुंजित्तु (भोग)भोगाइं परामु[पविसु]इत्ता वेरायतणाइं संचिणित्ता बहूइं कूराइं कम्माइं ओसन्नाइं संभा(रकडेण)रेणं कम्मेण, से जहा नामए अयगोलेति वा सेलगोलेति वा उदगंसि पखित्ते समाणे उदगतलमतिवइत्ता अहे धरणितलपइट्ठाणे भवइ, एवमेव तहप्पगारे पुरिसजाए वज्जबहुले धूतबहुले पंकबहुले वेरबहुले अयसबहुले अप्पत्तिय० दंभ० नियडि० सादिबहुले ओसन्नतसपाणघाती कालमासे कालं किच्चा धरणितलमतिवइत्ता

अहे णरगतलपइट्ठाणे भवति ( सू० २० ) ॥

व्याख्या—एवमेव पूर्वोक्तस्वभावा, एवं ते निष्कृपा निरनुक्रोशा बाह्याभ्यन्तरपर्षदोऽपि कर्णनाशाविकर्तनादिना दण्डपातनस्वभावाः स्त्रीप्रधानाः कामास्तेषु मूर्च्छिता गृद्धा ग्रथिता अभ्युपपन्नाः, ते च ते भोगासक्ता व्यपगतपरलोकभयाः यावद्वर्षाणि चतुःपञ्च षट्सप्त वा दश वाऽल्पतरं वा प्रभूततरं वा कालं भुक्त्वा भोगभोगान् तथा परपीडोत्पादनतो वैराऽनुबन्धान् प्रविसूयो-त्पाद्य तथा सञ्चयित्वा 'बहूनि' प्रभूततरकालस्थितिकानि 'क्रूराणि' दारुणानि नरकादिषु यातना-स्थानेषु क्रकचपाटनतप्तत्रपुपानात्मकानि कर्म्माण्यष्टप्रकाराणि बद्धस्पृष्टनिधत्तनिकाचनावस्थानि विधाय तेन च सम्भार-कृतेन कर्म्मणा प्रेर्यमाणास्तत्कर्मगुरवो वा नरकतलप्रतिष्ठाना भवन्ति । अस्मिन्नर्थे सर्वलोकप्रतीतं दृष्टान्तमाह–'से जहा नामए अयगोले' इत्यादि, तद्यथा नाम 'अयोगोलको' लोहगोलक [ शिलागोलको–वृत्ताश्मशकलं वा ] उदके प्रक्षिप्तः सन् सलिलतलमतिवर्त्या–तिलङ्घ्याऽधोधरणितलप्रतिष्ठानो भवति । अथ दार्ष्टान्तिकमाह–'एवमेवे'त्यादि, यथा-ऽसावयोगोलकः शीघ्रमेवाधो यात्येवमेव तथाप्रकारः पुरुषजातः, तमेव लेशतो दर्शयति–'वज्रबहुलो' वज्रवद्गुरुत्वात्कर्म, तद्बहुलः, बद्ध्यमानकर्मगुरुः, तथा धूयत इति [ धूत– ] प्राग्बद्धं कर्म्म, तत्प्रचुरः, तथा 'पङ्कं' पापं तद्बहुलः, तथा वैर-बहुलः, तथा 'अप्पत्तियं'ति अप्रत्ययबहुलः, तथा 'मायाबहुलः' कपटबहुलः, तथा निकृति–र्माया वेषभाषापरावृत्ति-च्छद्मना परद्रोहबुद्धिस्तन्मयः, तथा सातिबहुलः, हीनद्रव्यस्य सातिशयेन द्रव्येण संयोजनं सातिस्तद्बहुलः–तत्करणप्रचुरः, तथा अयशो बहुलः, स एवम्भूतः पुरुषः कालमासे कालं कृत्वा नरकतलप्रतिष्ठानो भवति ।

अथ नरकस्वरूपं निरूपयति—

ते णं णरगा अंतो वट्टा बाहिं चउरंसा अहे खुरप्पसंठाणसंठिता निच्चंधकारतमसा ववगयगहचंदसूरनक्खत्तजोइसप्पहा मेदवसामंसरुहिरपूयपडलचिक्खिल्ललित्ताणुलेवणतला असुई विस्सा परमदुब्भिगंधा कण्हा अगणिवण्णाभा कक्खडफासा दुरुहियासा असुभा णरगा असुभा नरएसु वेदणाओ । नो चेव णं नरएसु नेरइया निद्दायंति वा पयलायंति वा सुइं वा रतिं वा धितिं वा मतिं वा उवलभंति, ते णं तत्थ उज्जलं विउलं पगाढं कडुयं कक्कसं चंडं दुक्खं दुग्गं तिव्वं दुरहियासं निरयवेयणं पच्चणुभवमाणा विहरंति ॥ ( सू० २१ )

व्याख्या—' ते णं नरगा ' इत्यादि, ते नरकाः सीमन्तकादयः, बाहुल्यमङ्गीकृत्यान्तर्मध्ये वृत्ता बहिरपि चतुरस्राः [ अधश्च क्षुरप्रसंस्थानसंस्थिताः × ] नित्यान्धकारतमसाः—मेघच्छन्नाम्बरतलकृष्णपक्षरजनीवत्तमोबहुलाः, तथा व्यपगतश्चन्द्रसूर्यग्रहनक्षत्रज्योतिष्पथो येषां ते तथा, तथा मेदवसामांसरुधिरपूयपटलाः + तथा अशुचयो विष्ठासृक्क्लेदप्रधानाः, अत एव

× " एतच्च संस्थानं पुष्पावकीर्णानाश्रित्योक्तं, तेषामेव प्रचुरत्वात्, आवलिकाप्रविष्टास्तु वृत्तत्र्यस्रचतुरस्रसंस्थाना एव भवन्ति " इति बृहद्वृत्तौ ।

+ " तैर्लिप्तानि—पिच्छिलीकृतानि ' अनुलेपनतलानि ' अनुलेपनप्रधानानि तलानि येषां ते तथा " इति बृहद्वृत्तौ ।

'विश्राः' कुथितमाँसादिकल्पकर्दमविलिप्ताः, एव परमदुर्गन्धाः-[कुथितगोमायु]कलेवरादप्यसह्यगन्धाः, तथा कृष्णाऽग्नि-वर्णाभाः रूपतः, स्पर्शतस्तु 'कर्कशः' कठिनो वज्रकण्टकादप्यधिकतरः स्प[र्शो येषां ते तथा]र्शाः, तथा 'दुस्सहाः' अतीव दुःखेन अधिसह्यन्ते, किमिति? यतस्ते नरकाः-पञ्चानामपीन्द्रियार्थानामशोभनत्वादशुभाः, तत्र च सत्त्वानामशुभकर्म्म कारिणामुग्रदण्डपातिनां तीव्रा-अतिदुःमहा वेदनाः प्रादुर्भवन्ति। ते च नारकास्तया वेदनया अक्षिनिमेषमात्रमपि कालं न निद्रायन्ते न प्रचलायन्ते; * वेदनाऽभिभूतत्वात्कुतस्तेषां निद्रालाभो भवतीति दर्शयति, तीव्रा-मुज्ज्वलामित्यादिविशेषण-विशिष्टां यावद् वेदनां वेदयन्त्यनुभवन्ति। पुनरपरं दृष्टान्तमाह—

से जहा नामए (केइ) रुक्खे सिया पव्वयग्गे जाते मूले छिन्ने अग्गे गरुए जओ णिन्नं जओ विसमं जओ दुग्गं तओ पवडति, एवामेव तहप्पगारे पुरिसजाते गब्भातो गब्भं जम्मातो जम्मं माराओ मारं नरगाओ नरगं दुक्खाओ दुक्खं दाहिणगामिए नेरईए कण्हपक्खिए आगमिस्साणं दुल्लहबोहिए यावि भवति, एस ठाणे अणारिए अकेवले जाव [अ]सव्वदुक्खप्पहीणमग्गे एगंतमिच्छे असाहू, पढमस्स ठाणस्स अधम्मपक्खस्स विहंगे एवमाहिए ॥ [ सू० २२ ]

* "श्रुतिं वा रतिं वा धृतिं वा मतिं वा नोपलभन्ते" इति हर्ष०।

व्याख्या—सुगमैव स्वयमेवाभ्यूह्या +

अहावरे दोच्चस्स ठाणस्स धम्मपक्खस्स विभंगे एवमाहिज्जति–इह खलु पाईणं वा ४ संतेगतिया मणुस्सा भवंति, तं जहा–अणारंभा अपरिग्गहा धम्मिया धम्माणुया धम्मिट्ठा जाव धम्मेणं चेव वित्तिं कप्पेमाणा विहरंति, सुसीला सुवया सुप्पडियाणंदा सुसाहू सव्वाओ पाणा(ति)यवायाओ पडिविरया जावज्जीवाए, जाव जेयावन्ने तहप्पगारा सावज्जा अबोहिया कम्मंता परपाणपरितावणकरा कज्जंति, तओ वि पडिविरया जावज्जीवाए ।

व्याख्या—अथाऽपरस्य द्वितीयस्य स्थानस्य 'विभङ्गो' विभागः स्वरूपमेव–वक्ष्यमाणनीत्याऽऽख्यायते, तद्यथा—इह खलु प्राच्यादिदिक्षु मध्ये अन्यतरस्यां दिशि 'सन्ति' विद्यन्ते, ते चैवम्भूता भवन्तीति, त[द्य]था–न विद्यते सावद्य

+ "तद्यथा नाम कश्चिद्वृक्षः पर्वताग्रे जातो मूलछिन्नः शीघ्रं यथा निम्नं पतति, एवमसावप्यसाधुकर्मकारी तत्कर्मवातेरितो वात प्रेरितः सन् शीघ्रमेव नरके पतति, ततोऽप्युद्वृत्तो गर्भाद्गर्भमवश्यं याति, न तस्य किञ्चित्त्राणं भवति, यावदागामिन्यपि कालेऽसौ दुर्लभधर्मप्रतिपत्तिर्भवतीति। साम्प्रतमुपसहरति–'एस ठाणे' इत्यादि, तदेतत्स्थानमनार्यं पापानुष्ठानपरत्वाद्यावदेकान्तमिथ्यारूपमसाधु। तदेवं प्रथमस्याधर्मपाक्षिकस्य स्थानस्य 'विभङ्गो' विभागः स्वरूपमेव व्याख्यातः।" इति प्रत्यन्तरेऽस्य सूत्रस्य व्याख्योपलभ्यते।

आरम्भो येषां ते अनारम्भाः, तथा 'अपरिग्रहाः' निष्किञ्चना, धर्म्मेण चरन्तीति धार्म्मिकाः, यावद्धर्म्मेणैवात्मनो वृत्तिं परिकल्पयन्ति, तथा सुशीलाः सुव्रताः सुप्रत्यानन्दाः सुसाधवः सर्वस्मात् प्राणातिपाताद्विरताः, एवं यावत्परिग्रहाद्विरता इति, ये चान्ये तथाप्रकाराः सावद्यारम्भा यावदबोधिकारिणस्तेभ्यः सर्वेभ्योऽपि विरता इति।

पुनरन्येन प्रकारेण साधुगुणान् दर्शयितुमाह—

से जहा नामए अणगारा भगवंतो इरियासमिया भासासमिया एसणासमिया आयाणभंडमत्तनिक्खेवणासमिया उच्चारपासवणखेलजल्लसिंघाणपारिट्ठावणियासमिया, मणसमिया वयसमिया कायसमिया, मणगुत्ता वयगुत्ता कायगुत्ता, गुत्ता गुत्तिंदिया गुत्तबंभयारी, अकोहा अमाणा अमाया अलोभा, संतो पसंता उवसंता परिनिव्वुडा, अणासवा अग्गंथा छिन्नसोया निरुवलेवा, कंसपाईव मुक्कतोया संखो इव निरंजणा जीवो इव अप्पडिहयगई गगणतलं पिव निरालंबणा वाउरिव अप्पडिबद्धा सारदसलिलं व सुद्धहियया, पुक्खरपत्तं पिव निरुवलेवा कुम्मो इव गुत्तिंदिया विहग इव विप्पमुक्का खग्गिविसाणं व एगजाया भारंडपक्खीव अप्पमत्ता कुंजरो इव सोंडीरा वसहो इव जातथामा सीहो इव दुद्धरिसा मंदरो इव निप्पकंपा सागरो इव गंभीरा चंदो इव

सोमलेसा सूरो इव दित्ततेया जच्चकंचणगं व जातरूवा वसुंधरा इव सव्वफासविसहा सुहुतहुयासणो विव तेयसा जलंता। × नत्थि णं तेसिं भगवंताणं कत्थ वि पडिबंधे, से य पडिबंधे चउव्विहे पन्नत्ते, तं जहा—अंडएति वा पोयएति वा उग्गहेइ वा पग्गहेइ वा, जन्नं जन्नं दिसं इच्छंति तन्नं तन्नं दिसं अप्पडिबद्धा सुइभूया लहुभूया अ[ण]प्पगंथा संजमेणं तवसा अप्पाणं भावेमाणा विहरंति। तेसि णं भगवंताणं इमा एतारूवा जायामायावित्ती होत्था, तं जहा—चउत्थभत्ते

× "नास्ति तेषां कुत्रचित्प्रतिबन्धः, स च प्रतिबन्धश्चतुर्विधस्तद्यथा—अण्डजो हंसादि. अण्डकं वा मयूराण्ड क्रीडामयूरादिहेतुः, स्यात्तेन तत्र प्रतिबन्धः। पोतजे हस्त्यादौ पोतके वा शिशुत्वात्प्रतिबन्धः स्यात्। अथवा 'अंडजेइ वा बोंडजेइ वा' इति पाठान्तरं। अण्डजं—सणिकादिवस्त्र, वोण्डजं—कार्पास वस्त्रं, तत्र प्रतिबन्धः स्यात्। 'उग्गहेइ वा' अवगृहीतं—परिवेषणार्थमुत्पाटितं भक्तपानं, प्रगृहीतं—भोजनार्थमुत्पाटितं तदेव, अथवा अनवग्रहिकं वसतिपीठफलकादि औपग्रहिकं वा दण्डकाद्युपधिजातं, प्रग्रहीतं तु रजोहरणाद्यौघिकोपधिरूपं, तत्र प्रतिबन्धः स्यात्। 'जण्णं'ति या[यां] दिशमिच्छन्ति विहर्तुं तातां दिश विहरन्ति। किम्भूताः? अप्रतिबद्धाः शुचिभूता—भावशुद्धिमन्तः श्रुतिभूता वा—प्राप्तसिद्धान्ताः। लघुभूता—अल्पोपधयोऽगौरवाश्च, अनल्पग्रन्था—बह्वागमा, न विद्यते आत्मनः सम्बन्धी ग्रन्थो—हिरण्यादिर्येषा तेऽनात्मग्रन्था इति वा" इति हर्ष०।

छट्ठभत्ते अट्ठमभत्ते दसमभत्ते दुवालसमभत्ते चोद्दसमभत्ते, अद्धमासिए (भत्ते) मासिए (भत्ते) दोमासिए तिमासिए चउम्मासिए पंचमासिए छम्मासिए, अदुत्तरं च णं उक्खित्तचरगा (निक्खित्त-चरगा उक्खित्त)निक्खित्तचरगा अंतचरगा पंतचरगा लूहचरगा समुयाणचरगा संसट्ठचरगा असंसट्ठ-चरगा तज्जातसंसट्ठचरगा, दिट्ठलाभिया अदिट्ठलाभिया, पुट्ठलाभिया अपुट्ठलाभिया, भिक्खला-भिया अभिक्खलाभिया, अन्नातचरगा *अन्नागिलायचरगा उवनिहिया, +संखादत्तिया परिमिय-

---

* नास्त्येतच्चिह्नमध्यगतः पाठः सवृत्तिकमुद्रितप्रतिषु ।

+ "सङ्ख्याप्रधाना दत्तयो येषा ते तथा। परिमित-अर्द्धपोषादि(?) (पिण्डपात-आहार)लाभो येषामस्ति ते तथा। 'सुद्धेसणिया' शुद्धैषणाः, शुद्धस्य वा निर्व्यञ्जनस्य भक्तादेरेषणा येषामस्ति ते[तथा]। अन्तप्रान्तं-वल्लचनकादिः, स आहारो येषां ते तथा। विरस नीरस-शीतलीभूत। रूक्षाहाराः। 'अंबलिया' आचाम्ल-ओदनकुल्माषादि, तेन चरन्तीति। निर्विकृतिकाः-घृतादिविकृतित्यागिनः। अमद्यमांसाशिनः-मद्यमांसं नाश्नन्तीति। 'नो नियाग'त्ति न नित्यं रस भोजिनः। 'नेसज्जिया' निषद्यायुताया भूमौ उपविशन, तया चरन्तीति नैषधिकाः। सिंहासननिविष्टस्य भून्यस्तपादस्य सिंहासनापनोदे सति यादृशमवस्थानं, तद्यस्यास्ति स वीरासनिकः। दण्डस्येवायतं-आयामो येषा ते दण्डायतिकाः। लगण्डं-वक्रकाष्ठं, तद्वत् शेरते ये ते लगण्डशायिनः,

पिंडवाइया, सुद्धेसणिया अंताहारा पंताहारा अरसाहारा विरसाहारा लूहाहारा तुच्छाहारा, अंतजीवी पंतजीवी, आयंबिलिया पुरमड्डिया निव्विगइया, अमज्जमंसासिणो नो निकाम[नो नियाग]रसभोई ठाणाइया पडिमाठाणाइया उक्कुडुआसणिया नेसज्जिया वीरासणिया दंडायतिया लगंडसाइणो-[आयावगा] अवाउडा अगत्तया अकंडुया आनिट्ठुहा* धुतकेसमंसुरोमनहा, सव्वगायपडिकम्म-विप्पमुक्का चिट्ठंति । [ते णं] एतेणं विहारेणं विहरमाणा बहूइं वासाइं सामन्नपरियागं पाउणंति पाउणित्ता आबाहंसि उप्पन्नंसि वा अणुप्पन्नंसि वा बहूइं भत्ताइं[पच्चक्खंति],पच्चक्खित्ता बहूइं भत्ताइं अणसणाए छेदिंति, छेदित्ता जस्सट्ठाए कीरइ नग्गभावे मुंडभावे अण्हाण[भावे]गे(?) अदंतवणगे अच्छत्तए अणोवाहणए, भूमिसेज्जा फलगसेज्जा कट्ठसेज्जा केसलोए बंभचेरवासे परघरपवेसे लद्धावलद्धे माणावमाणाओ हीलणाओ निंदणाओ खिंसणाओ गरहणाओ तज्जणाओ

पार्ष्णिका शिरश्च वा (?) भूमौ लगति तथा शयनं कुर्वतः । आतापका—आतापनामाहिणः । 'अवाउडा' अप्रावृताः—प्रावरणवर्जकाः । 'अणिट्ठुहा' अनिष्ठीवनाः । " इति हर्षकुलीयदीपिकायाम् ।

तालणाओ उच्चावया गामकंटगा बावीसं परीसहोवसग्गा अहियासिज्जंति तमट्ठं आराहेंति, आराहित्ता चरमेहिं ऊसासनीसासेहिं अणंतं अणुत्तरं निव्वाघायं निरावरणं कसिणं पडिपुन्नं केवलवरनाणदंसणं समुप्पाडिंति, समुप्पाडित्ता कालमासे कालं किच्चा ततो पच्छा सिज्झंति बुज्झंति मुच्चंति परिनिव्वायंति सव्वदुक्खाणमंतं करंति । एगच्चाए पुण एगे भयंतारो भवंति, अवरे पुण पुव्वकम्मावसेसेणं [कालमासे]कालं किच्चा अन्नयरेसु देवलोगेसु देवत्ताए उववत्तारो भवंति, तं जहा—महिड्ढिएसु महज्जुतिएसु महापरक्कमेसु महाजसेसु महाबलेसु महाणुभावेसु महासुक्खेसु ।

व्याख्या—+ इत्यादिसाधुवर्णकः प्राक्तनः सर्वोऽपि पाठसिद्ध एव, सुगमत्वात्, बृहट्टीकाकारेण न व्याख्यातोऽत्रा-

---

+ इतः प्राक् प्रत्यन्तरे निम्नप्रकारेणोपलभ्यते वृत्तिपाठः—" सुगम एव, नवरं विशेषः—' उक्खित्तचरए ' उत्क्षिप्तं—स्वप्रयोजनाय पाकभाजनादुद्धृतं, तदर्थमभिग्रहतश्चरति—तद्गवेषणाय गच्छतीत्युत्क्षिप्तचरकः । ' निक्खित्तचरए 'त्ति निक्षिप्त—पाकभाजनादनुद्धृतं । ' उक्खित्त—निक्खित्तचरए 'त्ति पाकभाजनादुत्क्षिप्तं तत्र वाऽन्यत्र च स्थाने ( निक्षिप्तं ) यत्तदुत्क्षिप्तनिक्षिप्तं । ' संसट्ठचरए 'त्ति संसृष्टेन—खरण्टितेन हस्तादिना दीयमानं संसृष्टमुच्यते, तच्चरति यः स तथा । ' असंसट्ठचरए 'त्ति [ उक्तविपरीतमसंसृष्ट, तेन चरति । ' तज्जाय 'त्ति ] तज्जातेन देयद्रव्याविरोधिना यत्संसृष्टं हस्तादि, तेन दीयमानं यश्चरति स तथा । ' अन्नायचरए 'त्ति

प्यत एव न लिखितः । अन्यच्च–विशेषार्थिना औपपातिकमाचाराङ्गसम्बन्धिप्रथममुपाङ्गं, तत्र च साधुगुणाः प्रबन्धेन व्यावर्ण्यन्ते, तदिहापि तेनैव क्रमेण द्रष्टव्यमिति । तथा एवंविधाः साधवः ❋ सर्वगात्रपरिकर्म्मविप्रमुक्ता–निष्प्रतिकर्म्म शरीरास्तिष्ठन्तीति । तथोग्रविहारिणः प्रव्रज्यापर्यायमनुपाल्य आबाधारूपे रोगातङ्के समुत्पन्ने अनुत्पन्ने वा भक्तप्रत्याख्यानं विदधति । किं बहुनोक्तेन ? यत्कृतेऽयमयोगोलकवन्निरास्वादः करवालधारामार्गवद्दुरध्यवसायः श्रमणभावोऽनुपाल्यते तमर्थं सम्यग्दर्शनज्ञानचारित्राख्यमाराध्याऽव्याहतमेकमनन्तं केवलज्ञानमवाप्नुवन्ति, केवलज्ञानावाप्तेरूर्ध्वं सर्वदुःखविमोक्षणलक्षणं मोक्षमवाप्नुवन्ति । एके पुनरेकया अर्चया–एकेन शरीरेण एकस्माद्वा भवात्सिद्धिगतिं गन्तारो भवन्ति, अपरे

---

अज्ञातो–ऽनुपदर्शितस्वाजन्यादिभावः सञ्चरति यः स तथा । ' दिट्ठलाभिए ' त्ति दृष्टस्यैव भक्तादेर्दृष्टाद्वा–पूर्वोपलब्धाद्दायकाल्लाभो यस्यास्ति स दृष्टलाभिकः । ' अदिट्ठलाभिए ' तत्राऽदृष्टस्यापि अपवरकादिमध्यान्निर्गतस्य श्रोत्रादिभिः कृतोपयोगस्य भक्तादेरदृष्टाद्वा–पूर्वमनुपलब्धाद्दायकाल्लाभो यस्यास्ति स तथा । ' पुट्ठलाभिए ' त्ति पृष्टस्यैव ' हे साधो ! किं ते दीयते ? ' इत्यादिप्रश्नितस्य यो लाभो यस्यास्ति स तथा । ' अपुट्ठलाभिए ' त्ति [ पृष्टलाभिकविपर्ययात् । ' भिक्खलाभिए ' त्ति ] भिक्षेव भिक्षा–तुच्छमवज्ञातं वा, तल्लाभो माप्यतया यस्यास्ति स भिक्षालाभिकः । ' अभिक्खलाभिए ' त्ति उक्तविपर्ययात् । [ अज्ञातचरका–अज्ञातगृहेषु चरन्तीत्यभिग्रहवन्तः ] । ' अन्नगिलायए ' त्ति अन्नं–भोजनं विना ग्लायति ( यः स ) अन्नग्लायकः, स चाभिग्रहविशेषात्प्रातरेव दोषाऽन्नभुगिति । ' उवनिहिए ' त्ति उपनिहितं [ यथा कथञ्चिदासन्नीभूतं, तेन चरति यः स औपनिहितकः ] " इत्यादि ।

❋ ' धूतं ' अपनीतं केशश्मश्रुलोमनखादिकं यैस्ते तथा इति बृहद्वृत्तौ ।

पुनस्तथाविधपूर्वकर्मविशेषे सति तत्कर्मवशगाः कालं कृत्वाऽन्यतमेषु वैमानिकेषु देवेषूत्पद्यन्ते, तत्रेन्द्रसामानिकत्रायस्त्रिंशल्लोकपालपार्षद्या[त्म]रक्षप्रकीर्णेषु नानाविधसमृद्धिषु भवन्तीति, नत्वाभियोगिककिल्बिषिकादिष्विति । 'तं जहे'-त्यादि, तद्यथा-महर्द्ध्यादिषु देवलोकेषूत्पद्यन्ते । ते देवास्त्वेवम्भूता भवन्तीति दर्शयति—

ते णं तत्थ देवा भवंति-[ महिड्डिया महज्जुत्तिया जाव महासुक्खा ] हारविराइयवच्छा कडगतुडियथंभियभुया अंगयकुंडलमट्ठगंडतलकण्णापीढधारी विचित्तवत्थाहरणा विचित्तमाला-मउलिमउडा कल्लाणगपवरवत्थपरिहिया कल्लाणगपवरमल्लाणुलेवणधरा भासुरबोंदी पलंबवणमाल-धरा । दिव्वेणं रूवेणं दिव्वेणं वण्णेणं दिव्वेणं गंधेणं दिव्वेणं फासेणं दिव्वेणं संघाएणं दिव्वेणं संठाणेणं दिव्वाए इड्डीए दिव्वाए जुत्तीए दिव्वाए पभाए दिव्वाए छायाए दिव्वाए अच्चाए दिव्वेणं तेएणं दिव्वाए लेसाए दसदिसाओ उज्जोवेमाणा पभासेमाणा गतिकल्लाणा ठिइकल्लाणा आगमेसिभद्दया यावि भवंति । एस ठाणे आयरिए, जाव सव्वदुक्खपहीणमग्गे एगंतसम्मे सुसाहू दोच्चस्स ठाणस्स धम्मपक्खस्स विभंगे एवमाहिए ॥ सू० २३ ] ॥

व्याख्या—' ते णं तत्थ देवा' इत्यादि, ते देवा नानाविधतपश्चरणोपात्तशुभकर्म्माणो महर्द्ध्यादिगुणोपेता भवन्ती-

त्यादिकः सामान्यवर्णकस्तथा हारविराजितवक्षस इत्यादिक आभरणवस्त्रपुष्पवर्णकः । पुनरतिशयापादनार्थं दिव्यरूपादिप्रतिपादनं चिकीर्षुराह–' दिव्वेणं रूवेणं ' दिव्यरूपेण दिव्यया द्रव्यलेश्ययोपेताः दशापि दिशः समुद्द्योतयन्तो गत्या शीघ्ररूपया कल्याणाः, तथा स्थित्योत्कृष्टमध्यमया कल्याणास्ते भवन्ति । तथाऽऽगामिनि काले भद्रकाः शोभनमनुष्यभवसम्पदुपेताः, तथा सद्धर्मप्रतिपत्तारश्च भवन्तीति । तदेतत्स्थानमार्यमेकान्तेनैव सम्यग्भूतं सुसाध्विति । एतद्द्वितीय[स्य] स्थानस्य धर्मपाक्षिकस्य विभङ्ग एवमाख्यातः ।

अहावरे तच्चस्स ठाणस्स मीसगस्स विभंगे एवमाहिज्जति–इह खलु पाईणं वा ४ संतेगतिया मणुस्सा भवंति, तं जहा–अप्पिच्छा [अप्पारंभा] अप्पपरिग्गहा धम्मिया धम्माणुया जाव धम्मेणं चेव वित्तिं कप्पेमाणा विहरंति । सुसीला सुव्वया सुप्पडियाणंदा साहू एगच्चाओ पाणाइवायाओ पडिविरया जावज्जीवाए एगच्चाओ अप्पडिविरया जाव जे यावन्ना तहप्पगारा सावज्जा अबोहिया कम्मंता परपाणपरितावणकरा कज्जंति, ततोवि एगच्चाओ अप्पडिविरया ।

व्याख्या—अथापरस्य तृतीयस्य स्थानस्य मिश्रकाख्यस्य विभङ्गः समाख्यायते–एतच्च यद्यपि मिश्रत्वाद्धर्म्माऽधर्म्माभ्यामुपपेतं भवति [तथापि] धर्म्मभूयिष्ठत्वाद्धार्मिकपक्षेऽवतरति, तद्यथा–बहुषु गुणेषु मध्यपतितो दोषो नात्मानं लभते, कलङ्क इव चन्द्रिकायाः, तथा बहूदकमध्यपतितो मृच्छकलावयवो नोदकं कलुषयितुमलं, एवमधर्म्मोऽपि धर्म्ममिति स्थितं ।

असौ मिश्रपक्षोऽपि धार्म्मिकपक्षेऽवतरति । इह खलु जगति प्राच्यादिदिक्षु ' एके ' केचन शुभकर्म्माणो मनुष्या भवन्तीति, अल्पेच्छा अल्पपरिग्रहारम्भा, एवंविधा धार्म्मिकवृत्तयः प्रायः सुशीलाः सुव्रताः सुप्रत्यानन्दाः साधवो भवन्तीति । ते च एकस्मात् स्थूलात्सङ्कल्पकृतात् प्रतिनिवृत्ता, एकस्माच्च सूक्ष्मादारम्भजादप्रतिविरताः, एवं शेषाण्यपि व्रतानि संयोज्यानीति । ' जे यावन्ने ' ये चान्ये सावद्या नरकगतिहेतवः कर्मसमारम्भास्तेभ्य एकस्माद्यन्त्रपीडानिर्लाञ्छनादिभ्यो निवृत्ता एकस्माच्च क्रयविक्रयादेरनिवृत्ता इति । तांश्च विशेषतो दर्शयति—

से जहा नामए समणोवासगा भवंति—अभिगयजीवाजीवा उवलद्धपुन्नपावा आसवसंवरवेयणाणिज्जराकिरियाहिगरणबंधमोक्खकुसला असहिज्जा देवासुरनागसुवण्णजक्खरक्खसकिन्नरकिंपुरिसगरुलगंधव्वमहोरगमाइएहिं देवगणेहिं निग्गंथाओ पावयणाओ अणइक्कमणिज्जा, निग्गंथे पावयणे निस्संकिया निक्कंखिया णिव्वितिगिच्छा, लद्धट्ठा गहियट्ठा पुच्छियट्ठा विणिच्छियट्ठा अभिगयट्ठा अट्ठिमिंजपेमाणुरागरत्ता, अयमाउसो ! निग्गंथे पावयणे अट्ठे अयं परमट्ठे सेसे अणट्ठे, ऊसियफलिहा अवंगुयदुवारा अचियत्तंतेउरपरघरप्पवेसा, चाउद्दसट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणा, समणे निग्गंथे फासुयएसणिज्जेणं असणपाणखाइमसाइमेणं वत्थ-

पडिग्गहकंबलपायपुंछणेणं [ ओसहभेसज्जेणं ] पीढफलगसिज्जासंथारएणं पडिलाभेमाणा बहूहिं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासेहिं अहापरिग्गहिएहिं तवोकम्मेहिं अप्पाणं भावेमाणा विहरंति, ते णं एयारूवेणं विहारेणं विहरमाणा बहूइं वासाइं समणोवासगपरियायं पाउणंति, पाउणित्ता आबाहंसि उप्पन्नंसि वा अणुप्पन्नंसि वा बहूइं भत्ताइं अणसणाए ( पच्चक्खायंति ), पच्चक्खाइत्ता बहूइं भत्ताइं अणसणाए( छेदेंति ), च्छेदित्ता आलोइयपडिक्कंता समाहिपत्ता कालमासे कालं किच्चा अन्नयरेसु देवलोएसु देवत्ताए उववत्तारो भवंति, तं जहा—महिड्ढिएसु महज्जुइएसु जाव महासुक्खेसु, सेसं तहेव जाव एस ठाणे आरिए जाव एगंतसम्मे साहू, तच्चस्स ठाणस्स मीसगस्स विभंगे एवं आहिए ।

व्याख्या—अयं श्रमणोपासकवर्णकः सुगम एव, विशेषार्थिना वृहट्टीका विलोकनीया, अत्र ग्रन्थगौरवभयाद्व्याख्या न लिखिता । नवरं–'ऊसियफलिहा' उच्छ्रितानि स्फटिकानीव स्फटिकान्यन्तःकरणानि येषां ते तथा, एतदुक्तं भवति–मौनीन्द्रदर्शनावाप्तौ सत्यां परितुष्टमानसा इति । तथा अप्रावृतानि द्वाराणि यैस्ते तथा, उद्घाटितगृहद्वारास्तिष्ठन्ति, सद्दर्शनलाभेन न क(स्माच्चि)स्यचि(?)द्बिभेति, शोभनमार्गपरिग्रहेणोद्घाटितशिरसो निश्चल्धं–तिष्ठन्तीति । अपरं सर्वं सुगमम् ।

तदेतत् स्थानं कल्याणं-परम्परया सुखविपाकमिति कृत्वाऽऽर्यमित्येवं विभङ्गस्तृतीयस्य स्थानस्य मिश्रकाख्यस्य।।२०५।। इति। उक्ताः धार्म्मिका अधार्म्मिकाश्च, तदुभयरूपाश्चाभिहिताः। साम्प्रतमेतदेव स्थानत्रिकं संक्षेपतो विभणिषुराह—

अविरतिं पडुच्च बाले आहिज्जति, विरतिं पडुच्च पंडिए आहिज्जति, विरयाविरइं पडुच्च बालपंडिए आहिज्जति, तत्थ णं जा सा सव्वओ अविरती एस ठाणे आरंभट्ठाणे अणारिए जाव असव्वदुक्खप्पहीणमग्गे एगंतमिच्छे असाहू। तत्थ णं जा सा सव्वतो विरती एस ठाणे अणारंभट्ठाणे (एस ठाणे) आरिए जाव सव्वदुक्खप्पहीणमग्गे एगंतसम्मे साहू। तत्थ णं जा सा सव्वओ विरयाविरई एस ठाणे अणा[आरंभणोआ]रंभट्ठाणे, एस ठाणे आरिए जाव सव्वदुक्खप्पहीणमग्गे एगंतसम्मे साहू ॥ [सू. २४] ॥

व्याख्या—येयमविरतिरसंयमरूपा, सम्यक्त्वाभावान्मिथ्यादृष्टेर्द्रव्यतो विरतिरप्यविरतिरेव, तां 'प्रतीत्य' आश्रित्य बालोऽज्ञः, सदसद्विवेकविकलत्वादित्येवमाधीयते–व्यवस्थाप्यते आख्यायते वा, विरतिं प्रतीत्य पण्डितः, तथा विरताविरतिं प्रतीत्य बालपण्डित इत्येतत्प्राग्वदायोज्यमिति। 'तत्थ णं' मित्यादि, तत्र पूर्वोक्तेषु स्थानेषु येयं सर्वस्मादविरति–विरतिपरिणामाभावः, तदेतत्स्थानं सावद्यारम्भस्थानं, एतदाश्रित्य सर्वाणि [अ]कार्याणि क्रियन्ते, अत एतदनार्यस्थानं, निश्शङ्कतया परिकिञ्चनकारित्वात्, यावदसर्वदुःखप्रहीणमार्गोऽयं एकान्तमिथ्यारूपोऽसाधुरिति, तत्र च येयं 'विरतिः'

सम्यक्त्वपूर्विका सावद्यारम्भान्निवृत्तिः, सा स्थगिताश्रवद्वारत्वात्पापा[ नुपादानरूपेति ]न्निवृत्तत्वात् (²) । एतत्स्थानमनारम्भस्थानं सावद्यानुष्ठानरहितत्वात्संयमस्थानं, तदेतत्स्थानमार्यस्थानं अशेषकर्मक्षयमार्ग्गः, तथैकान्तमम्यग्भूतः, एतदेवाऽहसाधुरिति साधुभूताऽनुष्ठानात् । तत्र चेयं या विरताविरतिरभिधीयते सा मिश्रस्थानभूता, तदेतदारम्भानारम्भस्थानं, एतदपि कथञ्चिदार्यमेव, पारम्पर्येण सर्वदुःखप्रक्षीणमार्ग्गस्तथैकान्तमम्यग्भूतः साधुश्चेति । तदेवमनेकविधोऽयमधर्मपक्षो धर्म्मपक्षो मिश्रपक्षश्चेति संक्षेपेणाभिहितः । मिश्रपक्षोऽप्यनयोरेवान्तर्वर्त्ती भवतीति दर्शयति—

एवामेव समणुगम्ममाणा+ इमेहिं चेव दोहिं ठाणेहिं समोअरंति, तं जहा—धम्मे चेव अधम्मे चेव उवसंते चेव अणुवसंते चेव, तत्थ णं जे से पढम[स्स]ठाणस्स अधम्मपक्खस्स विभंगे एवमाहिए, तत्थ णं इमाइं तिन्नि तेवट्ठाइं पावाउयसयाइं भवंतीति मक्खा[ याइं ]यं । तं जहा—किरियावाईणं अकिरियावाईणं अन्नाणियवाईणं वेणईयवाईणं, तेवि [ परि]निवाणमाहंसु, तेवि पलिमोक्खमाहंसु, ते वि लवंति सावगा ते वि लवंति सावइत्तारो ॥ [ सू. २५ ]

व्याख्या—'एवमेवे'त्यादि, एवमेव संक्षेपेण 'समनुगम्यमाना' व्याख्यायमाना 'अनयोरेव' धर्माधर्म्मस्थानयोरनु-

+ 'समणुगिज्झमाणा' इति पाठान्तर 'सम्यगनुगृह्यमाणः' इत्यर्थश्च हर्ष० ।

पतन्ति, कथं ? यदुपशान्तस्थानं तद्धर्म्मपक्षस्थान[मनुपशान्तस्थानमधर्मपक्षस्थान]मिति, तत्र च यदधर्म्मपाक्षिकं प्रथमं स्थानं तत्रामूनि त्रीणि त्रिपष्ट्यधिकानि प्रावादुकशतान्यन्तर्भवन्ति. एवमाख्यातं पूर्वाचार्यैरिति । एतानि च सामान्येन दर्शयितुमाह–' तं जहा ' इत्यादि, तत्र क्रियावादिनः ज्ञानरहितां क्रियां स्वर्गापवर्गसाधिकां वदन्ति, ते क्रियावादिनः क्रियात एव मोक्षं वदन्तीति भावः । तत्र क्रियावादिनामशीत्युत्तरं शतं, अक्रियावादिनां चतुरशीतिः,अज्ञानिकानां सप्तषष्टिः, वैनयिकानां द्वात्रिंशदिति । एते सर्वेऽपि प्रावादुकाः मोक्षमार्ग्गं कथयन्ति, तेऽपि प्रावादुकाः संसारबन्धनान्मोचनात्मकं मोक्षमाहुः । ' तेऽपि ' तीर्थिकाः 'लपन्ति' वदन्ति–मोक्षं प्रति धर्म्मदेशनां विदधतीति । शृण्वन्तीती श्रावकाः, अहो श्रावका ! एवं गृह्णीत यूयं यथाऽहं देशयामीति । तथा तेऽपि धर्म्मश्रावयितारः सन्तः एवं 'लपन्ति' भाषन्ते यथाऽनेनोपायेन स्वर्ग्ग· मोक्षावाप्तिरिति, तद्वचनं मिथ्यात्वोपहतबुद्धयोऽवितथमेव गृह्णन्ति, कूटपण्यदायिना विपर्यस्तमतय इवेति, तथा कथमेते प्रावादुकाः* अहिंसां प्रतिपादयन्ति न च तां प्रधानमोक्षाङ्गभूतां सम्यगनुतिष्ठन्ति । तथा सर्वे प्रावादुकाः मोक्षाङ्गभूतामहिंसां अप्राधान्येन प्रतिपद्यन्ते इति दर्शयितुमाह—

**ते सव्वे पावाउया आइकरा धम्माणं नाणापन्ना नाणाछंदा नाणासीला नाणादिट्ठी नाणारुई नाणारंभा नाणाऽज्झवसाणसंजुत्ता एगं महं मंडलिबंधं किच्चा सव्वे एगओ चिट्ठंति । पुरिसे य**

---

* " मिथ्यावादिनो भवन्तीति ? अत्रोच्यते–यतस्तेऽपि " इति बृहद्वृत्तौ ।

सागणियाणं इंगालाणं पातिं बहुपडिपुन्नं अओमएणं संडासएणं गहाय ते सव्वे पावाउए ( प्रावादुकान् ) आदिगरे धम्माणं नाणापन्ने ( प्रज्ञान् ) जाव नाणाऽज्झवसाणसंजुत्ते एवं वयासि—हं भो पावाउया ! आइगरा धम्माणं नाणापन्ना जाव नाणाऽज्झवसाणसंजुत्ता ! इमं ताव तुब्भे सागणियाणं इंगलाणं पाइं बहुपडिपुन्नं गहाय मुहुत्तयं मुहुत्तयं पाणिणा धरेह नो बहुसंडासगसंसारियं कुज्जा नो बहु अग्गिथंभणियं कुज्जा नो बहुसाहम्मिय*वेयावडियं ( वैयावृत्यं ) कुज्जा नो बहुपरधम्मियवेयावडियं कुज्जा उज्जुया नियागपडिवन्ना अमायं कुव्वमाणा पाणिं पसारेह, इति वुच्चा से पुरिसे तेसिं पावादुयाणं तं सागणियाणं इंगालाणं पातिं बहुपडिपुन्नं अओमएणं संडासएणं गहाय पाणिंसु निसिरति, तए णं ते पावादुया आदिगरा धम्माणं नाणापन्ना जाव नाणाज्झवसाणसंजुत्ता पाणिं पडिसाहरंति ( सङ्कोचयेयुः ), तए णं से पुरिसे ते सव्वे पावा[उए]इयाणं आदिगरे धम्माणं जाव नाणाज्झवसाणसंजुत्ते एवं वदासी—हं भो पावादुया ! आदिगरा धम्माणं ( णाणापन्ना ) जाव नाणा-

* साधर्मिकानामग्निदाहोपशमनाऽद्विनोपकार कुरुतेति ।

ज्झवसाणसंजुत्ता! कम्हा णं तुब्भे पाणिं पडिसाहरह? पाणी नो डहेज्ज( दह्यति )दड्ढे किं भविस्सइ? [दुक्खं] दुक्खंति मन्नमाणा पाणिं पडिसाहरह, एस तुला एस पमाणे एस समोसरणे, पत्तेयं तुला पत्तेयं पमाणे पत्तेयं समोसरणे, तत्थ णं जे ते समणा माहणा एवमाइक्खंति जाव परूविंति– सव्वे पाणा जाव सव्वे सत्ता हंतव्वा अज्जावेयव्वा परिघेत्तव्वा परितावेयव्वा किलामेतव्वा उद्दवेयव्वा, ते आगंतु छेयाए ते आगंतु भेयाए जाव ते आगंतु जाइजरामरणजोणिजम्मणसंसारपुणब्भवगब्भवासभवपवंचकलंकलीभागिणो भविस्संति, ते बहूणं दंडणाणं बहूणं मुंडणाणं तज्जणाणं तालणाणं अंदुबंधणाणं जाव घोलणाणं माइमरणाणं पिइमरणाणं भाइमरणाणं भइणीमरणाणं भज्जामरणाणं पुत्तमरणाणं धूयामरणाणं सुण्हामरणाणं दारिद्दाणं दोहग्गाणं अप्पियसंवासाणं पियविप्पओगाणं बहूणं दुक्खदोम्मणस्साणं आभागिणो भविस्संति, अणादियं च णं अणवदग्गं दीहमद्धं चाउरंतसंसारकंतारं भुज्जो भुज्जो अणुपरियाट्टिस्संति, ते णो सिज्झिस्संति नो बुज्झिस्संति जाव नो सव्वदुक्खाणमंतं करिस्संति, एस तुला एस पमाणे एस समोसरणे, पत्तेयं तुला पत्तेयं पमाणे पत्तेयं

समोसरणे । तत्थ णं जे ते समणा माहणा एवमाइक्खंति जाव परूविंति—सवे पाणा जाव सवे सत्ता न हंतवा जाव न उद्दवेयवा, ते णो आगंतुं छेयाए णो आगंतुं भेयाए जाव जाइजरामरणजोणिजम्मणसंसारपुणब्भवगब्भवासभवपवंचकलंकलीभागिणो णो भविस्संति । ते णो बहूणं दंडणाणं जाव बहूणं दुक्खदोम्मणस्साणं नो आभागिणो भविस्संति, अणादियं च णं अणवदग्गं दीहमद्धं चाउरंतसंसारकंतारं भुज्जो भुज्जो नो अणुपरियट्टिस्संति [ते सिज्झिस्संति] जाव सवदुक्खाणमंतं करिस्संति ॥ [ सू. २६ ]

व्याख्या—'ते सव्वे' इत्यादि, ते सर्वे प्रावादुकास्त्रिषष्ट्युत्तरशतत्रयपरिमाणा अग्न्यादिकराः यथा स्वं धर्म्माणां, तथा 'नाना' भिन्ना 'प्रज्ञा' ज्ञानं येषां ते नानाप्रज्ञाः, तथा नानाछन्दा—भिन्नाभिप्रायाः, तथा ते नानाऽध्यवसायाः, ते सर्वेऽपि प्रावादुका यथा स्वं पक्षमाश्रिताः एकत्र प्रदेशे मण्डलिबन्धमाधाय तिष्ठन्ति, तेषां चैत्र व्यवस्थितानामेकः कश्चित्पुरुषस्तेषां प्रतिबोधनार्थं ज्वलतामङ्गाराणां प्रतिपूर्णां 'पात्रीं' अयोमयं भाजनं लोहमयेन सन्दंशकेन गृहीत्वा तेषां ढौकितवान्, उवाच च—भोः प्रावादुकाः ! इदमङ्गारभृतं भाजनं एकैकं मुहूर्त्तं प्रत्येकं बिभृत यूयं, न चेदं सन्दंशकं सांसारिकं नापि चाग्निस्तम्भनं विधत्त नापि साधर्म्मिकान्यधार्म्मिकाणामग्निदाहोपशमादिनोपकारं कुरुतेति 'ऋजवो' मायामकुर्वाणाः

पाणिं प्रसारयत, तेऽपि च तथैव कुर्य्युः, ततोऽसौ पुरुषस्तद्भाजनं तत्पाणौ समर्पयति, तेऽपि च दाहशङ्कया हस्तं सङ्कोचयेयुरिति। ततोऽसौ तानुवाच–किमिति पाणिं प्रतिसंहरत? यूयं, एवमभिहितास्ते ऊचुः–दाहभयादिति। एतदुक्तं भवति–अवश्यमग्निदाहभयान्न कश्चिदग्न्यभिमुखं पाणिं ददातीत्येतत्परोऽयं दृष्टान्तः। [ स नरः प्राह– ] पाणिना दग्धेनापि किं भवतां भविष्यति? दुःखमिति चेद्यद्येवं दाहभीरवो यूयं सुखाभिलाषिणश्च, तदेवंसति सर्वेऽपि जन्तवः संसारोदरविवरवर्त्तिन एवम्भूता एवेत्येवमात्मतुलया–ऽऽत्मौपम्येन यथा मम नाभिमतं दुःखमेवं सर्वजन्तूनामित्यवगम्याहिंसैव प्राधान्येनाऽऽश्रयणीया। 'तदेतत्प्रमाणं' सैषा युक्तिः "आत्मवत् सर्व भूतानि, यः पश्यति स पश्यति" तदेतत् समवसरणं–स एव धर्म्मविचारो यत्राहिंसा सम्पूर्णा, तत्रैव परमार्थतो धर्म्म इत्येवं व्यवस्थिते तत्र ये केचनाविदितपरमार्थाः श्रमणब्राह्मणादयः 'एवं' वक्ष्यमाणमाचक्षते–परेषामेवं भाषन्ते, तथैवं धर्म्मं 'प्रज्ञापयन्ति' व्यवस्थापयन्ति, तथाऽनेन प्राण्युपतापकारिणा प्रकारेण धर्म्मं प्ररूपयन्ति, तथाहि–सर्वे प्राणा इत्यादि, यावद्धन्तव्या दण्डादिभिः, परितापयितव्याः धर्म्मार्थमरघट्टवहनादिभिः, परिग्राह्याः श्राद्धादौ रौहितमत्स्यादय इव, तथाऽपद्रावयितव्या देवतायागादिनिमित्तं छागादयः, इत्येवं ये श्रमणादयः प्राणिनामुपतापकारिणीं भाषां भाषन्ते ते आगामिनि काले 'अनेकशो' बहुशः स्वशरीरच्छेदाय भेदाय च भाषन्ते, तथा ते सावद्यभाषिणो भविष्यति काले जातिजरामरणानि बहूनि प्राप्नुवन्ति। [ योन्यां जन्म ] योनिजन्म, तदनेकशो गर्भव्युत्क्रान्तजावस्थायां प्राप्नुवन्ति, तथा संसारप्रपञ्चान्तर्गताः कलङ्कलीभावभाजो भवन्ति बहुशो भविष्यन्ति च, तथा ते बहूनां दण्डादीनां [ शारीराणां ] दुःखानामात्मानं भाजनं कुर्वन्ति, तथा ते मातृमरणादीनां मानसानां दुःखानां तथाऽन्येषामप्रिय-

सम्प्रयोगार्थनाशादिभिर्दुःखदौर्मनस्यानामाभागिनो भविष्यन्ति । तथाऽनाद्यनवदग्रं-अनाद्यनन्तं संसारकान्तारं भूयो-भूयः अनुपरिवर्त्तिष्यन्ते, अरघट्टघटीन्यायेन तत्रैव भ्रमन्तः स्थास्यन्ति । तथा ते कुप्रावचनिकाः नैव सेत्स्यन्ति, नैव ते सर्वपदार्थान् भोत्स्यन्ते नैव ते संसारान्मोक्ष्यन्ते, तथा परिनिर्वृतिः-परिनिर्वाणमानन्दं नैव लप्स्यन्ते । न च ते सर्वदुःखानामन्तं करिष्यन्ति, एवं स्वयूथ्या अपि सावद्योपदेशतया न सेत्स्यन्ति । एषा तुला एतत्प्रमाणमवसरण-मागमविचार रूपं द्रष्टव्यमिति । तथा ये पुनर्विदिततत्त्वा एवं प्ररूपयन्ति-सर्वेऽपि जीवा दुःखद्विषः सुखलिप्सवोऽतो न हन्तव्या इति भाषन्ते ते पूर्वोक्तं दण्डनादिकं न प्राप्स्यन्ति, संसारकान्तारमचिरेणैव व्यतिक्रमिष्यन्तीत्यादि सर्वं पूर्वोक्तं भणनीयमिति । भणितानि क्रियास्थानानि, अथ पूर्वोक्तमेव संक्षेपेण कथयति—

इच्चेएहिं बारसहिं किरियाठाणेहिं वट्टमाणा जीवा नो सिंज्झिसु जाव नो सव्वदुक्खाणं अंतं करिंसु वा [ णो ] करिंति वा [ णो ] करिस्संति वा, एयंसि चेव तेरसमे किरियाठाणे वट्टमाणा जीवा सिज्झिंसु बुज्झिंसु मुच्चिंसु परिनिव्वाइंसु जाव सव्वदुक्खाणं अंतं करिंसु वा करिंति वा करिस्संति वा । एवं से भिक्खू आतट्ठी ( आत्मार्थी ) आयहिते आयगुत्ते आयजोगे आयपरक्कमे आयरक्खिए आयाणुकंपए आयनिप्फेडए आयाणमेव पडिसाहरिज्जासि त्तिबेमि [ सू० २७ ] ।

बीयसुयक्खंधस्स किरियाठाणं नाम बीयमज्झयणं समत्तं ॥

व्याख्या—इत्येतेषु द्वादशक्रियास्थानेष्वधर्मपक्षः समवतार्यते, तत एतेषु वर्त्तमाना जीवा नातीते काले सिद्धा न सिद्ध्यन्ति न सेत्स्यन्ति, तथा न बुबुधुर्न बुद्ध्यन्ते न भोत्स्यन्ते, तथा न मुमुचुर्न मुञ्चन्ति न च मोक्ष्यन्ते, न निर्वृता न निर्वान्ति न च निर्वास्यन्ति, तथा न सर्वदुःखानामन्तं ययुर्न च यान्ति न च यास्यन्ति। साम्प्रतं त्रयोदशं क्रियास्थानं धर्म्मपक्षाश्रितं दर्शयितुमाह–' एयंसि ' इत्यादि, एतस्मिंस्त्रयोदशे क्रियास्थाने वर्त्तमानाः जीवाः सिद्धाः सिद्ध्यन्ति सेत्स्यन्ति यावत्सर्वदुःखानामन्तं करिष्यन्तीति स्थितम्। तदेवं स भिक्षुर्यः पुण्डरीकाध्ययनेऽभिहितो द्वादशक्रियास्थानवर्जकः अधर्म्मपक्षानुपशमपरित्यागी धर्म्मपक्षे स्थित उपशान्तः आत्मार्थी–ऽऽत्मार्थसाधकः आत्महितः आत्मगुप्तः आत्मयोगी–सदा धर्मध्यानावस्थितः, तथा पापेभ्यो–दुर्गतिगमनादिभ्यः आत्मा रक्षितो येन स आत्मरक्षी, सावद्यानुष्ठानान्निवृत्त इति भावः। तथाऽऽत्मानमनुकम्पते–शुभाऽनुष्ठानेन सद्गतिगामिनं विधत्ते, तथाऽऽत्मानं [संयमेन] संसारचारकान्निस्सारयति, तथाऽऽत्मानमनर्थभूतेभ्यो द्वादशक्रियास्थानेभ्यः प्रतिसंहरेत्, तथाऽऽत्मानं सर्वानर्थेभ्यो निवर्त्तयेदिति। एतच्च महापुरुषे सम्भाव्यते। इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत्, श्रीसुधर्म्मस्वामी जम्बूस्वामिनमुद्दिश्य भाषते–श्रीवर्द्धमानस्वामीसमीपे मयैतच्छ्रुतं तद्भवतो निवेदितं, न स्वमनीषिकयेति समाप्तं क्रियास्थानाख्यं द्वितीयमध्ययनमिति।

यदवापि मया पुण्य, क्रियास्थानं विवृण्वता। तेन पुण्येन लोकोऽयं, भूयादानन्दमेदुरः॥ १॥

इति श्रीपरमसुविहितखरतरगच्छविभूषणपाठकप्रवरश्रीमत्साधुरङ्गगणिवरकृतायां श्रीमत्सूत्रकृताङ्गदीपिकायां
द्वितीयश्रुतस्कन्धे द्वितीयमध्ययनं समाप्तम्॥

## आहारपरिज्ञाभिधं तृतीयमध्ययनम् ।

अथ आहारपरिज्ञाख्यं तृतीयमध्ययनं प्रारभ्यते । तथाहि—

सुयं मे आउसंतेणं भगवया एवमक्खायं—इह खलु आहारपरिन्नानाम अज्झयणं, तस्स णं अयमट्ठे पन्नत्ते, इह खलु पाईणं वा ४ सवतो सव्वावंति च णं लोगंसि चत्तारि बीयकाया एवमाहिज्जंति, तं जहा—अग्गवीया मूलवीया पोरबीया खंधवीया, तेसिं च णं अहावीएणं अहावगासेणं इह एगतिया सत्ता पुढविजोणीया पुढविसंभवा पुढविवुक्कमा य, तज्जोणीया तस्संभवा तदुवक्कमा कम्मोवगा कम्मनियाणेणं तत्थ वुक्कमा णाणाविहजोणियासु पुढवीसु रुक्खत्ताए विउट्टंति । ते जीवा तेसिं नाणाविहजोणियाणं पुढवीणं सिणेहमाहारिंति, ते जीवा आहारेंति पुढविसरीरं आउसरीरं तेउसरीरं वाउसरीरं वणस्सइसरीरं, नाणाविहाणं तसथावराणं पाणाणं सरीरं अचित्तं कुवंति, परिविद्धत्थं तं सरीरं पुव्वाहारियं तयाहारियं विपरिणामियं सारूवि[य]कडं संतं, अवरे वि य णं तेसिं पुढविजोणियाणं रुक्खाणं सरीरा नाणावण्णा नाणागंधा नाणारसा नाणाफासा नाणासंठाण-

संठिया नाणाविहसरीरपुग्गलविउविता ते जीवा कम्मोववन्नगा भवंतीति मक्खायं ॥ [ सू० १ ] ॥

व्याख्या—' सुयं मे ' सुधर्मस्वामी जम्बूस्वामिनमुद्दिश्यैतदाह, तद्यथा–श्रुतं मया आयुष्मता भगवतेदमाख्यातं, आहारपरिज्ञेदमध्ययनं, तस्य चायमर्थः–प्राच्यादिदिक्षु 'सर्वत' इत्यूर्द्धाधो विदिक्षु च सर्वस्मिँल्लोके चत्वारो 'बीजकाया' बीजप्रकाराः–समुत्पत्तिभेदा भवन्ति, तद्यथा–अग्रे बीजं–येषां तेऽग्रबीजाः तलतालीसहकारादयः शाल्यादयो वा, यदि वा अग्राण्येवोत्पत्तौ कारणतां प्रतिपद्यन्ते येषां ते कोरण्टादयः । तथा मूलबीजा आर्द्रकादयः, पर्वबीजा इक्ष्वादयः, स्कन्धबीजाः सल्लक्यादयः, तेषां च चतुर्विधानामपि वनस्पतिकायानां यद्यस्य 'बीज'मुत्पत्ति कारणं तद्यथाबीज, यथा शाल्यङ्कुरस्य शालिबीज–मुत्पत्तिकारणं, एवमन्यदपि द्रष्टव्यं, 'यथाऽवकाशेने'ति यो यस्यावकाशः–यद्यस्योत्पत्तिस्थानं, अथवा भूम्यम्बुकालाकाशबीजसंयोगा यथाऽवकाशे गृह्यन्ते, तदेवं यथाबीजं यथाऽवकाशेन चेहाऽस्मिञ्जगति 'एके' केचन सत्त्वा ये तथाविधकर्म्मोदयाद्वनस्पतिषूत्पित्सवस्ते हि वनस्पतावुत्पद्यमाना अपि पृथिवीयोनिका भवन्ति, यथा तेषां वनस्पतिर्बीजं–कारणं, परमाधारं विनोत्पत्तिर्न स्यात् तेन पृथिवीयोनिका इत्युच्यन्ते, यथा सेवालकर्दमानामुत्पत्तौ आधारभूतमम्भः, तथा 'पुढविसंभवा' पृथिव्यां वनस्पतिकायसम्भवः, तथा 'पुढविवुक्कमा' पृथिव्यां 'व्युत्क्रमो' वृद्धिर्भवति, [ एवं च ते ] तद्योनिकास्तत्सम्भवास्तद्व्युत्क्रमाः, अर्थः पूर्ववत् । तथा 'कम्मोवगा' ते हि तथाविधेन वनस्पतिकायसम्भवेन कर्म्मणा प्रेर्यमाणास्तेष्वेव वनस्पतिषूप–सामीप्येन तस्यामेव पृथिव्यां गच्छन्तीति कर्म्मोपगा भण्यन्ते, ते हि कर्म्म-

वशगा वनस्पतिकायादागत्य तेष्वेव पुनरपि वनस्पतिषूत्पद्यन्ते, न चाऽन्यत्रोप्ता अन्यत्र भविष्यन्ति, यतः "कुसुमपुरोप्ते बीजे, मथुरायां नाङ्कुरः समुद्भवति । यत्रैव तस्य बीजं, तत्रैवोत्पद्यते प्रसवः ॥ १ ॥" तथा ते जीवाः कर्मनिदानेन-कारणेन समाकृष्यमाणास्तत्र-पृथिव्यां वनस्पतिकाये वा व्युत्क्रमाः-समागताः सन्तो नानाविधयोनिकासु-पृथिवीष्वित्यन्येषामपि षण्णां कायानामुत्पत्तिस्थानभूतासु सचित्ताचित्तमिश्रासु वा श्वेतकृष्णादिवर्ण-तिक्तादिरस-सुरभ्यादिगन्ध-मृदुकर्कशादिस्पर्शादिकैर्विकल्पैर्बहुप्रकारासु भूमिषु वृक्षतया विविधं वर्तन्ते, ते च तत्रोत्पन्नास्तासां च पृथिवीनां 'स्नेहं' स्निग्धभावमाददते, स एव तेषां वनस्पतिजीवानामाहार इति, न च ते पृथिवीशरीरमाहारयन्तः पृथिव्याः पीडामुत्पादयन्ति । एवमप्कायतेजोवायुवनस्पतीनामप्यायोज्यम् । अत्र च पीडाऽनुत्पादनेऽयं दृष्टान्तः, तद्यथा-अण्डोद्भवाद्या जीवा मातुरूष्मणा विवर्द्धमाना गर्भस्था वा उदरगतमाहारमाहारयन्तो नातीव पीडामुत्पादयन्त्येवमसावपि वनस्पतिकायिकः पृथिवीस्नेहमाहारयन्नातीव तस्याः पीडामुत्पादयति उत्पद्यमानः, समुत्पन्नश्च वृद्धिमुपागतोऽसदृशवर्णरसाद्युपेतत्वात् बाधां विदध्यादपीति । एवमप्कायस्य भौमस्यान्तरिक्षस्य वा शरीरमाहारयन्ति । तथा तेजसो भस्मादिकं शरीर गृह्णन्ति, एवं वाय्वादेरपि द्रष्टव्यम् । किं बहूक्तेन ? नानाविधानां त्रसस्थावराणां यच्छरीरं तत्ते समुत्पद्यमाना अचित्तमिति-स्वकायेनावष्टभ्य प्रासुकी कुर्वन्ति, यदि वा परिविध्वस्त पृथिवीकायादिशरीरं किञ्चित्परितापितं कुर्वन्ति, ते च वनस्पतिजीवा एतेषां पृथिवीकायादीनां तच्छरीरं 'पूर्वमाहारित'मिति तैरेव पृथिवीकायादिभिरुत्पत्तिसमये आहारितमासीत्-स्वकायत्वेन परिणामितमासीत्, तदधुनापि वनस्पतिजीवस्तत्रोत्पद्यमान उत्पन्नो वा 'त्वचा' स्पर्शेन आहारयति,

आहार्य च स्वकायत्वेन विपरिणामयति, विपरिणामितं च तच्छरीरं स्वकायेन [ सह ]स्वरूपतां नीतं सत्तन्मयतां प्रतिपद्यते । अपराण्यपि शरीराणि मूलशाखाप्रतिशाखापत्रपुष्पफलादीनि तेषां पृथिवीयोनिकानां वृक्षाणां नानावर्णानि, तथाहि स्कन्धस्यान्यथाभूतो वर्णो मूलस्य चान्यादृश इति, एवं यावन्नानाविधशरीरपुद्गलविकुर्वितास्ते भवन्तीति, तथाहि—नानारसवीर्यविपाका नानाविधपुद्गलोपचयात्सुरूपकुरूपसंस्थानास्तथा दृढाल्पसंहननाः कृशस्थूलस्कन्धाश्च भवन्त्येवमादिनानाविधस्वरूपाणि शरीराणि विकुर्वन्तीति स्थितम् । 'ते जीवा कम्मोववन्नगा' ते च जीवास्तत्र—वनस्पतिषु तथाविधकर्म्मणा उपपन्नगास्ते चेदं एकेन्द्रियजातिस्थावरनामवनस्पतियोग्यायुष्कादिकमिति, तत्कर्मोदयेन तत्रोत्पन्नाः—कम्मोत्पन्ना इत्युच्यन्ते, न पुनः कालेश्वरादिना तत्रोत्पाद्यन्ते इत्येवमाख्यात तीर्थकरादिभिरिति । एवं पृथिवीयोनिका[वृक्षा] उक्ताः, साम्प्रतं तद्योनिकेष्वेव वनस्पतिषु परे समुत्पद्यन्ते इत्येतद्दर्शयितुमाह—

अहावरं पुरक्खायं इहेगतिया सत्ता रुक्खजोणिया रुक्खसंभवा रुक्खवुक्कमा तज्जोणिया तस्संभवा तदुवक्कमा कम्मोवगा कम्मनिदाणेणं तत्थ वुक्कमा पुढविजोणिएहिं रुक्खेहिं रुक्खत्ताए विउट्टंति, ते जीवा तेसिं पुढविजोणियाणं रुक्खाणं सिणेहमाहारेंति । ते जीवा आहारेंति पुढविसरीरं आउतेउवाउवणस्सइसरीरं नाणाविहाणं तसथावराणं पाणाणं सरीरं अचित्तं कुव्वंति परिविद्धत्थं तं सरीरगं पुव्वाहारितं तयाहारियं विप्परिणयं सारूविकडं संतं अवरे वि य णं तेसिं

रुक्खजोणियाणं रुक्खाणं सरीरा नाणावण्णा नाणागंधा नाणारसा नाणाफासा नाणासंठाणसंठिया नाणाविहसरीरपोग्गलविउव्विया ते जीवा कम्मोववन्नगा भवंतीति मक्खायं ॥ [ सू० २ ]

व्याख्या—सुधर्मस्वामी शिष्योद्देशेनेदमाह—अथापरं एतदाख्यातं पुरा तीर्थकरेण, तद्यथा—इहास्मिन् जगत्येके केचन तथाविधकर्म्मोदयवर्त्तिनः ‘ सत्त्वाः ’ प्राणिनः वृक्षा एव योनिरुत्पत्तिस्थानमाश्रयो येषां ते वृक्षयोनिकाः । इह यत् पृथिवीयोनिकेषु वृक्षेष्वभिहितं तदेतेष्वपि वृक्षयोनिकेषु वनस्पतिषु तदुपचयकर्त्तृ सर्वमायोज्यं, यावदाख्यातमिति । साम्प्रतं वनस्पत्यवयवानधिकृत्याह—

अहावरं पुरक्खायं इहेगतिया सत्ता रुक्खजोणिया रुक्खसंभवा रुक्खवुक्कमा य तज्जोणिया तस्संभवा तदुवक्कमा कम्मोवगा कम्मनियाणेणं तत्थ वुक्कमा रुक्खा रुक्खजोणिएसु रुक्खत्ताए विउट्टंति, ते जीवा तेसिं रुक्खजोणियाणं रुक्खाणं सिणेहमाहरेंति, ते जीवा आहारिंति पुढविसरीरं आउतेउवाउवणस्सइसरीरं [ नाणाविहाणं ] तसथावराणं पाणाणं सरीरं अचित्तं कुव्वंति, परिविद्धत्थं तं सरीरगं पुव्वाहारियं तयाहारियं विपरिणयं सारूविकडं संतं अवरे वि य णं तेसिं रुक्खजोणियाणं रुक्खाणं सरीरा णाणावण्णा जाव ते जीवा कम्मोववन्नगा भवंतीति मक्खायं ॥ [ सूत्रं ३ ]

व्याख्या—अथापरमेतदाख्यातं, तद्दर्शयति–इहास्मिञ्जगत्येके, न सर्वे, तथाविधकर्म्मोदयवार्त्तिनो वृक्षयोनिकाः सत्त्वा भवन्ति तदवयवाश्रिताश्चापरे वनस्पतिरूपा एव प्राणिनो भवन्ति, तथाहि—यो ह्येको वनस्पतिजीवः सर्वत्रृक्षावयवव्यापी भवति, तस्य चापरे तदवयवेषु मूलकन्दस्कन्धत्वक्शाखाप्रवालपुष्पपत्रफलबीजभूतेषु दशसु स्थानेषु जीवाः समुत्पद्यन्ते । ते च तत्रोत्पद्यमाना वृक्षयोनिकाः वृक्षोद्भवाः वृक्षव्युत्क्रमाश्चो[च्यन्ते ]त्पद्यन्ते (१) इति, शेषं पूर्ववत् । इह च प्राक्चतुर्विधार्थप्रतिपादकानि सूत्राण्यभिहितानि, तद्यथा–वनस्पतयः पृथिव्याश्रिताः भवन्तीत्येकं १, तच्छरीरमप्कायादिशरीरं वाऽऽहारयन्तीति द्वितीयं २, तथा विध्वद्धास्तदाहारितं शरीरमचित्त विध्वस्तं च कृत्वाऽऽत्मसात्कुर्वन्तीति तृतीयं ३, अन्यान्यपि तेषां पृथिवीकाययोनिकानां वनस्पतीनां शरीराणि मूलकन्दस्कन्धादीनि नानावर्णानि भवन्तीति चतुर्थं ४, एवमत्रापि वनस्पतियोनिकानां वनस्पतीनामेवंविधार्थप्रतिपादकानि चतुष्प्रकाराणि सूत्राणि द्रष्टव्यानि यावत्ते जीवा वनस्पत्यवयवमूलकन्दादिरूपाः कर्म्मोपपन्नगा भवन्तीत्येवमाख्यातम् ॥

अहावरं पुरक्खायं इहेगतिया सत्ता रुक्खजोणिया रुक्खसंभवा रुक्खवुक्कमा तज्जोणिया तस्संभवा तदुवक्कमा कम्मोवगा कम्मनिदाणेणं तत्थ वुक्कमा रुक्खजोणिएसु रुक्खेसु मूलत्ताए कंदत्ताए खंधत्ताए तयत्ताए सालत्ताए पवालत्ताए पत्तत्ताए पुप्फत्ताए फलत्ताए बीयत्ताए विउट्टंति, ते जीवा तेसिं रुक्खजोणियाणं रुक्खाणं सिणेहमाहारिंति, ते जीवा आहारिंति पुढविसरीरं आउ-

तेउवाउवणस्सइसरीरं नाणाविहाणं तसथावराणं पाणाणं सरीरं अचित्तं कुव्वंति परिविद्धत्थं तं सरीरं जाव सारूविकडं संतं, अवरे वि य णं तेसिं रुक्खजोणियाणं मूलाणं कंदाणं खंधाणं तयाणं सालाणं पवालाणं जाव बीयाणं सरीरा णाणावण्णा नाणागंधा जाव नाणाविहसरीरपोग्गलविउविता ते जीवा कम्मोववन्नगा भवंतीति मक्खायं ॥ [ सूत्रं ४ ]

व्याख्या—अयमालापकोऽव्याख्यात एव प्राग्वर्त्तते, अत्र तु लिखितोऽस्ति मया, (पर) सम्यग्नाऽवगतोऽस्ति, तेन विद्वद्भिः सम्यग् विचार्य वाचनीयः+ । साम्प्रतं वृक्षोपर्युपपन्नान् वृक्षानाश्रित्याह—

अहावरं पुरक्खायं इहेगतिया सत्ता रुक्खजोणिया रुक्खसंभवा रुक्खवुक्कमा तज्जोणिया तस्संभवा तदुवक्कमा कम्मोव[वन्न]गा कम्मनिदाणेणं तत्थ वुक्कमा रुक्खजोणिएहिं रुक्खेहिं अज्झारुहत्ताए विउट्टंति, ते जीवा तेसिं रुक्खजोणियाणं अज्झारुहा[ रुक्खा ]णं सिणेहमाहारिंति, ते जीवा आहारिंति पुढविसरीरं जाव सारूविकडं संतं, अवरे वि य णं तेसिं रुक्खजोणियाणं

+ "अथापरमेतदाख्यातं—इहैके सत्त्वा वृक्षयोनिकाः स्युः, तस्यैकस्य वनस्पतेर्मूलारम्भकस्य उपचयकारिणस्ते वृक्षयोनिका उच्यन्ते; यदि वा मूलस्कन्धादिकाः पूर्वोक्तदशस्थानवर्त्तिनस्ते एवमुच्यन्ते । अत्रापि सूत्रचतुष्टयं प्राग्वत् ।" इति हर्ष० ।

अज्झारुहाणं सरीरा नाणावण्णा जावमक्खायं ॥ [ सूत्रं ५ ]

सत्त्वा वृक्षयोनिका भवन्ति, तत्र ये ते पृथिवीयोनिका वृक्षा-

व्याख्या—अथापरमेतत्पुराऽऽख्यातं यद्वक्ष्यमाणमिहैके सत्त्वा वृक्षयोनिका भवन्ति, तत्र ये ते पृथिवीयोनिका वृक्षा-स्तेष्वेव प्रतिप्रदेशतया ये अपरे समुत्पद्यन्ते, तस्यैकस्य वनस्पतेर्मूलारम्भकस्योपचयकारिणस्ते वृक्षयोनिका इत्यभिधीयन्ते, तेषु च वृक्षयोनिकेषु वृक्षेषु कर्म्मोपादाननिष्पादितेषु उपर्युपरि अध्यारोहन्तीत्यध्यारुहा–वृक्षोपरि जाता वृक्षा इत्यभिधीयन्ते । ते च वल्लीवृक्षाभिधानाः कामवृक्षाभिधाना वा द्रष्टव्यास्तद्भावे चापरे वनस्पतिकायाः समुत्पद्यन्ते वृक्षयोनिकेषु वनस्पतिष्विति, इदं प्रथमं सूत्रं । इहापि प्राग्वच्चत्वारि सूत्राणि द्रष्टव्यानि, तद्यथा–वृक्षयोनिकेषु वृक्षेष्वपरेऽध्यारुहाः समुत्पद्यन्ते, ते च तत्रोत्पन्नाः स्वयोनिभूतं वनस्पतिशरीरमाहारयन्ति, तथा पृथिव्यप्तेजोवाय्वादीनां शरीरकमाहारयन्ति, तच्छरीरमाहारितं सदचित्तं विध्वस्तं विपरिणामितमात्मसात्कृतं स्वकायावयवतया व्यवस्थापयन्ति, अपराणि च तेषामध्यारुहाणां नानाविध-रूपरसगन्धस्पर्शोपेतानि नानासँस्थानानि शरीराणि भवन्ति, ते जीवास्तत्र स्वकृतकर्म्मोपपन्ना भवन्त्येतदाख्यातमिति प्रथमं सूत्रम् १ ॥

अहावरं पुरक्खायं इहेगतिया सत्ता अज्झारुहजोणिया अज्झारुहसंभवा जाव कम्मनिदाणेणं तत्थ वुक्कमा रुक्खजोणिएसु अज्झारुहेसु अज्झारुहत्ताए विउट्टंति, ते जीवा तेसिं अज्झारुह-[ रुक्ख ]जोणियाणं अज्झारुहाणं सिणेहमाहारिंति, ते जीवा[ आहारिंति ]पुढविसरीरं जाव

सारूविकडं संतं, अवरे वि य णं तेसिं अज्झारुहजोणियाणं अज्झारुहाणं सरीरा नाणावण्णा जावमक्खायं ॥ [ सूत्रं ६ ]

व्याख्या—अथापरं पुराऽऽख्यातं ये ते प्राग् वृक्षयोनिकेषु वृक्षेषु अध्यारुहाः प्रतिपादितास्तेऽन्ये त्वपरे प्रतिप्रदेशोपचयकर्त्तारोऽध्यारुहवनस्पतित्वेनोपपद्यन्ते, ते च जीवा अध्यारुहप्रदेशेषूत्पन्ना अध्यारुहजीवास्तेषां स्वयोनिभूतानि शरीराण्याहारयन्ति, तत्रापराण्यपि पृथिव्यादीनि शरीराण्याहारयन्ति, अपराणि चाध्यारुहगम्भवानामध्यारुहजीवानां नानावर्णकादीनि शरीराणि भवन्त्येवमाख्यातमिति द्वितीयं सूत्रम् २ ॥

अहावरं पुरक्खायं इहेगतिया सत्ता अज्झारुहजोणिया अज्झारुहसंभवा जाव कम्मनिदाणेणं तत्थ वुक्कमा अज्झारुह( रुक्ख )जोणिएसु ( अज्झारुहेसु ) अज्झारुहत्ताए विउट्टंति, ते जीवा तेसिं अज्झारुहजोणियाणं अज्झारुहाणं सिणेहमाहारिंति, ते जीवा आहारिंति पुढविसरीरं आउ[ सरीरं ] जाव सारूविकडं संतं, अवरे वि य णं तेसिं अज्झारुहजोणियाणं अज्झारुहाणं सरीरा नाणावन्ना जावमक्खायं ॥ [ सू० ७ ]

व्याख्या—अथापरं पुराऽऽख्यातमिहैके सत्त्वा अध्यारुहसम्भवेष्वध्यारुहेष्वध्यारुहत्वेनोत्पद्यन्ते, ये चैवमुत्पद्यन्ते तेऽध्या-

रुहयोनिकानामध्यारुहाणां यानि शरीराणि तान्याहारयन्ति । द्वितीयसूत्रे वृक्षयोनिकानामध्यारुहाणां यानि शरीराणि तानि अपरेऽध्यारुहजीवा आहारयन्ति, तृतीये त्वध्यारुहयोनिकानामध्यारुहजीवानां शरीराणि द्रष्टव्यानीति विशेषः । इदं तु चतुर्थकं, तद्यथा—

अहावरं पुरक्खायं इहेगतिया सत्ता अज्झारुहजोणिया अज्झारुहसंभवा जाव कम्मनिदाणेणं तत्थ वुक्कमा अज्झारुहजोणिएसु अज्झारुहेसु( अज्झारुहत्ताए )मूलत्ताए जाव बीयत्ताए विउट्टंति, ते जीवा तेसिं अज्झारुहजोणियाणं अज्झारुहाणं सिणेहमाहारिंति( ते जीवा आहारिंति पुढवीसरीरं आउ० ) जाव( सारूविकडं संतं, )अवरे वि य णं तेसिं अज्झारुहजोणियाणं ( अज्झारुहाणं ) मूलाणं जाव बीयाणं सरीरा नाणावण्णा जावमक्खायं ॥ [ सू० ८ ]

व्याख्या—अथापरमिदमाख्यातं, तद्यथा-इहैके सत्त्वा अध्यारुहयोनिकेष्वध्यारुहेषु मूलकन्दस्कन्धत्वक्शाखाप्रवालपत्रपुष्पफलबीजभावेनोत्पद्यन्ते, ते तथाविधकर्मोपगा भवन्तीत्येतदाख्यातमिति । शेषं पूर्ववदिति । साम्प्रतं वृक्षव्यतिरिक्तं शेषवनस्पतिकायमाश्रित्याह—

अहावरं पुरक्खायं इहेगतिया सत्ता पुढविजोणिया पुढविसंभवा जाव नाणाविहासु जोणिया-

सु पुढवीसु तणत्ताए विउट्टंति, ते जीवा तेसिं नाणाविहजोणियाणं पुढवीणं सिणेहमाहारिंति जाव ते जीवा कम्मोववन्ना भवंतीति मक्खायं १ [ सू० ९ ] एवं पुढविजोणिएसु तणेसु तणत्ताए विउट्टंति, जाव मक्खातं २ [ सू० १० ] एवं तणजोणिएसु तणेसु तणत्ताए विउट्टंति, तणजोणियं तणसरीरं च आहारिंति जावमक्खायं ३ । एवं तणजोणिएसु तणेसु मूलत्ताए जाव वीयत्ताए विउट्टंति ते जीवा जाव[एव]मक्खायं ४ ।

व्याख्या—अथापरमिदमाख्यातं यदुत्तरत्र वक्ष्यते, तद्यथा–इहैके सत्वाः [ पृथिवीयोनिकाः ] पृथिवीसम्भवाः [पृथिवी-] व्युत्क्रमा इत्यादयो यथा वृक्षेषु चत्वारो[चत्वार आ]लापकाः एवं तृणान्यप्याश्रित्य द्रष्टव्यास्ते चामी–नानाविधासु पृथिवीयोनिषु तृणत्वेनोत्पद्यन्ते पृथिवीशरीरं चाहारयन्ति १ । द्वितीये तु पृथिवीयोनिकेषु तृणेषूत्पद्यन्ते तृणशरीरं चाहारयन्ति २ । तृतीयं तु तृणयोनिकेषु तृणेषूत्पद्यन्ते तृण [ योनिकं ] तृणशरीरं चाहारयन्ति ३ । चतुर्थे तृणयोनिकेषु तृणावयवेषु मूलादिषु दशप्रकारेषूत्पद्यन्ते तृणशरीरं चाहारयन्तीत्येवं चत्वार आलापका इति ४ ।

[ एवं ] ओसहीणं चत्तारि आलावगा, एवं हरियाण वि चत्तारि आलावगा [ सू० ११ ]

व्याख्या—एवमौषध्याश्रयाश्चत्वार आलापका भणनीयाः, नवरं–औषधीग्रहणं कर्त्तव्यं, एवं हरिताश्रयाश्चत्वारः

आलापका वाच्याः । कुहणेषु त्वेक एव आलापको द्रष्टव्यः, स चायं—

अहावरं पुरक्खायं इहेगतिया सत्ता पुढविजोणिया पुढविसंभवा जाव कम्मनिदाणेणं तत्थ वुक्कमा णाणाविहजोणियासु पुढवीसु आयत्ताए वायत्ताए कायत्ताए कूहणत्ताए, कंदु[क]त्ताए उवेहलि[णि]यत्ताए निव्वेहलि[णि]यत्ताए सच्छत्ताए छत्तगत्ताए वासाणियत्ताए कूरत्ताए विउट्टंति, ते जीवा तेसिं नाणाविहजोणियाणं पुढवीणं सिणेहमाहारेंति, ते जीवा आहारिंति पुढवी सरीरं जाव संतं, अवरे वि य णं तेसिं पुढविजोणियाणं आयत्ताणं जाव कूराणं सरीरा नाणावण्णा जावमक्खायं । इक्को चेव आलावगो, सेसा तिन्नि नत्थि ।

व्याख्या—कुहणेष्वेक एवालापको ज्ञेयः, शेषास्त्रयो न सन्ति, तद्योनिकानामपरेषामभावादिति । इह चामी वनस्पतिविशेषा लोकव्यवहारतोऽवगन्तव्याः प्रज्ञापनातो वा अवसेया इति । सम्प्रतमप्काययोनिकस्य वनस्पतेः स्वरूपं दर्शयितुमाह–

अहावरं पुरक्खायं इहेगतिया सत्ता उदगजोणिया उदगसंभवा जाव कम्मनियाणेणं तत्थ वुक्कमा णाणाविहजोणिएसु उदगेसु रुक्खत्ताए विउट्टंति, ते जीवा तेसिं नाणाविहजोणियाणं उदगाणं सिणेहमाहारिंति, ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं उदग-

जोणियाणं रुक्खाणं सरीरा नाणावण्णा जावमक्खायं। जहा पुढविजोणियाणं रुक्खाणं चत्तारि गमा अज्झारुहाण वि तहेव तणाणं ओसहीणं [ हरियाणं ]चत्तारि आलावगा भाणियवा इक्केके ।

व्याख्या—अथानन्तरमेतद्वक्ष्यमाणमाख्यातं, तद्यथा-इहैके सत्त्वास्तथाविधकर्म्मोदयादुदकयोनिका उदकसम्भवा यावत्कर्म्मनिदानेन मन्दानितास्तदुपक्रमा भवन्ति, ते च तत्कर्म्मवशगा नानाविधयोनिकेषूदकेषु वृक्षत्वेन [पनकशैवलादित्वेन] 'व्युत्क्रामन्ति' उत्पद्यन्ते। ये च जीवा उदकयोनिका वृक्षत्वेनोत्पन्नास्ते तच्छरीर-मुदकशरीरमाहारयन्ति, न केवलं तदेव, अन्यदपि पृथिवीकायादिकं शरीरमाहारयन्तीति। शेषं पूर्ववज्ज्ञेयम्। यथा पृथिवीयोनिकानां वृक्षाणां चत्वार आलापका एवमुदकयोनिकानामपि वृक्षाणां भवन्तीत्येवं द्रष्टव्यं, तद्रूपजानामपरॐस्य पागुक्तस्य*विकल्पाभावादिति । किं तर्हि ? एक एवालापको भवति,[ए]तेषां हि उदकाकृतीनां वनस्पतिकायानां तथा अवकपनकशैवलादीनामपरस्य प्रागुक्तस्य विकल्पस्याभावादिति, एते चोदकाश्रया वनस्पतिविशेषाः कलम्बुकाहडादयो लोकव्यवहारतोऽवसेया इति ।

अहावरं पुरक्खायं इहेगतिया सत्ता उदगजोणिया उदगसंभवा जाव कम्मानियाणेणं तत्थ वुक्कमा नाणाविहजोणिएसु उदएसु उदगत्ताए अवगत्ताए पणगत्ताए सेवालत्ताए कलंबुगत्ताए हडत्ताए कसेरुगत्ताए कच्छभाणियत्ताए उप्पलत्ताए पउमत्ताए कुमुयत्ताए नलिणत्ताए सुभगत्ताए

* ॐ एतच्चिन्हान्तर्गतः पाठो लेखकदोषजः सम्भाव्यते, वृत्तिष्वनुपलम्भात् ।

सोगंधियत्ताए पोंडरीयमहापोंडरीयत्ताए सयपत्तत्ताए सहस्सपत्तत्ताए, एवं कल्हारकोंकणत्ताए अरविंदत्ताए तामरसत्ताए भिसाभिसमुणालपुक्खलत्ताए पुक्खलच्छिभगत्ताए विउट्टंति, ते जीवा तेसिं नाणाविहजोणियाणं उदगाणं सिणेहमाहारिंति, ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं उदगजोणियाणं उदगाणं जाव पुक्खलच्छिभगाणं सरीरा नाणावण्णा जावमक्खायं। एको चेव आलावगो ३। [ सू० १२ ]

व्याख्या—अथापरमन्यत् स्थानकं तीर्थकरैराख्यातं, तद्यथा–'इह' जगति एके जीवा उदकयोनिका नानायोनि(का)के (?) अवकपनकसेवालाः यावन्मृणालपुक्खलान्ता उत्पद्यन्ते, ते जीवा नानाविधयोनिकोदकस्नेहमाहारयन्ति इत्यादि पूर्ववत्। अस्यायमेक एव आलापको ज्ञेयः।

अहावरं पुरक्खायं इहेगतिया सत्ता तेसिं चेव पुढविजोणिएहिं रुक्खेहिं रुक्खजोणिएहिं ×तणेहिं, तणजोणिएहिं× मूलेहिं जाव बीएहिं+ (रुक्खजोणिएहिं अज्झारुहेहिं, अज्झारुहजोणिएहिं

× एतच्चिन्हान्तर्वर्त्तिपाठस्थाने 'रुक्खेहिं रुक्खजोणिएहिं' इत्येतावान् पाठोऽस्ति सवृत्तिकमुद्रितप्रतिषु।

+ ( ) नास्त्येतच्चिन्हान्तर्गतः पाठः पुण्यपत्तनीयदीपिकाप्रतिषु।

*जाव बीएहिं, पुढविजोणिएहिं तणेहिं *तणजोणिएहिं मूलेहिं जाव बीएहिं, एवं [ ओसहीहिं ] सव्वत्थ वि तिन्नि आलावगा, एवं हरिएहिं ) वि तिन्नि आलावगा, पुढविजोणिएहिं वि आएहिं काएहिं जाव कुरूए[ कूरे]हिं उदगजोणिएहिं रुक्खेहिं * रुक्खजोणिएहिं मूलेहिं जाव बीएहिं, एवं अज्झारुहेहिं वि तिन्नि तणेहिं वि तिन्नि आलावगा, ओसहीहिं वि तिन्नि हरिएहिं वि तिन्नि उदगजोणिएहिं उदगएहिं अवएहिं जाव पुक्खलच्छिभएहिं तसपाणत्ताए विउट्टंति ४ । ते जीवा तेसिं पुढविजोणियाणं उदगजोणियाणं रुक्खजोणियाणं अज्झारुहजोणियाणं तणजोणियाणं ओसहिजोणियाणं हरियजोणियाणं रुक्खाणं अज्झारुहाणं तणाणं ओसहीणं हरियाणं मूलाणं जाव बीयाणं आयाणं कायाणं जाव कुरवा[कूरा]णं उदगाणं अवगाणं जाव पुक्खलच्छिभगाणं सिणेहमाहारिंति । ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं रुक्खजोणियाणं अज्झारुहजोणियाणं तणजोणियाणं ओसहिजोणियाणं हरियजोणियाणं मूलजोणियाणं कंद-

* अत्रैतच्चिन्हस्थानेषु "अज्झारुहेहिं अज्झारुहजोणिएहिं मूलेहिं" तथा "तणजोणिएहिं तणेहिं" तथा "रुक्खजोणिएहिं रुक्खेहिं" इतिरूपेण पाठाधिक्यमस्ति सवृत्तिकमुद्रितप्रतिषु ।

जोणियाणं जाव बीयजोणियाणं आयजोणियाणं कायजोणियाणं[ जाव-कूरजोणियाणं ]उदग-
जोणियाणं अवगजोणियाणं जाव पुक्खलच्छिभगजोणियाणं तसपाणाणं सरीरा नाणावण्णा
जावमक्खायं १ ॥ [ सू० १३ ]

व्याख्या—ते वनस्पतावुत्पन्ना जीवाः पृथिवीयोनिकानां तथोदकानां वृक्षाध्यारुहतृणौषधिहरितयोनिकानां वृक्षाणां यावत्स्नेहमाहारयन्तीत्येतदाख्यातमिति, तथा त्रसानां प्राणिनां शरीरमाहारयन्तीत्येतदवमाने द्रष्टव्यमिति । तदेव वनस्पति-कायिकानां सुप्रतिपाद्यचैतन्यानां स्वरूपमभिहितं, शेषाः पृथिवीकायादयश्चत्वार एकेन्द्रिया उत्तरत्र प्रतिपादयिष्यन्ते, साम्प्रतं त्रसकायिकस्यावसरः, स च नारकतिर्यङ्मनुष्यदेवभेदभिन्नः, तत्र नारका अप्रत्यक्षत्वेनानुमानग्राह्याः, [तथाहि—] दुष्कृत-कर्म्मफलभुजः केचन सन्तीत्येवं ते ग्राह्याः, तदाहारोऽप्येकान्तेनाशुभपुद्गलनिर्वर्तित ओजसा, न प्रक्षेपेणेति, देवा अप्यधुना बाहुल्येन अनुमानगम्या ए[व], तेषामप्याहारः शुभ एकान्तेनौजोनिर्वर्त्तितो, न प्रक्षेपकृत इति । स चाभोगनिर्वर्त्तितोऽना-[भोगकृतश्च, तत्राना]भोगकृतः प्रतिसमयभावी आभोगकृतश्च जघन्येन चतुर्थभक्तकृत उत्कृष्टतस्तु त्रयस्त्रिंशद्वर्षसहस्रनिष्पादित इति, शेषास्तु तिर्यङ्मनुष्यास्तेषां च मध्ये मनुष्याणामभ्यर्हितत्वात्तानेव प्राक् प्रदर्शयितुमाह—

अहावरं पुरक्खायं नाणाविहाणं मणुस्साणं, तं जहा—कम्मभूमिगाणं अकम्मभूमिगाणं अंतर-दीवगाणं आरियाणं मिलक्खुगाणं, तेसिं च णं अहाबीएणं अहावगासेणं इत्थीए पुरिसस्सय कम्म-

कडाए जोणिए एत्थ णं मेहुणवत्तिए नामं संजोगे समुपज्जति, ते दुहओ वि सिणेहं संचिणंति ।

व्याख्या—अथानन्तरमेत'त्पुरा' पूर्वमाख्यातं, तद्यथा—आर्याणामनार्याणां च कर्मभूमिजाकर्मभूमिजादीनां मनुष्याणां नानाविधयोनिकानां स्वरूपं वक्ष्यमाणनीत्या समाख्यातं, तेषां च स्त्रीपुंनपुंसकभेदभिन्नानां 'यथाबीजेने'ति यद्यस्य बीजं, तत्र स्त्रियाः सम्बन्धि शोणितं पुरुषस्य शुक्रमेतदुभयमप्यविध्वस्तं, शुक्राधिकं सन्मनुष्यस्य शोणिताधिकं स्त्रियास्तत्समता नपुंसकस्य कारणतां प्रतिपद्यते, तथा 'यथावकाशेने'ति यो यस्यावकाशो मातुरुदरकुक्ष्यादिकः, तत्रापि किल वामा स्त्रियो दक्षिणा कुक्षिः पुरुषस्योभयाऽऽश्रितः पण्ढ इति । तत्र चाविध्वस्ता योनिरविध्वस्तं+ बीजमिति चत्वारो भङ्गकाः, तत्राप्याद्य एव भङ्गक उत्पत्तेरवकाशो, न शेषेषु त्रिष्विति । अत्र च स्त्रीपुंसयोर्वेदोदये सति पूर्वकर्मनिर्वर्तितायां योनौ 'मैथुनप्रत्ययिको' रताभिलाषोदयजनितोऽग्निकारणयोररणिकाष्ठयोरिव संयोगः समुत्पद्यते, तत्संयोगे च तच्छुक्रशोणिते समुपादाय तत्रोत्पित्सवो जन्तवस्तैजसकार्मणाभ्यां शरीराभ्यां कर्मरज्जुसन्दानितास्तत्रोत्पद्यन्ते । ते च प्रथममुभयोरपि स्नेहमाचिन्वन्त्यविध्वस्तायां योनौ सत्यामिति, विध्वस्यते तु योनिः "पञ्चपञ्चाशिका नारी, सप्तसप्ततिकः पुमानि"ति, तथा द्वादश मुहूर्तानि यावच्छुक्रशोणिते अविध्वस्तयोनिके भवतस्तत ऊर्ध्वं ध्वंसमुपगच्छत इति ।

तत्थ णं जीवा इत्थित्ताए पुरिसत्ताए नपुंसगत्ताए विउट्टंति ।

+ "बीज १, अविध्वस्ता योनिर्विध्वस्तं बीजं २, विध्वस्ता योनिरविध्वस्तं बीजं ३, विध्वस्ता योनिर्विध्वस्तं ।" इति वृ० ।

व्याख्या—तत्र च जीवा उभयोरपि स्नेहमा[हार्य–आ]दाय स्वकर्मविपाकेन यथास्वं स्त्रीपुंनपुंसकभावेन 'विउट्टंति'त्ति विवर्त्तन्ते–समुत्पद्यन्ते ।

ते जीवा माउए उयं पिउयं सुक्कं तं तदुभयसंसट्ठं कलुसं किव्विसं तप्पढमयाए आहारमाहरिंति । ततो पच्छा जं से माता नाणाविहाओ रसवईओ आहारमाहरेति ततो एगदेसेणं ओयमाहारिंति, आणुपुव्वेणं वुड्ढा पलिवागमणुप्पवन्ना ततो कायातो अभिनिवट्टमाणा इत्थिं वेगया जणयंति पुरिसं वेगया जणयंति णपुंसगं वेगया जणयंति । ते जीवा डहरा समाणा माउए खीरं सप्पिं च आहारिंति आणुपुव्वेणं वुड्ढा ओयणं कुम्मासं तसथावरे य पाणे, ते जीवा आहारिंति पुढविसरीरं जाव सारूविकडं संतं, अवरे वि य णं तेसिं णाणाविहाणं मणुस्साणं कम्मभूमिगाणं अकम्मभूमिगाणं अंतरदीवगाणं आरियाणं मिलक्खूणं सरीरा नाणावण्णा भवंतीति मक्खायं ॥ [सू०१४]

व्याख्या—ततस्ते जीवास्तत्रोत्पन्नाः सन्तो मातुराहारमोजसा मिश्रेण वा लोमभिर्वाऽऽनुपूर्व्येणाहारयन्ति 'यथाक्रमं' आनुपूर्व्येण वृद्धिमुपगताः सन्तो 'गर्भपरिपाकं' गर्भनिष्पत्तिमनुप्रपन्नास्ततो मातुः कायादभिनिवर्त्तमानाः–पृथग्भवन्तस्तद्योनेर्निर्गच्छन्ति, ते च तथाविधकर्मोदयादात्मनः स्त्रीभावमप्येकदा जनयन्ति अपरे केचन पुम्भावं नपुंसकभावं च, इदमुक्तं

भवति-स्त्रीपुंनपुंसकभावः प्राणिनां स्वकृतकर्मनिर्वर्त्तितो भवति, न पुनर्यो यादृगिहभवे सोऽमुष्मिन्नपि तादृगेवेति, ते च तदहर्जातबालकाः सन्तः पूर्वभवाभ्यासादाहाराभिलाषिणो मातुः स्तनस्तन्यमाहारयन्ति, [ तद् ]आहारेण च वृद्धिमुपगतास्तदुत्तरकालं नवनीतदध्योदनादिकं यावत्कुल्माषान् भुञ्जते, तथाऽऽहारत्वेनोपगतांस्त्रसांस्थावरांश्च प्राणिनस्ते जीवा आहारयन्ति, तथा नानाविधपृथिवीशरीर लवणादिकं सचेतनमचेतनं वा आहारयन्ति, तच्चाऽऽहारितमात्ममात्कृतं सद् " रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि भातव " इति सप्तधा व्यवस्थापयन्ति, अपराण्यपि तेषां नानाविधमनुष्याणां [ नानावर्णानि ] शरीराण्याविर्भवन्ति, ते च तद्योनिकत्वात्तदाधारभूतानि नानावर्णानि शरीराण्याहारयन्तीत्येवमाख्यातमिति। एवं तावद्गर्भव्युक्रान्तजमनुष्याः प्रतिपादितास्तदनन्तर सम्मूर्छनजानामवसरः, तांश्चोत्तरत्र प्रतिपादयिष्यामि । साम्प्रत तिर्यग्योनिकास्तत्रापि जलचरानुद्दिश्याऽऽह—

अहावरं पुरक्खायं णाणाविहाणं जलचराणं पंचिंदियतिरिक्खजोणियाणं, तं जहा-मच्छाणं जाव सुंसुमाराणं तेसिं च णं अहाबीएणं अहावगासेणं इत्थीए पुरिसस्स य कम्मकडाए जोणीए तहेव, जाव ततो एगदेसेणं ओयमाहारिंति आणुपुव्वेणं वुड्ढा पलिपागमणुप्पवन्ना ततो कायातो अभिनिवट्टमाणा. अंडं वेगया जणयंति पोयं ए[वे]गया जणयंति, से अंडे उब्भिज्जमाणे इत्थिं वेगया जणयंति पुरिसं वेगया जणयंति नपुंसगं वेगया जणयंति । ते जीवा डहरा समाणा

आउसिणेहमाहारिंति आणुपुवेणं वुड्ढा वणस्सइकायं तसथावरे य पाणे, ते जीवा आहारेंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं नाणाविहाणं जलचरपंचिंदियतिरिक्खजोणियाणं मच्छाणं सुंसुमाराणं सरीरा नाणावण्णा जावमक्खायं ।

व्याख्या—अथाऽनन्तरमेतद्वक्ष्यमाणं पूर्वमाख्यातं, तद्यथा—नानाविधजलचरपञ्चेन्द्रियतिर्यग्योनिकानां सम्बन्धिनः काँश्चित् स्वनामग्राहमाह—" मच्छाणं जाव सुंसुमाराणं " तेषां म[त्स्य]च्छकच्छपादीनां यस्य यथा यद्बीजं तेन तथा 'यथाऽवकाशेन' यो यस्योदरादावकाशस्तेन, स्त्रियाः पुरुषस्य च स्वकर्मनिर्वर्तितायां योनावुत्पद्यन्ते, ते च तत्राभिव्यक्ता मातुराहारेण वृद्धिमुपगताः स्त्रीपुंनपुंसकानामन्यतमत्वेनोत्पद्यन्ते, ते च जीवा जलचरा गर्भाद्व्युत्क्रान्ताः सन्तस्तदनन्तरं यावद् ' डहर 'त्ति लघवस्तावदप्स्नेहमप्कायमेवाऽहारयन्ति, आनुपूर्व्येण च वृद्धाः सन्तो वनस्पतिकायं त्रसान् स्थावराँश्चाहारयन्ति । तथा ते जीवाः पृथिवीशरीरं—कर्दमस्वरूप क्रमेण वृद्धिमुपगताः सन्त आहारयन्ति, तच्चाहारितं स्वसमानरूपीकृतमात्मसात्परिणामयन्ति, शेषं सुगमं, यावत्कर्म्मोपगा भवन्तीत्येवमाख्यातम् । साम्प्रतं स्थलचरानुद्दिश्याह—

अहावरं पुरक्खायं नाणाविहाणं चउप्पयथलचरपंचिंदियतिरिक्ख जोणियाणं[तं जहा—] एगखुराणं, दुखुराणं, गंडीपदाणं, सणप्फयाणं, तेसिं च णं अहाबीएणं अहावगासेणं इत्थीए

पुरिसस्स य कम्म० जाव मेहुणवत्तिए नामं संजोगे समुप्पज्जति, ते दुहंओ सिणेहं संचिणंति, तत्थ णं जीवा इत्थित्ताए पुरिस[त्ताए ]जाव विउट्टंति। ते जीवा माऊए उयं पिउसुक्कं, एवं जहा मणुस्साणं जाव इत्थिं वेगया जणयंति पुरिसंपि नपुंसगंपि, ते जीवा डहरा समाणा माउणो खीरं सप्पिं आहारिंति। आणुपुव्वेणं वुड्ढा वणस्सतिकायं तसथावरे य पाणे, ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं नाणाविहाणं चउप्पयथलचरपंचिंदियतिरिक्खजोणियाणं एगखुराणं जाव सणप्फयाणं सरीरा नाणावण्णा जावमक्खायं।

व्याख्या—अथापरमेतत्तीर्थकरैराख्यातं नानाविधानां चतुष्पदानां, तद्यथा-एकखुराणामश्वानां, द्विखुराणां गोमहिष्यादीनां, गण्डीपदानां हस्त्यादीनां, सनखपदानां सिंहव्याघ्रादीनां, तेषां यथाबीजं यथाऽवकाशं जीवानामुत्पत्तिस्ते च वृद्धिमुपगताः सन्तोऽपरेषामपि शरीरमाहारयन्तीति, शेषं सुगमं, यावत्कर्म्मोपगा भवन्तीति। साम्प्रतं उरःपरिसर्पानुद्दिश्याह—

अहावरं पुरक्खायं नाणाविहाणं उरपरिसप्पाणं थलचरपंचिंदियतिरिक्खजोणियाणं, तं जहा—अहीणं अजगराणं असालिआणं महोरगाणं, तेसिं च णं [अहाबीएणं] अहावगासेणं इत्थीए जाव

इत्थ णं मेहुणे, एवं तं चेव, नाणत्तं—अंडं वेगया जणयंति पोयं वेगया जणयंति, से अंडे उब्भिज्जमाणे इत्थिं वेगया जणयंति पुरिसंपि नपुंसगंपि, ते जीवा डहरा समाणा वाउकायमाहारेंति, आणुपुव्वेणं वुड्ढा वणस्सतिकायं तसथावरे पाणे, ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं नाणाविहाणं उरपरिसप्पथलचरपंचिंदियतिरिक्ख० अहीणं जाव महोरगाणं सरीरा नाणावण्णा [ नाणागंधा ] जावमक्खायं ।

×[ व्याख्या—' नानाविधानां ' बहुप्रकाराणां उरसा ये प्रसर्पन्ति तेषां, तद्यथा—अहीनामजगराणामशालिकानां महोरगाणां यथाबीजेन यथाऽवकाशेन चोत्पन्नयाऽण्ड[ज]त्वेन पोतजत्वेन वा गर्भान्निर्गच्छन्ति, ते च निर्गता मातुरूष्माणं ( बाष्पमयं ) वायुं चाहारयन्ति, तेषां च जातिप्रत्ययेन तेनैवाऽऽहारेण क्षीरादिनेव वृद्धिरुपजायते, शेषा ] व्याख्या सुगमैव पूर्ववत् । साम्प्रतं भुजपरिसर्पानुद्दिश्याह—

अहावरं पुरक्खायं नाणाविहाणं भुयपरिसप्पाणं थलचरपंचिंदियतिरिक्खजोणियाणं, तं जहा—गोहाणं नउलाणं सीहाणं सरडाणं सल्लाणं सरवाणं खराणं घरकोइलाणं विस्संभराणं मूसगाणं

× नास्त्येतच्चिन्हान्तर्गतः पाठः प्रत्यन्तरेषु ।

मंगुसाणं पयलातियाणं बिरालियाणं जोहाणं चउप्पाइयाणं, तेसिं च णं अहाबीएणं अहावगासेणं इत्थीए पुरिसस्स य, जहा उरपरिसप्पाणं तहा भाणियव्वं, जाव सारूविकडं संतं, अवरे वि य णं तेसिं नाणाविहाणं भुयपरिसप्पपंचिंदियथलचरातिरिक्खाणं गोहाणं जावमक्खायं ।

व्याख्या—× [ नानाविधानां भुजाभ्यां ये प्र(परि)सर्पन्ति तेषां, तद्यथा—गोधानकुलादीनां स्वकर्म्मोपात्तेन यथाबीजेन यथाऽवकाशेन चोत्पत्तिर्भवति, ते चाण्डजत्वेन पोतजत्वेन चोत्पन्नास्तदनन्तरं मातुरूष्मणा वायुना चाहारितेन वृद्धिमुपयान्ति । शेषं ] सुगममेव पूर्ववत् । साम्प्रत खेचरानुद्दिश्याह —

अहावरं पुरक्खायं नाणाविहाणं खहचरपंचिंदियतिरिक्खजोणियाणं, तं जहा—चम्मपक्खीणं लोमपक्खीणं समुग्गपक्खीणं विततपक्खीणं, तेसिं च णं अहाबीएणं अहावगासेणं इत्थीए जाव जहा उरपरिसप्पाणं, नाणत्तं—ते जीवा डहरा समाणा माउए गायसिणेहं आहारिंति । आणुपुव्वेणं वुड्ढा वणस्सइकायं, तस-थावरे य पाणे, ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं नाणाविहाणं खहचरपंचिंदियतिरिक्खजोणियाणं० चम्मपक्खीणं जावमक्खायं । [ सू० १६ ]

× नास्त्येतच्चिन्हान्तर्वर्तिपाठः प्रत्यन्तरेषु ।

व्याख्या—नानाविधानां खेचराणामुत्पत्तिरेवं द्रष्टव्या, त[द्य]था-चर्म्मपक्षिणां चर्मकीटवल्गुलीप्रभृतीनां, तथा लोमपक्षिणां सारस-राजहंस-काक-चक्रादीनां, तथा समुद्गपक्षि-विततपक्षिणां बहिर्द्वीपवर्त्तिनां, एतेषां यथाबीजेन यथाऽवकाशेन चोत्पन्नानामाहारक्रिया एवमुपजायते, तद्यथा-सा पक्षिणी तदण्डकं स्वपक्षाभ्यामावृत्य तावत्तिष्ठति यावत्तदण्डकं तदूष्मणाऽऽहारितेन वृद्धिमुपगतं सत् कललावस्थां परित्यज्य चञ्च्वादिकानवयवान् परिसमापय्य भेदमुपयाति, तदुत्तरकालमपि मात्रोपनीतेनाहारेण वृद्धिमुपयाति, शेषं प्राग्वत् । व्याख्याताः पञ्चेन्द्रिया मनुष्यास्तिर्यञ्चश्च, तेषां चाहारो द्वेधा-आभोगनिर्वर्त्तितोऽनाभोगनिर्वर्त्तितश्च, तत्राऽनाभोगनिर्वर्त्तितः प्रतिक्षणभावी आभोगनिर्वर्त्तितस्तु यथास्वं क्षुद्वेदनीयोदयभावीति । साम्प्रतं विकलेन्द्रियानुद्दिश्याह—

अहावरं पुरक्खायं इहेगतिया सत्ता नाणाविहजोणिया नाणाविहसंभवा नाणाविहवुक्कमा तज्जोणिया तस्संभवा तदुवक्कमा कम्मोवगा कम्मनिदाणेणं तत्थ वुक्कमा नाणाविहाणं तसथावराणं पोग्गलाणं सरीरेसु वा सच्चित्तेसु वा अचित्तेसु वा अणुसूयत्ताए विउट्टंति । ते जीवा तेसिं नाणाविहाणं तसथावराणं पाणाणं सिणेहमाहारिंति । ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं तसथावरजोणियाणं अणुसूयगाणं सरीरा नाणावण्णा जावमक्खायं । एवं दुरूवसंभवत्ताए, एवं खुरदुगत्ताए । [ सू० १७ ]

व्याख्या—अथानन्तरमेतदाख्यातं 'इह'अस्मिन् संसारे 'एके'केचन तथाविधकर्म्मोदयवशवर्त्तिनः 'सत्त्वाः' प्राणिनो नानाविधयोनिकाः कर्म्मनिदानेन–स्वकृतकर्म्मणा तत्रोत्पत्तिस्थाने 'उपक्रम्य' आगत्य नानाविधत्रसस्थावराणां शरीरेषु सचित्तेषु वाऽचित्तेषु वा 'अणुसूयत्ताए'त्ति अपरशरीराश्रिततया परनिश्रया 'विवर्त्तन्ते' समुत्पद्यन्ते, यावत्ते च जीवा विकलेन्द्रियाः सचित्तेषु–मनुष्यादिशरीरेषु गूकालिक्षादिकत्वेनोत्पद्यन्ते, तथा तत्परिभुज्यमानेषु मञ्चकादिष्वचित्तेषु मत्कुणत्वेनाविर्भवन्ति–उत्पद्यन्ते, तथऽचित्तीभूतेषु मनुष्यादिशरीरेषु विकलेन्द्रियशरीरकेषु वा ते जीवा 'अनुभू [?स्यू] तत्वेन' परनिश्रया कृम्यादित्वेनोत्पद्यन्ते, परे तु सचित्ते तेजस्कायादौ मूषकादिकत्वेनोत्पद्यन्ते, यत्र चाग्निस्तत्र वायुरित्यत स्तदुद्भवा अपि द्रष्टव्याः, तथा पृथिवीमनुश्रित्य कुन्थुपिपीलिकादयो वर्षादावूष्मणा संस्वेदजा जायन्ते, तथोदके पूतरका डोल्लणकभ्रमरिकाछेदनकादयः समुत्पद्यन्ते, तथा वनस्पतिकाये पनकभ्रमरादयो जायन्ते । तदेवं ते जीवास्तानि स्वयोनि-शरीराण्याहारयन्ति इत्येवमाख्यातमिति । साम्प्रतं पञ्चेन्द्रियमूत्रपुरीषोद्भवान् प्राणिनः प्रतिपादयितुमाह 'एव' मित्यादि, यथा सचित्ताचित्तनिश्रया विकलेन्द्रियाः समुत्पद्यन्ते तथा तत्सम्भवेषु मूत्रपुरीषवान्तादिषु परे जन्तवो 'दुरूवत्ताए' दुरूपास्तत्सम्भवत्वेन कृम्यादिभावत्वेनोत्पद्यन्ते । ते च तत्र विष्ठादौ देहान्निर्गते अनिर्गते वा समुत्पद्यमाना उत्पन्नाश्च तदेव विष्ठादिकं स्वयोनिभूत[माहार]माहारयन्ति, शेषं प्राग्वत् । सांप्रतं सचित्तशरीराऽऽश्रयाञ्जन्तून् प्रतिपादयितुमाह—'एवं खुरदुगत्ताए' एवमिति यथा मूत्रपुरीषादावुत्पादस्तथा तिर्यक्शरीरेषु 'खुरदुगत्ताए'त्ति चर्मकीटतया समुत्पद्यन्ते, इदमुक्तं भवति–जीवतामेव गोमहिष्यादिनां चर्म्मणोऽन्तः प्राणिनः संमूर्च्छयन्ते, ते च तन्मांसचर्म्मणी भक्षयन्ति, भक्षयन्त-

स्तच्चर्म्मणो विवराणि विदधति, गलच्छोणितेषु विवरेषु तिष्ठन्तस्तदेव शोणितमाहारयन्ति, तथा अचित्तगवादिशरीरेऽपि, तथा सचित्ताऽचित्तवनस्पतिशरीरेऽपि घुणकीटकाः सम्मूर्च्छन्ते, ते च तत्र सम्मूर्च्छन्तस्तच्छरीरमाहारयन्तीति । साम्प्रतमप्कायं प्रतिपिपादयिषुस्तत्कारणभूतवातप्रतिपादनपूर्वकं प्रतिपादयन्नाह—

अहावरं पुरक्खायं इहेगतिया सत्ता नाणाविहजोणिया, +[जाव कम्म० खुरदुगत्ताए एवमक्खंति, इहेगइया सत्ता णाणाविहजोणिया] जाव + कम्मनिदाणेणं तत्थ वुक्कमा नाणाविहाणं तसथावराणं पाणाणं सरीरेसु सचित्तेसु वा अचित्तेसु वा । तं सरीरगं वायसंसिद्धं वा वातसंगहितं वा वातपरिगतं वा उड्ढवातेसु उड्ढभागी भवति अहेवाएसु अहेभागी भवति तिरियवातेसु तिरियभागी भवति, तं जहा—उस्सा हिमए महिया करए हरतणूए सुद्धोदए, ते जीवा तेसिं नाणाविहाणं तसथावराणं पाणाणं सिणेहमाहारिंति, [ ते जीवा आहारिंति ] पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं तसथावरजोणियाणं उस्साणं जाव सुद्धोदगाणं सरीरा णाणा वण्णा जावमक्खायं ।

+ + नास्त्येतच्चिन्हमध्यगतो मूलपाठः सवृत्तिकमुद्रितप्रतिषु, परं दीपिकाप्रतिषु सर्वास्वप्यस्ति ।

व्याख्या—अथानन्तरमेतद्वक्ष्यमाणं 'पुरा' पूर्वमाख्यातं, 'इह' अस्मिञ्जगत्येके सत्त्वास्तथाविधकर्मोदया—ज्ञानाविधकर्मोदया—ज्ञानाविधयोनिकाः सन्तो यावत्कर्मनिदानेन 'तत्र' वातयोनिकाप्काये व्युत्क्रम्य—आगत्य नानाविधानां दर्दुरप्रभृतीनां प्राणिनां 'स्थावराणां च' हरितलवणादीनां सचित्ताचित्तभेदभिन्नेषु शरीरेषु तदप्कायशरीरं वायुना निष्पादितं वातेनैव सम्यग्गृहीतमभ्रकपटलान्तर्निर्वृत्तं वायुनैवान्योऽन्यानुगतं, तथोर्द्ध्वगतेषु वातेपूर्द्ध्वभागी भवति, अप्कायो हि गगनगतवातवशाद्दिवि सम्मूर्च्छते जलं, तथाऽधस्ताद्गतेषु तद्वशाद्घनऽप्यधोभागी अप्कायः, एवं तिर्यग्गतेषु वातेषु तिर्यग्भागी भवत्यप्कायः, इदमुक्तं भवति—वातयोनिकत्वादप्कायस्य यत्र यत्रासौ तथाविधपरिणामपरिणतो भवति तत्र तत्र तत्कार्यभूतं जलमपि सम्मूर्च्छते, तस्य चाभिधानपूर्वकं दर्शयितुमाह—'ओस'त्ति अवश्यायः हिमं महिका करकाः 'हरतणूए'त्ति तृणाग्रव्यवस्थिता जलबिन्दवः, शुद्धोदकं प्रतीतमिति, इहोदकप्रस्तावे एके सत्त्वास्तत्रोत्पद्यन्ते स्वकर्मवशगास्तत्रोत्पन्नास्ते जीवास्तेषां नानाविधानां त्रसस्थावराणां स्नेहस्याधारभूतानां स्नेहमाहारयन्ति, ते जीवास्तच्छरीरमाहारयन्ति, अनाहारका न भवन्तीत्यर्थः, शेषं सुगमम् । तदेवं वातयोनिकमप्कायं प्रदर्श्याधुनाऽप्कायसम्भवमेवाप्कायं दर्शयितुमाह—

अहावरं पुरक्खायं इहेगतिया सत्ता उदगजोणिया उदगसंभवा जाव कम्मनिदाणेणं तत्थ वुक्कमा तसथावरजोणिएसु उदएसु उदगत्ताए विउट्टंति, ते जीवा तेसिं तसथावरजोणियाणं उदगाणं सिणेहमाहारिंति, ते जीवा आहारिंति पुढविसरीरं जाव संतं अवरे वि य णं तेसिं

तसथावरजोणियाणं उदगाणं सरीरा नाणावण्णा जावमक्खायं ।

व्याख्या—अथापरमाख्यातं इह जगति उदकाधिकारे [वा] एके सत्त्वास्तथाविधकर्म्मोदयाद्वातत्रोत्पन्नत्रसस्थावरशरीराधारमुदकं योनि—रुत्पत्तिस्थानं येषां ते तथा, तथोदकसम्भवा यावत्कर्मनिदानेन तत्रोत्पिपत्सवस्त्रसस्थावरयोनिके[षूदके]-ष्वपरोदकतया ' विवर्त्तन्ते ' समुत्पद्यन्ते, ते च उदकजीवास्तेषां त्रसस्थावरयोनिकानामुदकानां + नानाविधानि शरीराणि विवर्त्तन्ते । एतदाख्यातं । तदेवं त्रसस्थावरशरीरसम्भवमुदकं योनित्वेन प्रदर्श्य अधुना निर्विशेषणमप्कायसम्भवमेवाप्कायं दर्शयितुमाह—

अहावरं पुरक्खायं इहेगतिया सत्ता उदगजोणियाणं जाव कम्मनियाणेणं तत्थ वुक्कमा, उदगजोणिएसु उदगेसु उदगत्ताए विउट्टंति, ते जीवा तेसिं उदगजोणियाणं +जीवाणं उदगाणं सिणेहमाहारिंति, ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं उदग-

---

+ ' स्नेहमाहारयन्ति, अन्यान्यपि पृथिव्यादिशरीराण्याहारयन्ति, तच्च पृथिव्यादिशरीरमाहारित सत्सारूप्यमानीयात्मसात्प्रकुर्वन्त्यपराण्यपि तत्र त्रसस्थावरशरीराणि विवर्त्तन्ते, तेषां चोदकयोनिकानामुदकानां ' इति वृत्तौ ।

+ नास्त्येतच्छब्दः सवृत्तिकमुद्रितप्रतिषु ।

जोणियाणं उदगाणं सरीरा नाणावण्णा जावमक्खायं ।

व्याख्या—अथाऽपरमेतदाख्यातं, इहैके सत्त्वाः स्वकृतकर्मोदयादुदकयोनि[केषूदके]षूत्पद्यन्ते, ते च तेषामुदकसम्भवाना-मुदकजीवानामात्माधारभूतानां शरीरमाहारयन्ति, शेषं सुगमं, यावदाख्यातमिति । साम्प्रतमुदकाधारानपरान्पूतरकादिकां-स्त्रसान् दर्शयितुमाह—

अहावरं पुरक्खायं इहेगतिया सत्ता उदगजोणियाणं जाव कम्मनिदाणेणं तत्थ वुक्कमा उदगजोणिएसु उदएसु तसपाणत्ताए विउट्टंति, ते जीवा तेसिं उदगजोणियाणं उदगाणं सिणेह-माहारिंति, ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं उदगजोणियाणं तसथावराणं पाणाणं सरीरा नाणावण्णा जावमक्खायं । [ सू० १८ ]

व्याख्या—सुगमैव×। अथाऽग्निकायमधिकृत्याह—

अहावरं पुरक्खायं इहेगतिया सत्ता नाणाविहजोणिया जाव कम्मनियाणेणं तत्थ वुक्कमा

×"अथापरमेतदाख्यातं, इहैके सत्त्वा उदकेषु उदकयोनिषु चोदकेषु त्रसप्राणितया पूतरकादित्वेन 'विवर्त्तन्ते' समुत्पद्यन्ते, ते चोत्पद्यमानाः समुत्पन्नाश्च तेषा-मुदकयोनिकानामुदकानां स्नेहमाहारयन्ति, शेषं सुगमं, यावदाख्यातमिति" इति वृत्तौ ।

नाणाविहाणं तसथावराणं पाणाणं सरीरेसु सचित्तेसु वा अचित्तेसु वा अगणिकायत्ताए विउट्टंति, ते जीवा तेसिं नाणाविहाणं तसथावराणं पाणाणं सिणेहमाहारिंति, ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं तसथावरजोणियाणं पुढवी( अगणी )णं सरीरा नाणावण्णा जावमक्खायं, सेसा तिन्नि आलावगा जहा उदगाणं ।

व्याख्या—अथैतदपरमाख्यातं, 'इह' संसारे 'एके' केचन 'सत्त्वाः' प्राणिनस्तथाविधकर्म्मोदयवर्त्तिनो नानाविधयोनयः प्राक्रमन्तः—पूर्वजन्मनि तथाविधं कर्म्मोपादाय तत्कर्म्मनिदानेन नानाविधानां त्रसस्थावराणां प्राणिनां शरीरेषु [ सचित्तेषु ] अचित्तेषु वाऽग्नित्वेन 'विवर्त्तन्ते' प्रादुर्भवन्ति, तथाहि—पञ्चेन्द्रियतिरश्चां दन्तिमहिषादीनां परस्परं युद्धावसरे × विषाणसहर्षे + सत्यग्निरुत्तिष्ठते, एवमचित्तेष्वपि तदस्थिसंहर्षादग्नेरुत्थानं, तथा द्वीन्द्रियादिशरीरेष्वपि यथा-सम्भवमायोजनीयं, तथा स्थावरेष्वपि वनस्पत्युपलादिषु सचित्ताचित्तेष्वग्निजीवाः समुत्पद्यन्ते, ते चाग्निजीवास्तत्रोत्पन्ना-स्तेषां नानाविधानां त्रसस्थावराणां स्नेहमाहारयन्ति, शेषं सुगमं, यावद्भवन्तीत्येवमाख्यातम् । अपरे त्रयोऽप्यालापकाः

× दन्तशृङ्गयोः परिग्रहापेक्षया सचित्तांशयुक्तत्वापेक्षया वा अचित्तभेदभिन्नता इति टिप्पणं सवृत्तिकमुद्रितप्रतौ ।

+ "स्पर्धायां तु समः परौ । हर्ष-घर्षौ च सङ्ग्राम-सङ्क्रमौ दुर्गसञ्चरे ॥ ८७ ॥ " इति शब्दरत्नाकरः कां० ६ ।

१६

प्राग्वद्द्रष्टव्या इति । साम्प्रतं वायुकायमुद्दिश्याह—

अहावरं पुरक्खायं इहेगतिया सत्ता नाणाविहजोणिया जाव कम्मनिदाणेणं तत्थ वुक्कमा नाणाविहाणं तसथावराणं पाणाणं सरीरेसु सचित्तेसु [वा] अचित्तेसु वा वाउकायत्ताए विउट्टंति, जहा अगणीणं तहा भणियव्वा चत्तारि गमा [ सू० १९ ]

व्याख्या—अयमालापकोऽग्निकायगमेन व्याख्येयः । साम्प्रतमशेषजीवाधारं पृथिवीकायमधिकृत्याह—

अहावरं पुरक्खायं, इहेगतिया सत्ता नाणाविहजोणिया जाव कम्मनिदाणेणं तत्थ वुक्कमा नाणाविहाणं तसथावराणं पाणाणं सरीरेसु सचित्तेसु वा अचित्तेसु वा पुढवित्ताए सक्करत्ताए वालुयत्ताए, इमाओ गाहाओ अणुगंतव्वाओ—पुढवी सक्करा वालु—या य उवले सिला य लोणूसे । अय-तउय-तंब-सीसग—रुप्पसुवण्णे य वयरे य ॥ १ ॥ हरियाले हिंगुलुए, मणोसिलासासगंऽजण-पवाले, अब्भपडलब्भवालुय—बायरकाए मणिविहाणे ॥ २ ॥ गोमेज्जए य रुयए, अंके फलिहे य लोहियक्खे य । मरगय-मसारगल्ले, भुयमोयग-इंदनीले य ॥ ३ ॥ चंदण-गेरुय-हंसगब्भ—पुलए

सोगंधिए य बोधव्वे । चन्दप्पभ-वेरुलिए, जलकंते सूरकंते य ॥ ४ ॥ एयाओ गाहाओ एएसु भणियव्वाओ, जाव सूरकंतत्ताए विउट्टंति, ते जीवा तेसिं नाणाविहाणं तसथावराणं पाणाणं सिणेहमाहारिंति, ते जीवा आहारिंति पुढविसरीरं जाव संतं, अवरे वि य णं तेसिं तसथावर-जोणियाणं पुढवीणं जाव सूरकंताणं सरीरा नाणावण्णा जावमक्खायं, सेसा तिन्नि आलावगा जहा उदगाणं । [ सू० २० ]

व्याख्या—अथापरमेतत्पूर्वमाख्यातं, इहैके सत्त्वाः पूर्वं नानाविधयोनिकाः स्वकृतकर्मवशगा नानाविधत्रसस्थावराणां शरीरेषु सचित्तेषु अचित्तेषु वा पृथिवीत्वेनोत्पद्यन्ते, तद्यथा—सर्पशिरस्सु मणयः करिदन्तेषु मौक्तिकानि विकलेन्द्रियेष्वपि शुक्त्यादिषु मौक्तिकानि, स्थावरेष्वपि वेण्वादिषु तान्येवेति, एवमचित्तेषूपरादिषु लवणभावेनोत्पद्यन्ते, एवं पृथिवीकायिका नानाविधासु पृथिवीषु शर्करा-वालुका-उपल-शिला-लवणादिभावेन तथा गोमेदकादिरत्नभावेन च बादरमणिविधानतया समुत्पद्यन्ते, शेषं सुगमं, यावच्चत्वारोऽप्यालापका उदकगमेन नेतव्या इति । साम्प्रतं सर्वोपसंहारद्वारेण सर्वजीवान् सामान्यतो विभणिषुराऽह—

अहावरं पुरक्खायं सव्वे पाणा सव्वे भूया सव्वे जीवा सव्वे सत्ता नाणाविहजोणिया नाणाविह-

संभवा नाणाविहवुक्कमा, सरीरजोणिया सरीरसंभवा सरीरवुक्कमा सरीराहारा कम्मोवगा कम्मनिदाणा कम्मगईया कम्मट्ठिइया कम्मणा चेव विप्परियासमुवेंति । से एवमायाणह, से एवमायाणित्ता आहारगुत्ते सहिए समिए सया जए त्तिबेमि । [ सू० २१ ]

वीयसुयक्खंधस्स आहारपरिन्नानाम तईयमज्झयणं समत्तं ॥ ३ ॥

व्याख्या—अथापरमेतदाख्यातं–सर्वे प्राणाः सर्वे भूताः सर्वे सत्त्वाः सर्वे जीवाः× नानाविधयोनिका नारक–तिर्यङ्नरामरादिगतिषूत्पद्यन्ते, यत्र यत्रोत्पद्यन्ते तत्र तत्र तच्छरीराहारिणो भवन्ति, तदाहारवन्तश्च तत्रागुप्तास्तद्द्वारायाततत्कर्म्मवशगा नारकतिर्यङ्नरामरगतिषु जघन्यमध्यमोत्कृष्टस्थितयो भवन्ति, अनेनेदमुक्तं भवति–यो यादृगिह भवेत्–स तादृगमुत्राऽपि भवतीत्येतन्निरस्तं भवति, अपि तु कर्म्मोपगाः कर्म्मनिदानाः कर्म्मायत्तगतयो भवन्ति, तथा तेनैव कर्मणा सुखलिप्सवोऽपि तद्विपर्यासं–दुःखमुपगच्छन्तीति । साम्प्रतमध्ययनार्थमुपसंजिहीर्षुराह—'से एवमायाणहे'त्यादि, यदेतन्मयाऽऽदितः प्रभृत्युक्तं, तद्यथा–यो यत्रोत्पद्यते स तच्छरीराहारको भवति, आहारागुप्तश्च कर्म्मादत्ते, कर्म्मणा च नानाविधासु योनिष्वरघट्टघटीन्यायेन पौनःपुन्येन पर्यटतीत्येव जानीत यूयं, एतद्विपर्यासं–दुःखमुपगच्छन्तीति । एतत्परिज्ञाय सदस-

× जीवसत्त्वयोर्व्यत्ययेन निर्देशोऽत्र ।

द्विवेकी आहारगुप्तः पञ्चभिः समितिभिः समितः सहितो ज्ञानादिभिः 'सदा' सर्वकालं-यावदुच्छ्वासं तावद्यतेत-संयमानुष्ठाने प्रयत्नवान् भवेदिति । इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ।

इति श्रीपरमसुविहितखरतरगच्छविभूषणपाठकप्रवरश्रीमत्साधुरङ्गगणिवरगुम्फितायां श्रीसूत्रकृताङ्ग-दीपिकायां द्वितीये श्रुतस्कन्धे समाप्तमाहारपरिज्ञाख्यं तृतीयमध्ययनमिति ॥ ३ ॥

## अथ प्रत्याख्यानक्रियाख्यं चतुर्थमध्ययनम् ।

अथ तृतीयाध्ययनानन्तर चतुर्थमारभ्यते, आहारपरिज्ञानन्तरं प्रत्याख्यानक्रियाध्यनमारभ्यते, तच्चेदम्—

**सुयं मे आउसंतेणं भगवया एवमक्खायं—इह खलु पच्चक्खाणकिरियानाम अज्झयणं, तस्स णं अयमट्ठे पन्नत्ते—**

व्याख्या—श्रीजम्बूस्वामिनं प्रति श्रीसुधर्मस्वामी कथयति-श्रुतं मया [ आयुष्मता ] भगवतेदमाख्यातं-इह खलु प्रत्याख्यानक्रियानामाध्ययनं, तस्यायमर्थो वक्ष्यमाणलक्षणस्तथाहि—

**आया अपच्चक्खाणी आवि भवति, आया अकिरियाकुसले आवि भवति, आया मिच्छासंठिए**

आवि भवति, आया एगंतदंडे आवि भवति, आया एगंतबाले आवि भवति, आया एगंतसुत्ते आवि भवति, आया अवियारमणवयणकायवक्के आवि भवति, आया अप्पडिहयपच्चक्खायपावकम्मे आवि भवति, एस खलु भगवता अक्खाए असंजए अविरए अप्पडिहयपच्चक्खायपावकम्मे सकिरिए असंवुडे एगंतदंडे एगंतबाले एगंतसुत्ते से बाले अवियारमणवयणकायवक्के सुविणमवि ण पस्सति, पावे य से कम्मे कज्जइ [ सू० १ ] तत्थ चोयए पन्नवगं एवं वदासि—

व्याख्या—अयमात्मा-जीवः अनादिमिथ्यात्वाविरतिप्रमादकषाययोगानुगततया स्वभावत एवाप्रत्याख्यान्यपि भवति, [ अपि शब्दात् ] स एव कुतश्चिन्निमित्तात्प्रत्याख्यान्यपि भवति, तथा +अक्रियाकुशलोऽपि भवति, तथाऽऽत्मा मिथ्यात्वोदयसंस्थितोऽपि भवति, तथैकान्तेनापरान्प्राणिनो [ दण्डयतीति ] दण्डस्तदेवम्भूतो भवति, तथाऽऽत्मा एकान्तबालश्च भवति, तथाऽऽत्मा एकान्तसुप्तश्च भवति, यथा द्रव्यसुप्तः शब्दादीन् विषयान्न जानाति हिताहितप्राप्तिपरिहारविकलश्च भवति तथाऽऽत्माऽपि भावसुप्तो हिताहितं न वेत्ति, तथाऽऽत्माऽप्रत्याख्यानक्रियः सन् अविचारितमनोवाकायवाक्यश्चापि ×भवति,

+ " सदनुष्ठानं क्रिया, तस्यां कुशलः क्रियाकुशलस्तत्प्रतिषेधात् " इति बृह० ।
× " वाग्ग्रहणेनैव वाक्यस्य गतार्थत्वात्पुनर्वाक्यग्रहणं वाग्व्यापारस्य प्राचुर्यज्ञापनार्थम् । " इति हर्ष० ।

तथाऽप्रतिहताप्रत्याख्यातपापकर्म्मा भवति, एवंविधो जीवो भगवता असंयत अविरत अप्रतिहतप्रत्याख्यातपापकर्म्मा सक्रिय असंवृत एकान्तबाल एकान्तसुप्तश्च कथितः, तदेवम्भूतश्च बालसुप्ततया 'अविचाराणि' अविचारितरमणीयानि परमार्थविचारणया युक्त्या वा विघटमानानि मनोवाक्कायवाक्यानि यस्य स तथा, अविचारितमनोवाक्कायः निर्विवेकतया पटुविज्ञानरहितः स्वप्नमपि न पश्यति, तस्य चाव्यक्तविज्ञानस्य स्वप्नमप्यपश्यतः पापं कर्म्म बध्यते, एतावता यद्वस्तु स्वप्नेऽपि नायाति कदाचिदृष्टमपि न तस्यापि कर्मबन्धो लगति, अव्यक्तविज्ञानेनापि प्राणिना पापं कर्म्म क्रियत इति भावः। तत्र चैवं व्यवस्थिते परः प्रज्ञापकमेवमवादीत्—अत्र चाचार्याभिप्रायं परः प्रतिषेधयति—

**असंतएणं मणेणं पावएणं असंतिआए वतीए पावियाए असंतएणं काएणं पावएणं अहणंतस्स अमण[क्ख]स्स अवियारमणवयणकायवक्कस्स सुमिणमवि अपस्सओ पावे कम्मे नो कज्जइ, कस्स णं तं हेउं ? चोयगे एवं बवीति—**

व्याख्या—अविद्यमानेन·असता मनसा तथा अप्रवृत्तेनाशोभनेन, तथा वाचा कायेन च पापेन असता, तथा सत्त्वान् अनिघ्नतः, तथाऽमनस्कस्याविचारमनोवाक्कायवाक्यस्य स्वप्नमप्यपश्यतः, एवमव्यक्तविज्ञानस्य पापं कर्म न बद्ध्यते, एवम्भूतविज्ञानेन पापं कर्म्म न क्रियत इति, तर्हि कथयन्तु पूज्याः ? कथं पाप कर्म्म बद्ध्यते ? केन हेतुना—केन कारणेन कर्म्मबन्धः स्यात् ? नात्र कश्चिदव्यक्तविज्ञानत्वात् पापकर्म्म हेतुरिति। अथ पर एव स्वाभिप्रायेण पापकर्म्मबन्धहेतुमाह—

अन्नयरेणं मणेणं पावएणं मणवत्तिए पावे कम्मे कज्जइ, अन्नयरीए वतीए पावियाए वतिवत्तिए पावे कम्मे कज्जइ, अन्नयरेणं काएणं पावएणं कायवत्तिए पावे कम्मे कज्जति, [ हणंतस्स समणक्खस्स सवियारमणवयणकायवक्कस्स सुमिणमवि पासओ एवंगुणजातीयस्स पावे कम्मे कज्जइ ।] पुणरवि चोयगे एवं ववीति—तत्थ णं जे ते एवमाहंसु—असंतएणं मणेणं पावएणं असंतीयाए वतीए पावियाए असंतएणं काएणं पावएणं अहणंतस्स अमणक्खस्स अवियारमणवयणकायवक्कस्स सुविणमवि अपस्सओ पावे कम्मे कज्जति,[ तत्थ णं ] जे [ ते ]एवमाहंसु तं मिच्छा । तत्थ पन्नवए चोयगं एवं वयासी—[ तं सम्मं ]जं मए पुव्वं वुत्तं असंतएणं मणेणं पावएणं असंतियाए वईए पावियाए असंतएणं काएणं पावएणं अहणंतस्स अमणक्खस्स अवियारमणवयणकायवक्कस्स सुविणमवि अपस्सओ पावे कम्मे कज्जइ तं सम्मं । [ कस्स णं तं हेउं ? । ]

व्याख्या—कर्माश्रवद्वारभूतैर्मनोवाक्कायकर्मभिः कर्म बद्ध्यत इति दर्शयति—अन्यतरेण क्लिष्टेन प्राणातिपातादिप्रवृत्त्या मनसा वाचा कायेन च तत्प्रत्ययिकं कर्म बद्ध्यते । तथा घ्नतस्सत्त्वान्समनस्कस्य सविचारमनोवाक्कायवाक्यस्य स्वप्नमपि पश्यतः प्रस्पष्टविज्ञानस्यैतद्गुणजातीयस्य पाप कर्म बद्ध्यते, न पुनरेकेन्द्रियविकलेन्द्रियादेः पापकर्मसम्भव इति, तेषां घात-

कस्य मनोवाक्कायव्यापारस्याभावात्, अथैतद्व्यापारमन्तरेणापि कर्मबन्ध इष्यते ? एवं च सति मुक्तानामपि कर्म्मबन्धः स्यात्, न चैतदिष्यते, तस्मान्नैवं बन्धः, तत्र यदेवम्भूतैरेव मनोवाक्कायव्यापारैः कर्मबन्धोऽभ्युपगम्यते। तदेवं व्यवस्थिते सति ये ते एवमुक्तवन्तस्तद्यथा–अविद्यमानैरेवाशुभैर्योगैः पाप कर्म क्रियते, मिथ्या ते एवमुक्तवन्त इति स्थितम्। तदेवं शिष्येणाचार्यपक्षं दूषयित्वा स्वपक्षे व्यवस्थापिते सत्याचार्य आह—'तं सम्म'मित्यादि, यदेतन्मयोक्तं प्राग् यथाऽस्पष्टाव्यक्तयोगानामपि कर्म्म बध्यते तत् 'सम्यक्' शोभनं युक्तिसङ्गतं इति। एवमुक्ते पर आह–'कस्य हेतोः ?' केन कारणेन ? तत्सम्यगिति चेदाह—

तत्थ खलु भगवया छज्जीवनिकाया हेऊ पन्नत्ता, तं जहा–पुढविकाइया जाव तसकाइया, इच्चेतेहिं छहिं जीवनिकाएहिं आया अप्पाडिहयपच्चक्खायपावकम्मे निच्चं पसढविउवातचित्तदंडे, तं जहा–पाणाइवाए जाव परिग्गहे कोहे जाव मिच्छादंसणसल्ले।

व्याख्या—आचार्य आह–तत्र खलु भगवता षड्जीवनिकायाः कर्म्मबन्धहेतुत्वेनोपन्यस्तास्तद्यथा–पृथिवीकायिका यावत्त्रसकायिका इति। कथमेते षट्कायाः कर्म्मबन्धस्य कारणमित्याह—'इच्चेएहिं' इत्यादि, इत्येतेषु पृथिव्यादिषु षड्जीवनिकायेषु अप्रतिहतप्रत्याख्यातपापकर्म्मा य आत्मा जन्तुः 'नित्यं' सर्वकालं प्रकर्षेण शठः तथा 'व्यतिपाते' प्राणिव्यपरोपणे चित्तं यस्य स व्यतिपातचित्तः, [ स्वपरदण्डहेतुत्वाद्दण्डः ] प्रशठश्चासौ व्यतिपातचित्तदण्डश्चेति आत्मा, तद्यथा–

प्राणातिपाते विधेये प्रशठ[ व्यतिपात ]चित्तदण्डः, एवं मृषावादादत्तादानमैथुनपरिग्रहेष्वपि वाच्यं, यावन्मिथ्यादर्शनशल्यमिति । तेषामिहैकेन्द्रियविकलेन्द्रियादीनामनिवृत्तत्वान्मिथ्यात्वाविरतिप्रमादकषाययोगानुगतता इति द्रष्टव्यं, तद्भावाच्च ते कथं प्राणातिपातादि दोषवन्तो न भवन्ति ? एतावता एकेन्द्रियविकलेन्द्रियाः प्राणातिपातादिदोषवत्तया अव्यक्तविज्ञाना अपि सन्तोऽस्वप्नाद्यवस्थायामपि ते कर्म्मबन्धका एव, तदेवं व्यवस्थिते यत्प्रागुक्तं परेण, यथा—अव्यक्तविज्ञानानामनघ्नतां अमनस्कानां न कर्म्मबन्ध इत्येतन्मृषा । साम्प्रतमाचार्यः स्वपक्षसिद्धये दृष्टान्तमाह—

तत्थ खलु भगवता वहए दिट्ठंते पन्नत्ते, से जहा नामए वहए सिया गाहावइस्स वा गाहावइपुत्तस्स वा रन्नो वा रायपुरिसस्स वा खणं निदाय पविसिस्सामि खणं लद्धूणं वहिस्सामि[त्ति] पहारेमाणे से किं नु हु नाम से वहए तस्स गाहावइस्स वा [ तस्स ] गाहावइपुत्तस्स वा तस्स वा रण्णो तस्स वा रायपुरिसस्स खणं निदाय पविसिस्सामि खणं लद्धूणं वहिस्सामि[त्ति] पहारेमाणे दिया वा राओ वा सुत्ते वा जागरमाणे वा अमित्तभूते मिच्छासंठिते निच्चं पसढविउवायचित्तदंडे भवति ? एवं वियागरेमाणे समियाए वियागरे चोयए—हंता भवति ।

व्याख्या—तत्र खलु भगवता वधकदृष्टान्तः प्रज्ञप्तस्तद्यथा—वधकः कश्चित्स्यादिति, कुतश्चिन्निमित्तात्कुपितः सन्

कस्यचिद्वधपरिणतः कश्चित्पुरुषो भवति, कीदृशो वधकः ? 'गाहावइस्से'त्यादि, गृहपतिर्गृहपतिपुत्रो वा तस्योपरि कश्चिद्वधकः संवृत्तः, स च वधपरिणामपरिणतोऽपि कस्मिँश्चित्क्षणे पापकारिणमेनं घातयिष्यामीति। तथा राज्ञः राजपुरुषस्य वोपरि कुपित एतत्कुर्यादित्याह—'खणं निदाय' इत्यादि, क्षण-मवसरं 'निदाय'त्ति प्राप्य लब्ध्वा [वध्यस्य] पुरे गृहे वा प्रवेक्ष्यामीति तदध्यवसायी भवति, तथा क्षणमवसरं छिद्रादिकं वध[वध्य]स्य लब्ध्वा तं वध्यं हनिष्यामीत्येवं सम्प्रधारयति, तथा गृहपते राज्ञो वा कश्चित्कारणकोपाद्वधपरिणतोऽप्यात्मनोऽवसरं लब्ध्वा हनिष्यामीत्यवसरं-छिद्रमपेक्ष माणस्तदवसरापेक्षी, कश्चित् कालमुदास्ते, स च तत्रौदासीन्यं कुर्वाणः अपरेण कार्यादिना व्यग्रचेतास्तस्मिन्नवसरे व[धं]ध्यं प्रत्यस्पष्टविज्ञानो भवति, स चैवम्भूतोऽपि यथा तं वध्यं प्रति नित्यमेव प्रशठव्यतिपातचित्तदण्डो भवति, एवमविद्यमानैरपि प्रव्यक्तैरशुभैर्योगैरेकेन्द्रियविकलेन्द्रियादयोऽस्पष्टविज्ञाना अपि मिथ्यात्वाविरतिप्रमादकषाययोगानुगतत्वात्प्राणातिपातादिदोषवन्तो भवन्तीति, न च तेऽवसरं अपेक्षमाणा उदासीना अपि अवैरिण इति, एवमस्पष्टविज्ञाना अपि वैरिणो भवन्तीति। साम्प्रतमाचार्य एव स्वाभिप्रेतमर्थं परप्रश्नपूर्वकमाविर्भावयन्नाह—'से किं नु हु' इत्यादि, आचार्यः स्वतो निर्णीतार्थोऽप्यसूयया परं पृच्छति—किमसौ वधक पुरुषो[हनना]ऽवसरापेक्षी छिद्रं 'सम्प्रधारयन्' चिन्तयन् अहर्निशं सुप्तो जाग्रदवस्थो वा 'तस्य' गृहपते राज्ञो वा वध्यस्यामित्रभूतो वा मिथ्यासंस्थितो नित्यं प्रशठव्यतिपातचित्तदण्डो भवति ? आहोस्विन्नेत्येवं पृष्टः परः समतया माध्यस्थ्यमवलम्बमानो यथाऽवस्थितमेव व्यागृणीयात्, यथा—हन्त आचार्य ! भवत्यसावमित्रभूत इत्यादि। तदेवं दृष्टान्तं प्रदर्श्य दार्ष्टान्तिकमाह—

आचार्य आह—जहा से वहए तस्स गाहावइस्स[ वा ]तस्स गाहावइपुत्तस्स[ वा ]तस्स वा रन्नो तस्स वा रायपुरिसस्स खणं निदाय पविसिस्सामि खणं लद्धूणं वहिस्सामित्ति पहारेमाणे दिया वा राओ वा सुत्ते वा जागरमाणे वा आमित्तभूते मिच्छासंठिए निच्चं पसढविउवायचित्तदंडे [ भवइ ] एवामेव बाले वि सव्वेसिं पाणाणं जाव सव्वेसिं सत्ताणं दिया वा राओ वा सुत्ते वा जागरमाणे वा आमित्तभूते मिच्छासंठिए निच्चं पसढविउवायाचित्तदंडे [ भवइ ], तं जहा—पाणातिवाए जाव मिच्छादंसणसल्ले, एवं खलु भगवता अक्खाए—असंजए अविरए अप्पाडिहयपच्चक्खायपावकम्मे सकिरिए असंवुडे एगंतदंडे एगंतबाले एगंतसुत्ते आवि भवति, से बाले अवियारमणवयणकायवक्के सुविणमवि ण पस्साति पावे य से कम्मे कज्जति ।

व्याख्या—'जहा से वहए' इत्यादि, यथाऽसौ वधक इत्यादिना दृष्टान्तमनूद्य दार्ष्टान्तिकमर्थं दर्शयितुमाह—'एवामेवे' इत्यादि, यथाऽसौ वधकोऽवसरापेक्षितया वध्यस्य व्यापत्तिमकुर्वाणोऽप्यमित्रभूतो भवत्येवमसावपि बालोऽस्पष्टविज्ञानो निवृत्तेरभावात्सर्वेषां प्राणिनां व्यापादको भवति यावन्मिथ्यादर्शनशल्योपेतो भवति, यद्यप्युत्थानादिकं विनयं कुतश्चिन्निमित्तादसौ विधत्ते तथाप्युदायिनृपमारकवदन्तर्दुष्ट एवेति नित्यं प्रशठव्यतिपातचित्तदण्डश्च यथा परशुरामः

कृतवीर्यं व्यापाद्यापि तदुत्तरकालं मप्तवारान्निःक्षत्रां पृथिवीं चकार, एवममात्रमित्रभूतो मिथ्याविनीतश्च भवति। 'एवं खलु भगवया' इत्यादि, यथाऽसौ वधकोऽवसरापेक्षी न तावद्घातयति [अथ च] अनिवृत्तत्वाद्दोषदुष्ट एव, एवमसावप्येकेन्द्रियादिकोऽस्पष्टविज्ञानोऽप्यविरतत्वात्तथाभूत एव–अविरताप्रतिहताप्रत्याख्याताऽसत्क्रियादिदोषदुष्ट एवेति, शेषं सुगमं, यावत्पापं कर्म क्रियत इति।

जहा से वहए तस्स वा गाहावइस्स वा[ जाव ]तस्स वा रायपुरिसस्स पत्तेयं[ पत्तेयं ]चित्त-समादाए दिया वा राओ वा सुत्ते वा जागरमाणे वा अमित्तभूते मिच्छासंठिए[ निच्चं ]पसढविउ-वातचित्तदंडे भवति, एवामेव वाले सव्वेसिं पाणाणं जाव सव्वेसिं सत्ताणं पत्तेयं[ पत्तेयं ]चित्त-समादाए दिया वा राओ वा सुत्ते वा जागरमाणे वा अमित्तभूते मिच्छासंठिते निच्चं पसढविउ-वातचित्तदंडे भवति ॥ [ सू० २ ]

व्याख्या—यथाऽसौ वधको वध्यस्य विनाशं चिन्तयन् अनिघ्नन्नपि अमित्रभूतः कथ्यते, तदनु तस्य वधमकुर्वतोऽपि पापकर्म जायते, एवं बाल एकेन्द्रियादिरपि सर्वेषां प्राणिनाममित्रभूतः कथ्यते, अविरतत्वात्, एकेन्द्रियादेरप्यकुर्वतोऽपि बन्धो भवति पापकर्मण इति। एवमाचार्येण प्रतिपादिते सति शिष्यः कथयति—

नो इणमट्ठे समट्ठे [ चोदकः ] । इह खलु बहवे पाणा० जे इमेणं सरीरसमुस्सएणं नो दिट्ठा वा सुया वा नाभिमता वा, विन्नाया वा जेसिं णो पत्तेयं पत्तेयं चित्तसमायाए दिया वा राओ वा सुत्ते वा जागरमाणे वा अमित्तभूते मिच्छासंठिते निच्चं पसढविउवातचित्तदंडे, तं जहा–पाणाइवाए जाव मिच्छादंसणसल्ले ॥ [ सू० ३ ]

व्याख्या—'नो इणमट्ठे समट्ठे' नायमर्थः समर्थः यदकुर्वतोऽमतः, अमनस्कस्यापि पापकर्म लगति, नायमर्थः समर्थः–प्रतिपत्तु न योग्य इति । तत्र शिष्यः कारणमाह–'इह खलु' चतुर्दशरज्ज्वात्मके लोके 'बहवो'ऽनन्ताः प्राणिनः सन्ति देशकालविप्रकृष्टास्तथाभूता बहवः सन्ति ये अनेन शरीरसमुच्छ्रयेण न कदाचिद्दृष्टाश्चक्षुषा न श्रुताः श्रवणाभ्यां विशेषतो नाभिमता–इष्टा, न च विज्ञाताः स्वयमेवेत्यतः कथं तद्विषयस्तस्यामित्रभावः स्यात् ?, अतस्तेषां कदाचिदप्यविज्ञातानां कथं प्रत्येकं वधं प्रति चित्तसमादानं भवति ? न चासौ तान् प्रति नित्यं प्रशठव्यतिपातचित्तदण्डो भवतीति । एव च व्यवस्थिते न सर्वविषयं प्रत्याख्यानं युज्यते, इत्येवं प्रतिपादिते सति परेण आचार्य आह—

तत्थ खलु भगवया दुवे दिट्ठंता पन्नत्ता, तं जहा–सन्निदिट्ठंते य असन्निदिट्ठंते य, से किं तं सन्निदिट्ठंते ?, २ जे इमे सन्निपंचिंदिया पज्जत्तगा, एतेसि णं छज्जीवनिकाए पडुच्च, तं०–पुढविकायं

जाव तसकायं, से एगतिओ[ पइन्नं कुज्जा ]पुढविकाएणं किच्चं करेइ[वि] कारवेइ[वि], तस्स णं एवं भवइ–एवं खलु अहं पुढविकाएणं किच्चं करेमि वि कारवेमि वि, णो चेव णं से एवं भवइ–इमेण वा[ इमेण वा ], से य तेणं पुढविकाएणं किच्चं करेति वि कारवेति वि, से णं ताओ पुढविकायाओ अस्संजयाविरयअप्पडिहयपच्चक्खायपावकम्मे यावि भवति, एवं जाव तसकाएत्ति भाणियवं । से एगतिओ छहिं जीवनिकाएहिं किच्चं करेति वि कारवेति वि, तस्स णं एवं भवति–एवं खलु अहं छज्जीवनिकाएहिं किच्चं करेमि वि कारवेमि वि, णो चेव णं से एवं भवति–इमेहिं वा[ इमेहिं वा, से य तेहिं छहिं जीवनिकाएहिं जाव कारवेइ वि ], से य तेहिं छहिं जीवनिकाएहिं असंजयअविरयअप्पडिहयपच्चक्खायपापकम्मे, तं जहा–पाणातिवाए जाव मिच्छादंसणसल्ले, एस खलु भगवता अक्खाए–असंजए अविरए अप्पडिहयपच्चक्खायपावकम्मे सुविणमवि अपस्सतो पावे य से कम्मे कज्जति, से तं सन्निदिट्ठंते ।

व्याख्या—यद्यपि सर्वेषु जीवेषु देशकालस्वभावविप्रकृष्टेषु वधकचित्तं नोत्पद्यते तथाप्यसावविरतिप्रत्ययत्वाच्चेष्वमुक्तवैर

एव कथ्यते, अस्य चार्थस्य सुखप्रतिपत्तये भगवता द्वौ दृष्टान्तौ प्रज्ञप्तौ, तद्यथा–संज्ञिदृष्टान्तोऽसंज्ञिदृष्टान्तश्च । अथ कोऽयं संज्ञिदृष्टान्तः ? ये केचन इमे संज्ञिनः पंचेन्द्रियाः पर्याप्तकाः, एषां च मध्ये कश्चिदेकः षड्जीवनिकायान् प्रतीत्यैवम्भूतां 'प्रतिज्ञां' नियम कुर्यात्, यथाऽहं षड्जीवनिकायमध्ये पृथिवीकायेनैवैकेन वालुकाशिलोपललवणादिस्वरूपेण 'कृत्यं' कार्यं कुर्याँ, स चैवं कृतप्रतिज्ञस्तेन तस्मिँस्तस्माच्च तं करोति कारयति च, शेषकायेभ्योऽहं विनिवृत्तः, तस्य च कृतनियमस्यैवम्भूतो भवत्यध्यवसायः–खल्वहं पृथिवीकायेन कृत्यं करोमि कारयामि [च], तस्य च सामान्यकृतप्रतिज्ञस्य विशेषाभिसन्धिर्नैव भवति, यथाऽह कृष्णेन वा श्वेतेन वा पृथिवीकायेन कार्यं करोमि [ कारयामि च ], सामान्येन वचमाऽहं पृथिवीकायारम्भं करिष्यामि एवं स सर्वस्मात्पृथ्वीकायादनिवृत्तोऽप्रतिहतप्रत्याख्यातपापकर्म्मा भवति, तत्र सर्वत्र पृथिवीकाये खननस्थाननिषीदनत्वग्वर्त्तनोचारप्रश्रवणादि[ करण ]क्रियासद्भावात्सर्वस्मात्पृथिवीकायादनिवृत्तत्वात्, एवमप्तेजोवायुवनस्पतिष्वपि वाच्यं, तत्राप्कायेन स्नानपानावगाहनभाण्डोपकरणधावनादिपूपयोगः, तेजस्कायेनापि [ पचनपाचनवितापनप्रकाशनादिषु, वायुनाऽपि ] व्यजनतालवृन्तोत्पादितव्यापारादिषु प्रयोजनं, वनस्पतिनाऽपि–कन्दमूलफलपत्रत्वक्शाखाद्युपयोग, एवं विकलेन्द्रिय–पञ्चेन्द्रियेष्वप्यायोज्यम् । तथैकः कश्चित् षट्स्वपि जीवनिकायेष्वविरतोऽसंयतत्वाच्च तैरसौ 'कार्यं' सावद्यानुष्ठानं स्वयं करोति कारयति च परैस्तस्य च क्वचिदपि निवृत्तेरभावादेवम्भूतोऽध्यवसायो भवति, तद्यथा–एवं खल्वहं षड्भिरपि जीवनिकायैः सामान्येन कृत्यं करोमि, न पुनस्तद्विशेष प्रतिज्ञेति, स च तेषु षट्स्वपि जीवनिकायेष्वसंयतोऽप्रतिहतप्रत्याख्यातपापकर्म्मा भवति । एवमष्टादशपापस्थानकेष्वप्यायोज्यम् । तदेवमसौ हिंसादीन्यकुर्वन्नपि अविरतत्वात्त-

त्प्रत्ययिकं कर्म बध्नाति । एवं देशकालस्वभावविप्रकृष्टेष्वपि जन्तुषु अविरतत्वादमित्रभूतो भवति तत्प्रत्ययिकं च कर्माऽचिनोति, सोऽयं संज्ञिदृष्टान्तोऽभिहितः, स च कदाचिदेकमेव पृथ्वीकायं व्यापादयति शेषेषु निवृत्तः, कदाचिद् द्वावेवं त्रिकादिकाः संयोगा भणनीयाः, यावत्सर्वानपि व्यापादयतीति । स सर्वेषां व्यापादकत्वेन व्यवस्थाप्यते, सर्वविषयारम्भप्रवृत्तेः, यथा कश्चिद्ग्रामघाताय प्रवृत्तः, यद्यपि च तेन विवक्षितकाले केचन पुरुषा न दृष्टास्तथाप्यसौ ततोऽनिवृत्तत्वात्तद्घातक इत्युच्यते, एवं जीवोऽप्यविरतत्वात् प्राणातिपातमृषावादादत्तमैथुनपरिग्रहक्रोधमानमायालोभादिकमकुर्वन्नपि तत्कर्माऽचिनोति, अष्टादशपापस्थानान्यकुर्वतोऽपि कर्मबन्धः स्यादविरतत्वादिति भावः । इति संज्ञिदृष्टान्तः, अधुना असंज्ञिदृष्टान्तः कथ्यते—

से किं तं असन्निदिट्ठंते ? जे इमे असन्निणो पाणा, तं जहा—पुढविकाइया जाव वणस्सइकाइया छट्ठा वेगतिया तसा पाणा, जेसिं णो तक्काइ वा सन्नाति वा पन्नाति वा मणेति वा वईति वा सयं वा करणाए अन्नेहिं वा करावित्तए करंतं वा समणुजाणित्तए, तेवि णं बाला सव्वेसिं पाणाणं जाव सव्वेसिं सत्ताणं दिया वा राओ वा सुत्ता वा जागरमाणा वा अमित्तभूता मिच्छासंठिया निच्चं पसढविउवातचित्तदंडा, तं० पाणाइवाए जाव मिच्छादंसणसल्ले । इच्चेवं [ जइवि ] जाव (?) नो चेव णं मणे नो चेव णं वई [ तहवि ] पाणाणं जाव सत्ताणं दुक्खणयाए सोयणयाए

**जूरणयाए तिप्पणयाए पिट्टणयाए परितप्पणयाए ते दुक्खण—सोयण जाव परितप्पणवहबंधण-परिकिलेसाओ अप्पडिविरता भवंति ।**

व्याख्या—'से किं तं असन्निदिट्ठंते' इत्यादि, 'असंज्ञिनो' मनोविकलाः सुप्तमत्तमूर्च्छितादिवत्, ये इमे असंज्ञिनः पृथिवीकायिकाः यावद्वनस्पतिकायिकास्तथा षष्ठा अप्येके त्रसाः प्राणिनो विकलेन्द्रियाः यावत्सम्मूर्च्छिमपञ्चेन्द्रियास्ते सर्वेऽप्यसंज्ञिनो, येषां नो 'तर्को' विचारो मीमांसाविशिष्टविमर्शो विद्यते, यथा—कस्यचित्संज्ञिनो मन्दमन्दप्रकाशे स्थाणुपुरुषोचिते देशे किमयं ? स्थाणुरुत पुरुष इत्येवमात्मक ऊह—स्तर्कः सम्भवति, नैवं तेषामसंज्ञिनां तर्कः सम्भवतीति । तथा 'संज्ञा' पूर्वोपलब्धेऽर्थे तदुत्तरकालपर्यालोचनं, सा संज्ञा येषां नास्ति, तथा 'प्रज्ञा' बुद्धिः-साऽपि नास्ति, तथा मनस्तथा वाक्वचनं, साऽपि न विद्यते, तथा स्वयं करोमि अन्यैर्वा कारयामीत्येवम्भूतोऽध्यवसायो नास्ति, तेऽप्यसंज्ञिनो बालवद्बाला दिवा रात्रौ [वा] सुप्ता जाग्रदवस्था वा सर्वजीवानामभित्रभूता उच्यन्ते, विरतेरभावात् । एवमष्टादशपापस्थानकेष्वप्यायोज्यन्ते । असंज्ञिनो हि विरतेरभावादविरताः, अविरतत्वाच्च कर्मणां बन्धका एवेति । यद्यप्यसंज्ञिनो [ विशिष्ट ] मनोव्यापाररहितास्तथाऽपि सर्वप्राणिनां दुःखोत्पादनतया तथा शोचनतया—शोकोत्पादनतया तथा जूरणतया—वयोहानिरूपया तथा 'तिप्पणयाए' त्रिभ्यो मनोवाक्कायरूपेभ्यः पातनं त्रिपातनं, तद्भावस्तया, यदि वा 'तिप्पणयाए'त्ति परिदेवनतया तथा 'पिट्टणयाए' मुष्टिलोष्टादिप्रहारेण तथा [ तथाविध ] परितापनतया—बहिरन्तश्च पीडया, ते चासंज्ञिनो

यद्यपि देशकालस्वभावविप्रकृष्टानां, न सर्वेषां दुःखमुत्पादयन्ति तथापि विरतेरभावात्तत्प्रत्ययिकेन कर्मणा बध्यन्ते, तदेवं विप्रकृष्टविषयेऽपि बन्धकाः स्युरविरतत्वात् । अथोपसंजिहीर्षुराह इति—

**इति खलु ते असन्निणो वि सत्ता अहोनिसं पाणातिवाए उवक्खाइज्जंति, जाव अहोनिसं परिग्गहे उवक्खाइज्जंति जाव मिच्छादंसणसल्ले उवक्खाइज्जंति ।**

व्याख्या—'इति खलु' इह खलु ये इमे पृथिवीकायादयोऽसंज्ञिनः प्राणिनस्तेषां न तर्को न संज्ञा न प्रज्ञा न मनो न वाक् [न] स्वयं कर्तुं नान्येन कारयितुं न कुर्वन्तमनुमन्तुं वा प्रवृत्तिरस्ति, ते चाहर्निशममित्रभूता मिथ्यासंस्थिता नित्यं प्रशठव्यतिपातचित्तदण्डा दुःखोत्पादनं यावत् परितापनपरिक्लेशादप्रतिविरता, असंज्ञिनोऽपि सन्तोऽहर्निशं प्राणातिपाते कर्त्तव्ये तद्योग्यतया तदमम्प्राप्तावपि प्रामघातकवदुपाख्यायन्ते—कथ्यन्ते, यावन्मिथ्यादर्शनशल्ये उपाख्यायन्ते, एतावता असंज्ञिनामपि प्राणिनां किमप्यकुर्वतामपि अविरतत्वात्पापकर्मबन्धो जायत इति भावः । तदेवं दृष्टान्तद्वयं प्रदर्श्य तत्प्रतिबद्धमेवाऽर्थशेषं प्रतिपादयितुं शिष्यः प्रश्नं करोति—किमेते सत्त्वाः संज्ञिनोऽसंज्ञिनश्च भव्याभव्यत्ववन्नियतरूपा एवाहोस्वित् संज्ञिनो भूत्वा असंज्ञित्वं प्रतिपद्यन्ते असज्ञिनोऽपि संज्ञित्वमित्येवं शिष्येण प्रतिपादिते सत्याहाचार्यः—

**सव्वजोणिया वि खलु सत्ता सन्निणो हुच्चा असन्निणो हुंति असन्निणो हुच्चा सन्निणो हुंति । होच्चा सन्नी अदुवा असन्नी ।**

सूयगडाङ्ग-सूत्रं दीपिकान्वितम् । ॥ १०० ॥

व्याख्या—ये वेदान्तवादिनो वादिनस्ते एवं प्रतिपादयन्ति 'पुरुषः पुरुषत्वमेवाश्नुते पशुरपि पशुत्वमेवे'ति, तदत्रापि संज्ञिनः संज्ञिन एव भविष्यन्ति असंज्ञिनोऽपि असंज्ञिन इति, तन्मतव्यवच्छेदार्थमाह–'सव्वजोणिया वी'त्यादि, यदि वा किं संज्ञिनोऽसंज्ञिकर्मसम्बन्धं प्राक्तने कर्मणि सत्येव कुर्वन्ति ? किं वा नेत्येवमसंज्ञिनोऽपि संज्ञिकर्मबन्धनं प्राक्तने सत्येव कुर्वन्त्याहोस्विन्नेत्येतदाशङ्क्याह—'सव्वजोणिया वी'त्यादि, सर्वा योनयो येषां ते सर्वयोनयः, संवृत्तविवृत्तोभय-शीतोष्णोभय-सचित्ताचित्तोभयरूपयोनय इत्यर्थः । सर्व योनयोऽपि खलु सत्त्वाः पर्याप्त्यपेक्षया यावन्मनःपर्याप्तिर्न निष्पद्यते तावदसंज्ञिनः करणतः सन्तः पश्चात्संज्ञिनो भवन्ति एकस्मिन्नेव जन्मनि, अन्यजन्मापेक्षया त्वेकेन्द्रियादयोपि सन्तः पश्चान्मनुष्यादयो भवन्तीति, तथाभूतकर्मपरिणामात्, न पुनर्भव्याभव्यत्ववद्व्यवस्थानियमो, भव्याभव्यत्वे हि न कर्मायत्ते, अतो नानयोर्व्यभिचारः । ये पुनः कर्मवशगास्ते संज्ञिनो भूत्वाऽन्यत्रासंज्ञिनो भवन्ति, असंज्ञिनश्च भूत्वा संज्ञिन इति । वेदान्तवादिमतस्य तु प्रत्यक्षेणैव व्यभिचारः समुपलभ्यते, तथाहि—संज्ञ्यपि कश्चिन्मूर्च्छाद्यवस्थायामसंज्ञित्वं प्रतिपद्यते मूर्च्छापगमे पुनः संज्ञित्वमिति, जन्मान्तरे तु सुतरां व्यभिचारः, तथा प्रबुद्धो निद्रोदयात्स्वपिति सुप्तश्च प्रतिबुध्यते, एवं स्वापप्रबोधावस्था एकस्मिन्नेव भवे जीवस्य जायते, एवं संज्ञित्वमसंज्ञित्वमप्येकस्मिन्नेव भवे जन्तोरविरुद्धमिति । एवं परभवेऽपि संज्ञ्यसंज्ञी स्यादसंज्ञी च संज्ञी स्यात् । तथा पुरुषो देवत्वं देवश्च पुरुषत्वमित्येवं सर्वत्र योज्यम् ।

तत्थ से अविवि[चि]त्ता अविधूणित्ता असंमुच्छित्ता अणणुतावित्ता असन्निकायाओ [वा]

द्वितीये श्रुत० चतुर्थाध्ययनेऽसज्ञीनां संज्ञिसज्ञीनां चासंज्ञिभवन वर्णनम् । ॥ १०० ॥

(ऽसंज्ञिकायात्) सन्निकायं संकमिंति (संक्रामन्ति) १, सन्निकायाओ [ वा ] असन्निकायं संकमिंति २, सन्निकायाओ [ वा ] सन्निकायं संकमिंति ३, असन्निकायाओ [ वा ] असन्निकायं संकमिंति ४ ।

व्याख्या—तत्र प्राक्तनं कर्म यदुदीर्णं यच्च बद्धमास्ते, तस्मिन् सत्येव तत्कर्म 'अविविच्य' अपृथक्कृत्य तथाऽविधूयाऽसमुच्छिद्यानुताप्य तदेवमपरित्यक्तकर्माणोऽसंज्ञिकायात्संज्ञिकायं सङ्क्रामन्ति तथा संज्ञिकायादसंज्ञिकायमिति [ संज्ञिकायात्संज्ञिकायं असंज्ञिकायादसंज्ञिकायं ] । त[य]था नारकाः—सावशेषकर्माण एव नरकादुद्वृत्य प्रतनुवेदनेषु तिर्यक्षूत्पद्यन्ते, एवं देवा अपि प्रायस्तत्कर्मशेषतया शुभस्थानेषूत्पद्यन्त इत्यवगन्तव्यम् । अत्र चतुर्भङ्गिका सूत्रेणैव दर्शिता ।

जे एए सन्नी वा असन्नी वा सव्वे ते मिच्छायारा[ निच्चं ]पसढविउवातचित्तदंडा, तं जहा—पाणातिवाते वा जाव मिच्छादंसणसल्ले ।

व्याख्या—सर्वेऽप्येते संज्ञिनोऽसंज्ञिनो वा मिथ्याचारा, अप्रत्याख्यानित्वादित्यभिप्रायः, सर्वजीवेष्वपि नित्यं प्रशठव्यतिपातचित्तदण्डा भवन्तीत्येवम्भूताश्च प्राणातिपाताद्येषु सर्वेष्वप्याश्रवद्वारेषु वर्त्तन्त इति । तदेवं व्यवस्थिते यदुक्तं परेण तद्यथा—'इहाविद्यमानाऽशुभयोगसम्भवे कथं पापकर्म्म बध्यते ?' इत्येतन्निरस्तं, विरतेरभावादकुर्वतामपि पापं लगत्येवेति भावः ।

एवं खलु भगवया अक्खाए—असंजए अविरए अप्पडिहयपच्चक्खायपावकम्मे सकिरिए असंवुडे एगंतदंडे एगंतबाले एगंतसुत्ते, से बाले अवियारमणवयणकायवक्के सुविणमवि ण पासइ पावे य से कम्मे कज्जति । [ सू० ४ ]

व्याख्या—एवं 'भगवता' तीर्थकृताऽऽख्यातमित्यादि यत्प्राक्प्रतिज्ञातं तदेवास्मिन् सूत्रालापके दर्शितं, व्याख्यानं प्राग्वत् ज्ञेयमिति, पापं च कर्म्म लगत्येव । तदेवमप्रत्याख्यानिनः कर्म्मसम्भवात्तत्सम्भवे च नारकतिर्यङ्नरामरगतिलक्षणं संसारमवगम्य संजातवैराग्यः शिष्यः आचार्यं प्रति प्रवणचेताः प्रश्नयितुमाह—

चोयगः—से किं कुव्वं किं कारवं कहं संजयाविरयपडिहयपच्चक्खायपावकम्मे भवति ? ।

व्याख्या—शिष्यः प्राह—भगवन् ! किमनुष्ठानं स्वतः कुर्वन् ? किं वा परं कारयन् ? केन प्रकारेण संयतविरतप्रतिहतप्रत्याख्यातपापकर्मा जन्तुर्भवति ? इत्येवं पृष्टे सत्याचार्य आह—

तत्थ खलु भगवया छज्जीवनिकाया हेऊ पन्नत्ता, [ तं जहा— ] पुढविकाइया जाव तसकाइया, से जहा नामए ममं अस्सातं दंडेण वा अट्ठीण वा मुट्ठीण वा लेलूएण वा कवालेण वा आतालिज्जमाणस्स वा जाव उद्दविज्जमाणस्स वा लोमुक्खणणमायमवि हिंसाकारगं दुक्खं भयं

पडिसंवेदेमि, इच्चेवं जाण सव्वे पाणा जाव सव्वे सत्ता दंडेण वा जाव कवालेण वा आताडिज्जमाणा वा उवहम्ममाणा वा तज्जिज्जमाणा वा ताडिज्जमाणा जाव उवद्दविज्जमाणा वा जाव लोमुक्खणणमायमवि हिंसाकारकं दुक्खं भयं पडिसंवेदिंति। एवं नच्चा सव्वे पाणा [ जाव सव्वे सत्ता ] न हंतव्वा जाव न उद्दवेयव्वा, एस धम्मे सुद्धे धुवे नितिए सासए समिच्च लोगं खेदन्नेहिं पवेइए।

व्याख्या—तत्र खलु भगवता षड्जीवनिकायाः संयमसद्भावे हेतुत्वेनोपन्यस्ताः, यथा प्रत्याख्यानरहितस्य षड्जीवनिकायाः संसारगतिनिबन्धनत्वेन कथिताः एवं त एव प्रत्याख्यानिनो मोक्षाय भवन्तीति, तथा चोक्तम्—"×जे जत्तिया य हेऊ, भवस्स ते चेव तत्तिया मोक्खे। गणाणाईया लोगा, दोण्हवि पुण्णा भवे तुल्ला ॥ १॥" इदमुक्तं भवति—यथाऽऽत्मनो दण्डाद्युपघाते दुःखमुत्पद्यते एवं सर्वेषामपि प्राणिनामित्यात्मोपमया तदुपघातान्निवर्त्तते, एष धर्म्मः सर्वापायत्राणलक्षणो ध्रुवो नित्यः शाश्वतः परैः क्वचिदप्यस्खलितो युक्तिसङ्गतत्वात्। अयं च धर्म्मः सम्यक्शुद्ध इत्यवगम्य लोकं चतुर्दशरज्ज्वात्मकं खेदज्ञैः प्रवेदितः।

एवं से भिक्खू विरते पाणाइवायाओ जाव मिच्छादंसणसल्लाओ, से भिक्खू णो दंतपक्खा-

× ये यावन्तश्च हेतवो भवस्य ते तावन्तश्चैव मोक्षस्य। गणनातिगा लोका द्वयोरपि पूर्णा भवेयुस्तुल्याः ॥ १॥

लणेणं दंते पक्खालेज्जा, नो अंजणं नो वमणं नो धू[ वणित्तं ]मणत्तं पि आ[इत्ते]दत्ते, से भिक्खू अकिरिए अलूसए अकोहे जाव अलोभे उवसंते परिनिव्वुडे, एस खलु भगवया अक्खाए संजयविरयपडिहयपच्चक्खायपावकम्मे, अकिरिए संवुडे एगंतपंडिए यावि भवति त्तिबेमि । [सू० ५] । बीयसुयक्खंधस्स चउत्थं पच्चक्खाणकिरियानाम अज्झयणं, समत्तं ।

व्याख्या—एवं स भिक्षु-र्निवृत्तः सर्वाश्रवद्वारेभ्यो दन्तप्रक्षालनादिकाः क्रिया अकुर्वन् सावद्यक्रियाया अभावादक्रियोऽक्रियत्वाच्च प्राणिनामलूपकोऽव्यापादको यावदेकान्तेनैवासौ पण्डितो भवति । इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ।

इति श्रीपरमसुविहितखरतरगच्छविभूषणपाठकप्रवरश्रीमत्साधुरङ्गगणिवरगुम्फितायां श्रीसूत्रकृताङ्गदीपिकायां द्वितीयश्रुतस्कन्धे समाप्तं प्रत्याख्यानक्रियाख्यं चतुर्थमध्ययनमिति ॥ ४ ॥

# अथ पञ्चममाचारश्रुताध्ययनम्



साम्प्रतं पञ्चममारभ्यते, तत्रेयमादिगाथा—

**आदाय बंभचेरं च, आसुपन्ने इमं वयं । अस्सिँ धम्मे अणायारं, नायरेज्ज कयाइ वि ॥ १ ॥**

व्याख्या—'आदाय' गृहीत्वा, किं तद् ? ब्रह्मचर्यं–सत्य-भूतदया-तप-इन्द्रियनिरोधलक्षणं, एतन्मौनीन्द्रप्रवचने ब्रह्मचर्यमित्युच्यते, तदादाय 'आशुप्रज्ञः' सदसद्विवेकज्ञः 'इमां' समस्ताध्ययनेनाभिधीयमानां वाचं[ इदं जगत् ] शाश्वतमेवाशाश्वतमेव वा, इत्यादिकां कदाचिदपि 'नाचरेत्' न कथयेत्, तथाऽस्मिन्धर्म्मे सर्वज्ञप्रणीते व्यवस्थितः सन् अनाचारं–सावद्यानुष्ठानरूपं 'न समाचरेत्' न विदध्यात्, यदि वा केवलिप्रणीते धर्म्मे व्यवस्थितः 'इमां' वक्ष्यमाणां वाचमनाचारं च कदाचिदपि नाचरेदिति श्लोकार्थः ॥ १ ॥

अथाचार्योऽनाचारं दर्शयितुं यथावस्थितलोकस्वरूपप्रकटनपूर्वकमाह—

**अणादीयं परिन्नाय, अणवदग्गेति वा पुणो । सासयमसासए वा, इति दिट्ठिं न धारए ॥ २ ॥**

व्याख्या—चतुर्दशरज्ज्वात्मकं लोकमनादिकमनवदग्रं[–अनन्तं]च परिज्ञाय–अपर्यवसानं च ज्ञात्वा शाश्वतमशाश्वतं वा इत्येकान्तेन न वदेत्, इत्येवम्भूतां दृष्टिं न धारयेत्, पण्डितस्त्वेकान्तेन शाश्वतमेवाशाश्वतमेव लोकं न वदेदिति गाथाऽर्थः ॥२॥

किमित्येकान्तेन न वदेदित्याह—

**एएहिं दोहिं ठाणेहिं, ववहारो ण विज्जई । एएहिं दोहिं ठाणेहिं, अणायारं तु जाणए ॥ ३ ॥**

व्याख्या—अयं लोको नित्य एवानित्य एव वा, अथवा सर्वं वस्तु नित्यमेवानित्यमेव वा, एताभ्यां स्थानाभ्यामभ्युपगम्यमानाभ्यां अनयोर्वा पक्षयोर्व्यवहारो लोकस्यैहिकामुष्मिकयोः कार्ययोः प्रवृत्तिनिवृत्तिलक्षणो न विद्यते, एतावता एकान्तपक्षं नाश्रयेत्, एकान्तपक्षाश्रयणं त्वनाचारः, स्याद्वादपक्षाश्रयणं त्वाचार इति । अत्र हेतुयुक्तयो बृहट्टीकातोऽवसेया, अत्र तु संक्षेपेण सूत्रार्थस्यैव प्रकाशनमिति गाथार्थः ॥ ३ ॥

तथाऽन्यमप्यनाचारं निषेद्धुकाम आह—

**समुच्छिहिंति सत्थारो, सव्वे पाणा अणेलिसा । गंठिगा वा भविस्संति, सासयंति व णो वए ॥ ४ ॥**

व्याख्या—सम्यङ्निरवशेषतया 'उच्छेत्स्यन्ति' उच्छेदं यास्यन्ति–क्षयं यास्यन्ति यदिवोच्छेत्स्यन्ति–सिद्धिं यास्यन्ति, के ते? शास्तार–स्तीर्थङ्करास्तच्छासनप्रतिपन्ना वा 'सर्वे' निरवशेषाः सिद्धिगमनयोग्या भव्याः, ततश्चोत्सन्नभव्यं जगत्स्यादिति, अत्र शुष्कतर्काभिमानग्रहगृहीता युक्तिं प्रकाशयन्ति–जीवसद्भावे सत्यप्यपूर्वोत्पादाभावात् अभव्यस्य च सिद्धिगमनासम्भवात् कालस्य चानन्त्यात् निरन्तरं सिद्धिगमनसम्भवेन तद्व्ययोपपत्तेरपूर्वभव्यजीवोत्पत्तेरभावाद्भव्योच्छेद इत्येवं नो वदेत्, तथा सर्वेऽपि प्राणिनः 'अनीदृशाः' न सदृशाकाराः सन्तीत्येवमपि नो वदेत् । तथा ग्रन्थिकाः सत्त्वाः–सर्वेऽपि

प्राणिनः कर्म्मग्रन्थोपेता एव भविष्यन्तीत्येवमपि नो वदेत् । इदमुक्तं भवति–सर्वेऽपि प्राणिनः सेत्स्यन्त्येव कर्म्मावृता वा सर्वे भविष्यन्तीत्येवमेकमपि पक्षमेकान्तिकं नो वदेत् । यदि वा 'ग्रन्थिका' इति ग्रन्थिभेदं कर्तुमसमर्था भविष्यन्तीत्येवं च नो वदेत्, तथा शा[श्वताः]स्तारः सर्वकालस्थायिनस्तीर्थकरा भविष्यन्ति, नोच्छेदं यास्यन्ति इत्येवमपि नो वदेत् ॥ ४ ॥

तदेवं दर्शनाचारवादनिषेधं वाङ्मात्रेण प्रदर्श्याधुना युक्तिं दर्शयितुमाह—

**एएहिं दोहिं ठाणेहिं, ववहारो ण विज्जती । एएहिं दोहिं ठाणेहिं, अणायारं तु जाणए ॥ ५ ॥**

व्याख्या—सर्वे शास्तारः क्षयं यास्यन्ति शाश्वता वा भविष्यन्तीति, यदि वा सर्वे शास्तारस्तद्दर्शनप्रपन्ना[वा] सेत्स्यन्ति, शाश्वता वा भविष्यन्ति, यदि वा सर्वे प्राणिनो विसदृशाः सदृशा वा, तथा ग्रन्थिकसत्त्वास्तद्रहिता वा भविष्यन्तीत्येवमनयोर्द्वयोः स्थानयोर्व्यवहारो न विद्यते, तथाहि–'सर्वे शास्तारः क्षयं यास्यन्ती'त्येतदयुक्तं, क्षयनिबन्धनस्य कर्म्मणोऽभावात् सिद्धानां क्षयाभावः, [अथ]भवस्थकेवल्यपेक्षया चेदभिधीयते तदप्ययुक्तं, यतोऽनाद्यनन्तानां केवलिनां सद्भावात्, भरतेषु केवलिनां विरहे महाविदेहेषु सर्वदा केवलिसद्भावः । तथा सर्वेऽपि भव्याः सेत्स्यन्तीत्येतदपि न स्यात्, यतः श्रीभगवत्यां जयन्तीप्रश्नाधिकारे "सव्वे वि णं भंते ! भवसिद्धिया जीवा सिज्झिस्संति ?" भगवानाह—"हंता जयंती ! भवसिद्धिया जीवा सिज्झिस्संति ××× भवसिद्धियविरहिए लोए भविस्सइ ? नो इणमट्ठे समट्ठे" इत्यादिभगवदुक्तवचनप्रामाण्याद्भव्यजीवविरहितं जगन्न भविष्यति, युक्तिश्चात्र भगवतीवृत्तितोऽवसेया, तथा च "जइया होही

पुच्छा, जिणंदपासंमि उत्तरं तइया । इक्कस्स निगोयस्स, अणंतभागो य सिद्धिगओ ॥ १ ॥" इति वचनात् सर्वेऽपि न सेत्स्यन्ति, न भव्यजीवविरहितं जगद्भविष्यति। न सिद्धिक्षेत्रं पूर्णं भविष्यति । सिद्धिं च निरन्तरमेव प्रयास्यन्ति, अतो "तमेव सच्चं नीसंकं, जं जिणेहिं पवेइयं" इति वचनादेकान्तपक्षं नाश्रयेत् । अथ शाश्वतत्वमपि शास्तॄणां न प्ररूपयेत्, यतस्तेषामपि सिद्धिगमनसद्भावादशाश्वतत्वमिति, अत एकान्तेनाशाश्वतत्वपक्षमपि न श्रयेत् । तथा सर्वेऽपि प्राणिनः चित्रकर्मसद्भावान्नानागतिजातिशरीराङ्गोपाङ्गादिभिर्भिन्नत्वात् विसदृशास्तथोपयोगासङ्ख्येयप्रदेशत्वामूर्त्तत्वादिधर्मैः कथञ्चित् सदृशा इति। तथोल्लसितसद्वीर्यतया केचिद्भिन्नग्रन्थयोऽपरे च तथाविधपरिणामाभावाद्ग्रन्थिकसत्त्वा एव भवन्तीत्येवं व्यवस्थिते नैकान्तपक्षो भवतीति निषिद्धः, तदेवमेतयोरेव द्वयोः स्थानयोरुक्तनीत्याऽनाचारं विजानीयादिति स्थितम् । अपि चागमेऽनन्तानन्तास्वप्युत्सर्पिण्यवसर्पिणीषु भव्यानामनन्तभाग एव सिद्ध्यतीत्ययमर्थः प्रतिपाद्यते, यदा चैवम्भूतं तदानन्त्यं, तत्कथं तेषां क्षयः ? । युक्तिरप्यत्र—सम्बन्धिशब्दावेतौ, मुक्तिः संसारं विना न भवति संसारोऽपि न मुक्तिमन्तरेण, ततश्च भव्योच्छेदे संसारस्याप्यभावः स्यादतोऽभिधीयते—नानयोर्व्यवहारो युज्यत इति ॥ ५ ॥

अधुना चारित्राचारमङ्गीकृत्याह—

**जे केइ खुड्डगा पाणा, अदुवा संति महालया । सरिसं तेहिं वेरंति, असरिसंती य नो वदे ॥ ६ ॥**

व्याख्या—ये केचन क्षुद्राः प्राणिनः एकेन्द्रियद्वीन्द्रियादयोऽल्पकाया वा पञ्चेन्द्रिया, अथवा 'महालया' महाकाया

हस्त्यश्वादयः अल्पकायाः-कुन्थ्वादयः, तेषां व्यापादने सदृशं ( विसदृशं वा ) वैरमिति एवं ( एकान्तेन ) नो वदेत्, यतः बन्धोऽपि अध्यवसायवशाद्भवति, तीव्राध्यवसायिनोऽल्पकायसत्त्वव्यापादनेऽपि महान् बन्धः, अकामस्य अनाभोगादिना महाकायसत्त्वव्यापादनेऽपि स्वल्पमिति गाथार्थः ॥ ६ ॥

एएहिं दोहिं ठाणेहिं, ववहारो न विज्जई। एएहिं दोहिं ठाणेहिं, अणायारं तु जाणए ॥७॥

व्याख्या—आभ्यामेव स्थानाभ्यां अनयोर्वा स्थानयोर्महाकायाल्पकायव्यापादने कर्मबन्धः सदृशः असदृशो वा, एतयोः स्थानयोर्व्यवहारो न विद्यते, निर्युक्तिकत्वान्न युज्यते । एतयोरेव स्थानयोः प्रवृत्तस्यानाचारं विजानीयात्, यतो-नहि जीव-व्यापत्त्या हिंसोच्यते, जीवस्य शाश्वतत्वेन व्यापादयितुमशक्यत्वात्, अपि त्विन्द्रियादिव्यापत्त्या हिंसा स्यात्, तथा चोक्तं-"पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनिश्वासमथान्यदायुः। प्राणा दशैते भगवद्भिरुक्ता-स्तेषां वियोजीकरणं तु हिंसा ॥ १ ॥" अपि च हिंसा चतुर्धा, एका द्रव्यतोऽपि भावतोऽपि १, एका द्रव्यतो न भावतः २, एका भावतो हिंसा न द्रव्यतः ३, एका न द्रव्यतो न भावतः ४, अयमेको भङ्गः शुद्धः, अबन्धकत्वाद्, द्वितीयो भङ्गः जातेऽपि द्रव्यतः प्राणिवधे स्वल्पः कर्मबन्धः, भावतः परिणामस्य शुद्धत्वात् । भावमहितस्यैव कर्मबन्धोऽभिहितः, तथाहि-वैद्यस्यागमानुसारेण सम्यक्क्रियां कुर्वतोऽपि यद्यातुरविपत्तिर्भवति तथापि न वैरानुषङ्गो भवेद्दोषाभावात् । अपरस्य तु सर्पबुद्ध्या रज्जुमपि घ्नतो भावदोषात् कर्मबन्धः, यतः-" उच्चालियंमि पाए, इरियासमियस्स संकमट्ठाए । वावज्जेज्ज कुलिंगी,

मरिज्ज तज्जोगमासज्ज ॥ १ ॥ न य तस्स तन्निमित्तो, बंधो सुहुमो वि देसिओ समए । अणवज्जे य पओगे, ण सव्वभावेण सो जम्हा ॥ २ ॥ अज्झत्थविसोहिए, जीवनिकाएहिं संघ(डे)डो लोए । देसियमहिंसयत्तं, जिणेहिं तेलोक्कदंसीहिं ॥ ३ ॥ नाणी कम्मस्स खयट्ठ–मुट्ठिओ नो ठिओ य हिंसाए । जयइ असढं अहिंस-(त्थ)–मुट्ठिओ अवहओ सो उ ॥ ४ ॥ तस्स असंचयओ सं–चयओ(य) जाइं सत्ताइं । जोगं पप्प विणस्संति, नत्थि हिंसाफलं तस्स ॥ ५ ॥ जो य पमत्तो पुरिसो, तस्स य जोगं पडुच्च जे सत्ता । वाविज्जंते नियमा, तेसिं सो हिंसओ होइ ॥ ६ ॥ जे वि न वाविज्जंती, नियमा तेसिं पि हिंसओ होई । सावज्जो य पओगेण, सव्वभावेण सो जम्हा ॥ ७ ॥ आया चेव अहिंसा, आया हिंसत्ति निच्छओ एसो । जो होइ अप्पमत्तो, अहिंसओ हिंसओ इयरो ॥ ८ ॥ जो य पओगं जुंजइ, हिंसत्थं जो य अन्नभावेण । अमणो य जो पउंजइ, इत्थ विसेसो महं वुत्तो ॥ ९ ॥ हिंसत्थं जुंजंतो, सुमहं दोसो अ[प्प]णत्तरं इयरो । अमणो य अप्पदोसो, जोगनिमित्तं च विन्नेओ ॥ १० ॥ रत्तो वा मूढो वा, जो पउंजइ पओगं । हिंसा वि तत्थ जायइ, तम्हा सो हिंसओ वुत्तो ॥ ११ ॥ न य हिंसामित्तेण, सावज्जेणावि हिंसओ होई । सुद्धस्स य संपत्ती, अफला भणिया जिणवरेहिं ॥ १२ ॥ जा जयमाणस्स भवे, विराहणा सुत्तविहिसमग्गस्स । सा होइ निज्जरफला, अज्झत्थविसोहिजुत्तस्स ॥ १३ ॥" अत्र पूर्वोक्तचतुर्भङ्गिकामध्ये प्रथमतृतीयभङ्गावशुद्धौ, शेषौ शुद्धौ, इत्यलं विस्तरेण । एतावता महत्प्राणीवधे अल्पकायसत्त्वव्यापादने च सदृशं वैरं सदृशः कर्मबन्धः इत्येवं नो वदेत् इति गाथार्थः ॥ ७ ॥

अथ पुनरपि चारित्रमधिकृत्याहारमधिकृत्याचारानाचारौ प्रतिपादयितुकाम आह—

**अहाकम्माणि भुंजंति, अन्नमन्ने सकम्मुणा। उवलित्तेति जाणिज्जा, अणुवलित्तेति वा पुणो ॥ ८॥**

व्याख्या—साधुमाश्रित्य कर्म्माणि-आधाकर्म्माणि, तानि च वस्त्रभोजनवसत्यादीनि, एतान्याधाकर्म्माणि ये भुञ्जन्ते-एतैरुपभोगं ये कुर्वन्ति 'अन्योऽन्यं' परस्परं तान्स्वकीयेन कर्म्मणोपलिप्तान् विजानीयादित्येवं नो वदेत्, [ तथाऽनुपलिप्तानिति वा नो वदेत् ]। एतदुक्तं भवति-अधाकर्म्माऽपि श्रुतोपदेशेन शुद्धमिति कृत्वा भुञ्जानः कर्म्मणा नोपलिप्यते तथा श्रुतोपदेशमन्तरेणाऽऽहारगृद्ध्या आधाकर्म्म भुञ्जानस्य तन्निमित्तकर्म्मबन्धसद्भावात्, अतोऽनुपलिप्तानपि नो वदेत्, यथाऽवस्थितमौनीन्द्रागमज्ञस्य त्वेवं युज्यते वक्तुं-आधाकर्म्मोपभोगेन स्यात्कर्म्मबन्धः स्यान्नेति, उक्तं च-" किञ्चिच्छुद्धं कल्प्य-मकल्प्यं वा स्यादकल्प्यमपि कल्प्यम्। पिण्डः शय्या वस्त्रं, पात्रं वा भेषजाद्यं वा ॥ १ ॥" अतः आधाकर्म्मणोपलिप्तान् वा अनुपलिप्तान् वा इत्येकान्तेन नो वदेत् ॥ ८ ॥ किमित्येवं स्याद्वादः प्रतिपाद्यते ? इत्याह—

**एतेहिं दोहिं ठाणेहिं, ववहारो न विज्जई। एतेहिं दोहिं ठाणेहिं, अणायारं तु जाणए ॥ ९ ॥**

व्याख्या—आभ्यां स्थानाभ्यामनयोर्वा स्थानयोराधाकर्मोपभोगेन कर्मबन्ध[भावा]भावभूतयोर्व्यवहारो न विद्यते, तथाहि-श्रुते हि कदाऽपि कस्यामप्यवस्थायामाधाकर्मग्रहणमप्यनुज्ञातमस्ति " सव्वत्थ संजमं सं-जमाओ अप्पाणमेव रक्खिज्जा। मुच्चइ अइवायाओ, पुणो वि सोही न(त)या (?) विरई ॥ १ ॥" तथा—" संथरणंमि असुद्धं,

दुन्ह वि गिण्हंतदिंतयाणऽहियं, आउरदिट्ठंतेणं, तं चेव हियं असंथरणे ॥ २ ॥" तथा च श्रीभगवत्यां— "तहारूवं भंते ! समणं वा माहणं वा फासुयएसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जति ? गोयमा ! एगंतसो निज्जरा कज्जति । तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ ? गोयमा ! बहुतरिया निज्जरा कज्जइ अप्पतरे पावे कम्मे कज्जइ ।" इत्यादिप्रकारेणाधाकर्म्माण्यनुज्ञातमस्ति, अतः आधाकर्म्मोपभोगेन कर्मणा लिप्यते इत्येकान्तेन नो वदेत्, नाऽपि तदुपभोगे कर्म्मबन्धाभाव इत्यपि वदेत्, यतः—आधाकर्म्मणि निष्पाद्यमाने षड्जीवनिकायवधस्तद्वधे च प्रतीतः कर्मबन्ध इत्य[तोऽ]नयोः स्थानयोरेकान्तेनाश्रीयमाणयोर्व्यवहारो न युज्यते, तथाऽऽभ्यामेव स्थानाभ्यामाश्रिताभ्यां सर्वमनाचारं विजानीयादिति स्थितं ॥ ९ ॥ पुनरन्यथा दर्शनं प्रति वागनाचारं दर्शयितुमाह—

**जमिदं ओरालमाहारं, कम्मगं च त[मेव तं]हेव य। सव्वत्थ वीरियं अत्थि, नत्थि सव्वत्थ वीरियं ॥१०॥**

व्याख्या—औदारिकं शरीरं १, तथाऽऽहारकं २, वैक्रियं ३, कार्म्मणं ४, तैजसं ५, एवं पञ्च शरीराणि, तत्र कश्चिदेवं जानाति—यदेवौदारिकं तदेव कार्म्मणं तैजसं च, यदेव तैजसं कार्म्मणं तदेवौदारिकं तदेवाहारकं तदेव वैक्रियं च, एवंविधां संज्ञां न धारयेत्, एतेषां शरीराणां ऐक्यं न गणयेत्, तथा मिथः पार्थक्यमपि न गणयेत्, कथञ्चिदेकत्रोपलब्धेरभेदः कथञ्चिच्च संज्ञाभेदाद्भेद इति स्थितं, तदेवमौदारिकादीनां शरीराणां भेदाभेदौ प्रदर्श्य सर्वस्यैव द्रव्यस्य भेदाभेदौ प्रदर्शयितु-

कामः पूर्वपक्षं श्लोकपश्चार्द्धेन दर्शयितुमाह—'सव्वत्थ वीरिय' मित्यादि, 'सर्वद्रव्यवीर्यं सर्वद्रव्येषु विद्यते' अयं साँख्याभिप्रायः, साँख्यानां हि सत्त्वरजस्तमोरूपस्य प्रधानस्यैकत्वात्तस्य च सर्वस्यैव कारणत्वात्, अतः 'सर्वं सर्वात्मक'-मित्येवं व्यवस्थिते सर्वत्र घटपटादावपरस्य व्यक्तस्य [ कार्यस्य ] 'वीर्यं' शक्तिर्विद्यते, सर्वस्यैव हि व्यक्तस्य प्रधानकार्यत्वात्कार्यकारणयोश्चैकत्वात्, अतः 'सर्वं सर्वात्मक'मित्येवं संज्ञां नो निवेशयेत्, तथा "सर्वे भावाः स्वभावेन, स्वस्वभावे व्यवस्थिताः", अतः प्रतिनियतशक्तित्वान्न सर्वत्र सर्वस्य 'वीर्यं' शक्तिरित्येवमपि संज्ञां नो निवेशयेत्, अनेकान्तनिषेधेन स्याद्वादभाषया वदेदिति गाथार्थः ॥ १० ॥

**एतेहिं दोहिं ठाणेहिं, ववहारो न विज्जई। एएहिं दोहिं ठाणेहिं, अणायारं तु जाणए ॥ ११ ॥**

सुगमा×, व्याख्या पूर्ववत्। तथा—

**नत्थि लोए अलोए वा, नेवं सन्नं निवेसए। अत्थि लोए अलोए वा, एवं सन्नं निवेसए ॥ १२ ॥**

व्याख्या—पञ्चास्तिकायात्मकश्चतुर्दशरज्ज्वात्मको वा लोको नास्ति, एवं संज्ञां नो निवेशयेत्—न धारयेत्, तथा केवलाकाशात्मकोऽलोकोऽपि नास्तीत्येवमपि संज्ञां न निवेशयेत्—न निवेदयेत्, किन्तु 'अत्थि लोए' इत्यादि, किन्तु अस्ति लोकः

× "द्वाभ्यामेताभ्यां शक्तिरस्ति नास्ति वेति, अथवा शरीराणां सर्वेषां भेदोऽभेदो वेति द्वाभ्यां स्थानाभ्यां व्यवहारो न विद्यते, युक्तयो न सङ्गच्छन्ति इत्यर्थः। एतयोः स्थानयोः प्रवृत्तस्यानाचारं जानीयात्" इति हर्षकुलीयदीपिकायां।

ऊर्द्धाधस्तिर्यग्रूपो वैशाखस्थानस्थितकटिन्यस्तकरयुग्मपुरुषसदृशः पञ्चास्तिकायात्मको वा, युक्तिश्चाऽत्र–यदि सर्वं नास्ति ततः सर्वान्तःपातित्वाल्लोकप्रतिषेधकर्त्तापुरुषोऽपि नास्ति, एतावता लोकाभावे प्रतिषेधकपुरुषाभावः, पुरुषाभावात्प्रतिषेधस्याप्यभावः, तदेवं व्यवस्थिते लोकोऽप्यस्ति तत्प्रतिपक्षभूतः अलोकोऽप्यस्ति इत्येवं संज्ञां निवेशयेदिति गाथार्थः ॥ १२ ॥

**नत्थि जीवा अजीवा वा, नेवं सन्नं निवेसए। अत्थि जीवा अजीवा वा, एवं सन्नं निवेसए ॥ १३ ॥**

व्याख्या—उपयोगलक्षणाः संसारिणो मुक्ता वा जीवा न विद्यन्ते, तथा अजीवाश्च धर्माधर्माकाशकालपुद्गलात्मकाः गतिस्थित्यवगाहदानछायातपोद्द्योतादिवर्त्तनालक्षणा न विद्यन्ते। प्रत्यक्षेणानुपलभ्यमानत्वाज्जीवा न विद्यन्ते, कायाकारपरिणतानि भूतान्येव धावनवल्गनादिकां क्रियां कुर्वन्तीति । अजीवा अपि न विद्यन्ते, एवंविधां संज्ञां नो निवेशयेत्, नास्तिवादी तु सर्वं नास्तीति प्ररूपयति । 'अत्थि जीवे'त्यादि, अस्ति जीवः अस्त्यजीवः एवंविधां संज्ञां निवेशयेत् । तस्मान्नैकान्तेन जीवाजीवयोरभावः, अपितु सर्वपदार्थानां स्याद्वादाऽश्रयणाज्जीवाजीवयोरस्तित्वं नास्तित्वं च (स्यात्) केनापि प्रकारेणेति । अत्र जीवाजीवयोरस्तित्वे नास्तित्वे च युक्तयोः ग्रन्थान्तरादवसेया इति गाथार्थः ॥ १३ ॥

**नत्थि धम्मे अहम्मे वा, नेवं सन्नं निवेसए। अत्थि धम्मे अहम्मे वा, एवं सन्नं निवेसए ॥ १४ ॥**

व्याख्या—धर्म्मः श्रुतचारित्राऽत्मको जीवस्यात्मपरिणामोऽस्ति धर्म्मः कर्मक्षयकारणं, अधर्मोऽपि मिथ्यात्वाविरतिप्रमादकषाययोगरूपः कर्म्मबन्धकारणं, धर्म्मोऽपि नास्ति अधर्म्मोऽपि नास्ति नैवं संज्ञां निवेशयेत्–नैवं प्ररूपयेदित्यर्थः ।

कथं प्ररूपयेत् ? ' अत्थि धम्मे ' त्यादि, अस्ति धर्मः-अधर्म्मोऽप्यस्ति, यतो धर्म्माऽधर्म्ममन्तरेण संसारवैचित्र्यं न स्यात्, यतः-" प्रत्यक्ष एव विश्वेऽस्मिन्, प्रपञ्चः पुण्यपापयोः। द्विभिन्नं (हि) जगत्सर्वं, सुखदुःखव्यवस्थया ॥ १ ॥ एके दधति साम्राज्यं, परे दधति दासताम् ।" इत्यादिवचनात्, अतो धर्मः सम्यग्दर्शनादिकोऽस्ति अधर्म्मोऽपि मिथ्यात्वादिकोऽस्ति इत्येवं संज्ञां निवेशयेदिति गाथार्थः ॥ १४ ॥

**नत्थि बंधे व मुक्खे वा, नेवं सन्नं निवेसए । अत्थि बंधे व मुक्खे वा, एवं सन्नं निवेसए ॥ १५ ॥**

व्याख्या—बन्धः कर्मणां ' नास्ति ' न विद्यते, अमूर्त्तत्वादात्मनो गगनस्येव न कर्मणां बन्धः, इत्येवं संज्ञां नो निवेशयेत्, तथा बन्धाभावाच्च मोक्षस्याप्यभाव इत्येवमपि संज्ञां नो निवेशयेत्, किन्तु-' अत्थि बंधे व मुक्खे वा ' अस्त्यात्मनो बन्धः कर्मणां, अमूर्त्तस्याप्यात्मनो मूर्त्तैः कर्मपुद्गलैः सह सम्बन्धो-बन्धः, स तु विद्यत एव, आत्मनः सक्रियत्वात्, सक्रियस्य स्यादेव बन्धः, यदा ह्यात्माऽक्रियस्तदा न कर्मबन्धः, बन्धाभावाच्च मोक्ष एव, अतो बन्धोऽप्यस्ति मोक्षोऽप्यस्तीत्येवं संज्ञां निवेशयेदिति गाथार्थः ॥ १५ ॥

अथ बन्धसद्भावे पुण्यपापयोरपि सद्भावः । तर्हि—

**नत्थि पुन्ने व पावे वा, नेवं सन्नं निवेसए । अत्थि पुन्ने व पावे वा, एवं सन्नं निवेसए ॥ १६ ॥**

व्याख्या—' नास्ति ' न विद्यते ' पुण्यं ' शुभकर्मप्रकृतिलक्षणं तथा पाप-मशुभकर्मप्रकृतिलक्षणं ' नास्ति ' न विद्यते,

इत्येवं नो संज्ञां निवेशयेत्, यतः-पुण्यपापयोर्विना जगद्वैचित्र्यं न स्यात् । केषांचिन्मते जगद्वैचित्र्यं नियतिकृतं, नियत्या जगद्वैचित्र्यं स्यात् तदप्ययुक्तम्, यदि नियत्या स्वभावेन वा जगद्वैचित्र्यं स्यात् तदा सकलक्रियावैयर्थ्यं स्यात् । सकल क्रियात एव सकलकार्योत्पत्तिः । यतः-शुभक्रियातः पुण्यं पुण्याच्च सुखं अशुभक्रियातः पापं पापाच्च दुःखमित्यतः ' अत्थि पुन्नं व पावं वे 'त्यादि, अस्ति पुण्यं पाप चास्ति एवंविधां संज्ञां निवेशयेदिति गाथार्थः ॥ १६ ॥

नत्थि आसवे संवरे वा, नेवं सन्नं निवेसए। अत्थि आसवे संवरे वा, एवं सन्नं निवेसए ॥ १७ ॥

व्याख्या—आश्रवः प्राणातिपातादिरूपः कर्म्मोपादानकारणं, तन्निषेधः संवरः एतौ द्वावपि न स्तः, इत्येवं संज्ञां न निवेशयेत्, किन्त्वस्त्याश्रवः संवरश्च, इत्येवंविधां संज्ञां निवेशयेदिति गाथार्थः ॥ १७ ॥

नत्थि वेयणा निज्जरा वा, नेवं सन्नं निवेसए। अत्थि वेयणा निज्जरा वा, एवं सन्नं निवेसए ॥ १८ ॥

व्याख्या—' वेदना ' कर्मानुभवलक्षणा तथा ' निर्जरा ' कर्मपुद्गलशाटनलक्षणा, एते द्वे अपि न विद्येते इत्येवं संज्ञां नो निवेशयेत्, यतः-पल्योपमसागरोपमशताऽनुभवनीयं कर्म अन्तर्मुहूर्त्तेनैव क्षयमुपयातीत्यभ्युपगमात्तदुक्तं—*" जं अन्नाणी कम्मं, खवेइ बहुयाहिं वासकोडीहिं । तं नाणी तिहि गुत्तो, खवेइ ऊसासमित्तेणं ॥ १ ॥ " इत्यादि । क्षपकश्रेण्यां तु झटित्येव कर्मणो भस्मीकरणाद्यथाक्रमबद्धस्य चानुभवनाभावेन वेदनाया अभावः, तदभावान्निर्जराया अप्य

* यदज्ञानी कर्म क्षपयति बहुकाभिवर्षकोटीभिः । तज्ज्ञानी त्रिभिर्गुप्तः क्षपयत्युच्छ्वासमात्रेण ॥ १ ॥

भावः, इत्येव संज्ञां नो निवेशयेत् । किमिति ? यतः—कस्यचिदेव कर्म्मण एवमनन्तरोक्तया नीत्या क्षपणात्तपसा प्रदेशानुभवेन चापरस्य तूदयोदीरणाभ्यामनुभवनमित्यतोऽस्ति वेदना, आगमोऽप्येवम्भूत एव, तद्यथा—" × पुव्विं दुच्चिन्नाणं दुप्पडिकंताणं वेइत्ता मोक्खो, नत्थि अवेइत्ता " इत्यादि । वेदनासिद्धौ च निर्जराऽपि सिद्धैवेत्यतोऽस्तिवेदना निर्जरा चेत्येवं संज्ञा निवेशयेदिति गाथार्थः ॥ १८ ॥

वेदना निर्ज्जरा च क्रियाऽक्रियायत्ते, ततस्तद्भावं प्रतिषेधपूर्वकं दर्शयितुमाह—

**नत्थि किरिया अकिरिया वा, नेवं सन्नं निवेसए। अत्थि किरिया अकिरिया वा, एवं सन्नं निवेसए ॥१९॥**

व्याख्या—' क्रिया ' परिस्पन्दलक्षणा तद्विपर्यस्ता त्वक्रिया, ते द्वे अपि न स्तो—न विद्येते, इत्येवंविधां संज्ञां नो निवेशयेत्, यतः—शरीराऽत्मनोर्देशाद्देशान्तरावाप्तिनिमित्ता परिस्पन्दात्मिका क्रिया प्रत्यक्षेणैवोपलभ्यते, सर्वथा निष्क्रियत्वे चात्मनोऽभ्युपगम्यमाने गगनस्येव बन्धमोक्षाद्यभावः, स च दृष्टेष्टबाधितः, अपि चैकान्तेन क्रियाऽभावे संसारमोक्षाभावः स्यादित्यतोऽस्ति क्रिया तद्विपक्षभूता चाक्रियाऽप्यस्ति इत्येवंविधां संज्ञां निवेशयेदिति गाथार्थः ॥ १९ ॥

अथ सक्रिये आत्मनि सति क्रोधादिसद्भाव इत्येतद्दर्शयितुमाह—

**नत्थि कोहे व माणे वा, नेवं सन्नं निवेसए । अत्थि कोहे व माणे वा, एवं सन्नं निवेसए ॥ २० ॥**

× पूर्वं दुश्चीर्णाना दुष्प्रतिक्रान्ताना ( कर्मणा ) वेदयित्वा मोक्षो, नास्त्यवेदयित्वा ।

व्याख्या—स्वपरात्मनोरप्रीतिलक्षणः क्रोधः, स चानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनभेदेन चतुर्द्धाऽऽगमे पठ्यते, तथैतावद्भेद एव ' मानो ' गर्वः, तौ द्वावपि ' न स्तो ' न विद्येते, इत्येवं संज्ञां नो निवेशयेत् , यतः—कपायकर्म्मोदयवर्त्ती दष्टौष्ठः कृतभृकुटीभङ्गो रक्तवदनो गलत्स्वेदबिन्दुसमाकुलः क्रोधाध्मातः समुपलभ्यते, केषाञ्चिन्मतेन क्रोधो मानांश एवेत्येतदप्ययुक्तं, क्षपकश्रेण्यां तु भेदेन क्षपणात् क्रोधक्षये न मानस्य क्षयः, पृथक् पृथक् क्षयो द्वयोरपि, तदुभयस्य च नरसिंहव[द्व]स्त्वन्तरत्वादित्यनोऽस्ति क्रोधः, मानोऽप्यस्ति चेत्येवं संज्ञा निवेशयेदिति गाथार्थः ॥ २० ॥

**नत्थि माया व लोभे वा, नेवं सन्नं निवेसए । अत्थि माया व लोभे वा, एवं सन्नं निवेसए ॥ २१ ॥**

व्याख्या—अत्रापि प्राग्वन्मायालोभयोरभाववादिनं निराकृत्यास्तित्वं प्रतिपादनीयमिति ॥ २१ ॥

साम्प्रतमेषामेव क्रोधादीनां समासेनास्तित्वं प्रतिपादयन्नाह—

**नत्थि पेज्जे व दोसे वा, नेवं सन्नं निवेसए । अत्थि पेज्जे व दोसे वा, एवं सन्नं निवेसए ॥ २२ ॥**

व्याख्या—प्रीतिलक्षणं प्रेम, पुत्रकलत्रधनधान्याद्यात्मीयेषु रागस्तद्विपरीतस्त्वात्मीयोपघातकारिणि द्वेषस्तावेतौ द्वावपि न विद्येते इत्येवं सञ्ज्ञां नो निवेशयेत् । प्रेमाप्यस्ति द्वेषोऽप्यस्ति, यतः—" को दुःखं पाविज्जा ?, कस्स व सुक्खे हि विम्हओ हुज्जा ? । को व न लहिज्ज ? मुक्खं, रागद्दोसा जइ न हुज्जा ॥ १ ॥ तो बहुगुणनासाणं, समत्तचरित्तगुणविणासाणं । न हु वसमागंतव्वं, रागद्दोसाण पावाणं ॥ २ ॥" इत्यादिवचनप्रामाण्यान्न तदभावः,

अतः प्रेमाप्यस्ति द्वेषोऽप्यस्ति इत्येवं संज्ञां निवेशयेदिति गाथार्थः ॥ २२ ॥×

**नत्थि चाउरंते संसारे, नेवं सन्नं निवेसए । अत्थि चाउरंते संसारे, एवं सन्नं निवेसए ॥ २३ ॥**

व्याख्या—चत्वारोऽन्ता गतिभेदा नारकतिर्यङ्नरामरलक्षणा यस्य संसारस्यासौ चातुरन्तः, संसार एव कान्तारो भयैक-
हेतुत्वात्स चतुर्विधो न विद्यते, अपि तु सर्वेषां संसृतिरूपत्वात् कर्मबन्धात्मकतया च दुःखैकहेतुत्वादेकविध एव, अथवा
नारकदेवयोरनुपलभ्यमानत्वात्तिर्यङ्मनुष्ययोरेव सुखदुःखोत्कर्षतया तद्व्यवस्थानाद् द्विविधः संसारः, पर्यायनयाश्रयणात्वे-
कविधः, अतश्चातुर्विध्यं न कथञ्चिद्घटत इत्येवं नो संज्ञां निवेशयेत्, अपि त्वस्ति चातुरन्तः संसार इत्येवं संज्ञां निवेशयेत्।
यदुक्तमेकविधः संसारस्तन्न घटते, यतोऽध्यक्षेण तिर्यङ्मनुष्ययोर्भेदः समुपलभ्यते, तथा [ सम्भवानुमानेन ] नारकदेवा-
नामप्यस्तित्वाभ्युपगमात् [ द्वैविध्यमपि न विद्यते ], एवं चातुर्गतिक एव संसार इत्येवं संज्ञां निवेशयेदिति गाथार्थः ॥ २३ ॥

**नत्थि देवो व देवी वा, नेवं सन्नं निवेसए । अत्थि देवो व देवी वा, एवं सन्नं निवेसए ॥ २४ ॥**

व्याख्या—भवनपतिव्यन्तरज्योतिष्कवैमानिका देवा न सन्ति तथा देवाभावाद्देव्योऽपि न सन्ति इत्येवं संज्ञां नो

---

× इतोऽनन्तरं निम्नोद्धृतः श्लोकः सवृत्तिकः समुपलभ्यते हर्षकुलीयाया—" नत्थि रागे व दोसे वा, नेवं सन्नं निवेसए । अत्थि रागे व दोसे वा, एवं सन्नं निवेसए ॥ २३ ॥ दी०—रागद्वेषौ न स्तः इति न स्वीकार्यं, तौ विद्येते इति मतिः कार्या, युक्तिः पूर्वोक्ता । ( पुनरुक्त एवायम् )

निवेशयेत्, किन्तु देवा देव्यश्च सन्ति, अर्हतां पञ्चसु कल्याणकेषु समागमनदर्शनात् " जिणपंचसु कल्लाणएसु चेव महरिसितवाणुभावाओ । जम्मंतरनेहेण य, आगच्छंती सुरा इहयं ॥ १ ॥" अन्यथा नायान्ति, (यतः-) " चत्तारि पंच जोयण-सयाइं गंधो उ मणुयलोयस्स। उड्ढं वच्चइ जेणं, न हु देवा तेण आविंति ॥ १ ॥" तथा च ग्रहगृहीतवरप्रदानादिना च तदस्तित्वमनुमानेन साध्यते, अतो देवा देव्यश्च सन्तीत्येवं संज्ञां निवेशयेदिति गाथार्थः ॥ २४ ॥

**नत्थि सिद्धी असिद्धी वा, नेवं सन्नं निवेसए। अत्थि सिद्धी असिद्धी वा, एवं सन्नं निवेसए ॥ २५॥**

व्याख्या—अशेषकर्मक्षयलक्षणा सिद्धिस्तद्विपर्ययभूता चासिद्धिर्नास्तीत्येवं नो संज्ञां निवेशयेत्, अस्ति सिद्धिरित्येवं संज्ञां निवेशयेत् । सम्यग्ज्ञानदर्शनचारित्रात्मकस्य मोक्षमार्गस्य सद्भावात् कर्मक्षयस्य च पीडोपशमनादिना प्रत्यक्षेण-दर्शनात्, अतः कस्यचिदात्यन्तिककर्महानिसिद्धेरस्ति सिद्धिरिति गाथार्थः ॥ २५ ॥

**नत्थि सिद्धी नियं ठाणं, नेवं सन्नं निवेसए। अत्थि सिद्धी नियं ठाणं, एवं सन्नं निवेसए ॥ २६ ॥**

व्याख्या—सिद्धेरशेषकर्मक्षयलक्षणाया निज स्थानमीषत्प्राग्भाराख्यं व्यवहारतो, निश्चयतस्तु तदुपरि योजन[चतुर्थ]-क्रोशषड्भागः, तत्प्रतिपादकप्रमाणाभावात्स नास्तीत्येवं संज्ञां नो निवेशयेत्, किन्तु सिद्धानामवस्थानस्थानं सिद्धाश्च सन्तीत्येवं सञ्ज्ञां निवेशयेत्, यतः-अयोगिचरमसमये त्रयोदश प्रकृतीः " क्षयं नीत्वा स लोकान्तं, तत्रैव समये व्रजेत् । लब्धसिद्धत्वपर्यायः, परमेष्ठी सनातनः ॥ १ ॥ पूर्वप्रयोगतोऽसङ्ग-भावाद्बन्धविमोक्षतः । स्वभाव-

द्वितीये श्रुत० पञ्चमाध्ययने- देवादीनां सिद्ध्यादीनां चापलपनमनाचारः ।

परिणामाच्च, सिद्धस्योर्द्ध्वगतिर्भवेत् ॥ २ ॥ कुलालचक्रदोलेषु, मुष्याणां हि यथा गतिः । पूर्वप्रयोगतः सिद्धा, सिद्धस्योर्द्ध्वगतिस्तथा ॥ ३ ॥ मृल्लेपसङ्गनिर्मोक्षा–द्यथा दृष्टाऽऽश्वलाबुनः । पूर्वसङ्गविनिर्मोक्षा–त्तथा सिद्धिगतिः स्मृता ॥ ४ ॥ एरण्डफलबीजादे–र्बन्धच्छेदाद्यथा गतिः । कर्मबन्धनविच्छेदात्, सिद्धस्यापि तथा भवेत् ॥ ५ ॥ यथाऽधस्तिर्यगूर्द्ध्वं च, लोष्टवाय्वग्निवीचयः । स्वभावतः प्रवर्त्तन्ते, तथोर्द्ध्वगतिरात्मनः ॥ ६ ॥ न चाधो गौरवाभावा–न्न तिर्यक् प्रेरकं विना । न च धर्मास्तिकायस्या–भावाल्लोकोपरि व्रजेत् ॥ ७ ॥ मनोज्ञा सुरभिस्तन्वी, पुण्या परमभासुरा । प्राग्भारा नाम वसुधा, लोकमूर्ध्नि व्यवस्थिता ॥ ८ ॥ नृलोकतुल्यविष्कम्भा, सितच्छत्रनिभा शुभा । ऊर्द्ध्वं तस्याः क्षितेः सिद्धा, लोकान्ते समवस्थिताः ॥ ९ ॥ इसीपब्भाराए, उवरिं खलु जोयणंमि जो कोसो । कोसस्स य छब्भाए, सिद्धाणोगाहणा भणिया ॥ १० ॥" इति सिद्धानां स्थानम् । अथ सिद्धास्तु–" नो किण्हे नो नीले नो लोहिए नो हालिद्दे नो सुक्किल्ले नो सुरभिगंधे नो दुरभिगंधे नो तित्ते नो कडुए नो कसाए नो अंबिले नो महुरे ( नो लवणे )नो वट्टे नो तंसे नो चउरंसे नो परिमंडले नो दीहे नो हस्से नो गुरुए नो लहुए नो सीए नो उण्हे नो कक्खडे नो मउए नो इत्थी नो पुरिसे नो अन्नहा" एवं सिद्धाः लोकाग्रपदसंस्थिताः सदाऽव्ययाः अनन्ता अजरामराः सदाऽऽनन्दमया अवतिष्ठन्ते । एवं सिद्धास्तथा सिद्धानां च स्थानं विद्यते, एवं संज्ञां निवेशयेदिति गाथार्थः ॥ २६ ॥

नत्थि साहू असाहू वा, नेवं सन्नं निवेसए । अत्थि साहू असाहू वा, एवं सन्नं निवेसए ॥ २७ ॥

व्याख्या—'नास्ति' न विद्यते यथोक्तगुणोपेतः साधुस्तदभावाच्च तत्प्रतिपक्षभूतस्यासाधोरप्यभावः, यतः "केवलमणोहिचउदस-दसनवपुव्वीहिं संपयं रहिए। सुद्धमसुद्धं चरण, को जाणइ? कज्जभावं च ॥ १ ॥" इत्येवम्भूतां संज्ञां नो निवेशयेत् "कालाइदोसवसओ, कहवि दीसंति तारिसा न जइ। सव्वत्थ तहवि नत्थित्ति, नेव कुज्जा अणासासं ॥ १ ॥ कालोचियजयणाए, मच्छररहियाण उज्जमंताणं। जणजत्तारहियाणं, होइ जइत्तं जईण सया ॥ २ ॥ अन्नाणनिरंतरतिमिर-पूरपूरियंमि भवभवणे। को पयडइ? पयत्थे, जइ गुरुदीवा न दिप्पंति ॥ ३ ॥ पलए महागुणाणं, हवंति सेवारिहा लहुगुणा वि। अत्थमिए दिणनाहे, अहिलसइ जणो पईवं पि ॥ ४ ॥ अट्ठ गुणाणं मज्झे, इक्केण गुणेण संघपच्चक्खं। तित्थुन्नयं कुणंतो, जुगपवरो सो इहं नेओ ॥ ५ ॥ दुप्पसहंतं चरणं, जं भणियं भगवया इह खित्ते। आणाजुत्ताणं पुण, न होइ अहुणत्ति वामोहो ॥ ६ ॥" श्रीभगवत्यां-"केवइयं कालं तु देवाणुप्पियाणं तित्थे अणुसज्जिस्सइ?, गोयमा! इक्कवीसवाससहस्साइं ममं तित्थे अणुसज्जिस्सइ, तित्थं पुण चाउवण्णो समणसंघो-समणा समणीओ सावया सावियाओ" इत्यादिभगवद्वचनप्रामाण्यात्तीर्थं यावत् साधवः सन्ति तद्विपरीताश्चासाधवोऽपि सन्तीत्येवं संज्ञां निवेशयेदिति गाथार्थः ॥ २७ ॥

नत्थि कल्लाण पावे वा, नेवं सन्नं निवेसए। अत्थि कल्लाण पावे वा, एवं सन्नं निवेसए ॥ २८ ॥

व्याख्या—यथेष्टार्थफलसम्प्राप्तिः कल्याणं तन्न विद्यते× तथा पापं पापवान्वा न कश्चिद्विद्यते, तदेवमुभयोरप्यभावः, इत्येवं रूपां संज्ञां नो निवेशयेत्, यतः—कल्याणपापयोर्विना सुखी दुःखी सरोगी निरोगी सुरूपः कुरूपो दुर्भगः सुभगो धनी दरिद्रो मूर्खः पण्डितो वेत्यादिको जगद्वैचित्र्यभावोऽध्यक्षसिद्धोऽपि न स्यात्तस्मादस्ति कल्याणं पापं चेत्येवं संज्ञां निवेशयेदिति गाथार्थः ॥ २८ ॥

न चैकान्तेन[ कल्याणं ]कल्याणमेव, यतः—केवलिनां प्रक्षीणघनघातिकर्मचतुष्टयानां सातासातोदयसद्भावात्तथा नारकाणामपि पञ्चेन्द्रियत्वविशिष्टज्ञानादिसद्भावान्नैकान्तेन ते पापवन्त इति, तस्मात्कथञ्चित्कल्याणं कथञ्चित्पापमिति स्थितं। तदेवं कल्याणपापयोरनेकान्तरूपत्वं प्रसाध्य एकान्तं दूषयितुकाम आह—

**कल्लाणे पावए वा वि, ववहारो न विज्जई। जं वेरं तं न जाणंति, समणा बालपंडिया ॥ २९ ॥**

व्याख्या—सर्वथा कल्याणवानेवायं तथा पापवानेवायमित्येवम्भूतो व्यवहारो न विद्यते, एकान्तस्यार्थस्याभावात्, अनेकान्तवादस्यैवाश्रयणात्सर्ववस्तूनामनेकान्ताश्रयणेन[ प्राक् ]प्रसाधितत्वात्, एकान्तिको व्यवहारो न विद्यते कुत्रापि वस्तुविषये इति भावः। यः पुरुष एकान्तेन पुण्यवान् दृश्यते सोऽप्यन्त्यावस्थायां परिणामपरावर्त्ताद्दुर्गतौ प्रयाति यः पापी सोऽपि परिणामवशात्सुगतिगामी स्यात्, अत एकान्तवचनं न ब्रूयात्। तथा वैरं कर्मविरोधो वा वैरं, तद्येन च परोप-

× " तदभावे कल्याणवांश्च न कश्चिद्विद्यते " इति बृहद्वृत्तिः।

घातादिना एकान्तपक्षसमाश्रयणेन वा भवति, तत्ते 'श्रमणा'स्तीर्थिकाः 'बालाः' रागद्वेषकलिताः 'पण्डिता' अभिमानिनः शुष्कतर्कदर्पाध्माता न जानन्ति, परमार्थभूतस्याहिंसालक्षणस्य धर्मस्यानेकान्तपक्षस्य वाऽनाश्रयणात् । यदि वा यद्वैर तत्ते श्रमणा बालाः पण्डिता न जानन्तीत्येवं वाचं न निसृजेत्, तत्तेषां कोपोत्पत्तेः, यच्चैवम्भूतं वचस्तन्न वाच्यं, यतः—"+अप्पत्तियं जेण सिया, आसु कुप्पेज्ज वा परो। सव्वसो तं न भासिज्जा, भासं अहियगामिणिं ॥ १ ॥" इति गाथार्थः ॥ २९ ॥ अपरमपि वाक्संयममधिकृत्याह—

असेसं अक्खयं वा वि, सव्वदुक्खेति वा पुणो। वज्झा पाणा न वज्झत्ति, इति वायं न नीसिरे ॥ ३० ॥

व्याख्या—इह जगति सर्वेऽपि घटपटादयः पदार्था एकान्तेन नित्याः—शाश्वताः, सर्वं जगदकृतं नित्य एवं न ब्रूयात्, सर्वेषां पदार्थानां प्रतिसमयं चान्यथा भावदर्शनात्, सर्वथा क्षणिकमेवमपि न ब्रूयात् । तथा सर्वं जगद्दुःखात्मकमेवमपि न वदेत्, सुखात्मकस्यापि सम्यग्दर्शनादिभावेन दर्शनात्, यतः—"×तणसंथारनिसन्नोऽवि, मुणिवरो भट्ठरागमयमोहो । जं पावइ मुत्तिसुहं, कत्तो ? तं चक्कवट्टीवि ॥ १ ॥" इत्यादि, तथा वध्याश्चौरपारदारिकादयोऽवध्या वा, तत्कर्मानुमतिप्रसङ्गात् *, इत्येवम्भूतां वाचं स्वानुष्ठानपरायणः साधुः परव्यापारनिरपेक्षो न निसृजेत् । तथाहि—सिंहव्याघ्र

+ अप्रीतिकं यया स्यादाशु कुप्येद्वा परः । सर्वथा तां न भाषेत भाषामहितगामिनीम् ॥ १ ॥

× तृणसंस्तारकनिषण्णोऽपि मुनिवरो भ्रष्टरागमदमोहः । यत्प्राप्नोति मुक्तिसुखं कुतस्तच्चक्रवर्त्त्यपि ॥ १ ॥

* वध्यकथने हिंसादिकर्मणामवध्यकथने च चौर्यादिकर्मणाम् ।

मार्जारादीन् परसत्त्वव्यापादनपरायणान् दृष्ट्वा माध्यस्थ्यमवलम्बयेत्। तथाऽमी गवादयो वाह्या न वाह्या वा तथाऽमी वृक्षाश्छेद्या अछेद्या वा इत्यादिकं वचो न वाच्य साधुनेति गाथार्थः ॥ ३० ॥

अथायमपरो वाक्संयमप्रकारोऽन्तःकरणशुद्धिमाश्रितः प्रदर्श्यते—

**दीसंति समियाचारा, भिक्खुणो साहुजीविणो। एए मिच्छोवजीवित्ति, इति दिट्ठिं न धारए ॥ ३१ ॥**

व्याख्या—जगत्येके दृश्यन्ते ‘ सामियाचार ’[ त्ति समिताचाराः ]सिद्धान्तोक्ताचारे प्रवर्त्तमाना भिक्षवो दोषरहिताहारगवेषिणस्तथा साधुजीविनः, न कस्यचिदपराधविधायिनः, क्षान्ता दान्ता जितेन्द्रिया जितक्रोधा ईर्याशोधका युगमात्रान्तरदृष्टयः सत्यसन्धा दृढव्रताः परिपूतोदकपायिनो मौनिनः सदा तायिनो विविक्तैकान्तध्यानाध्यासिनोऽकौत्कुच्यास्तानेवम्भूतानवधार्यापि ‘ सरागा अपि वीतरागा इव चेष्टन्ते ’ इति मत्वा एते मिथ्योपजीविन इत्येवं दृष्टिं न धारयेत्–नैवम्भूतमध्यवसायं कुर्यान्नाप्येवम्भूतां वाचं निसृजेत्–यथैते मिथ्योपाचारप्रवृत्ता मायाविन इति, छद्मस्थेन ह्यर्वाग्दर्शिना एवम्भूतस्य निश्चयस्य कर्तुमशक्यत्वादित्यभिप्रायः, ते च स्वयूथ्या वा भवेयुस्तीर्थान्तरीया वा, तावुभावपि न वक्तव्यौ साधुनेति ॥३१॥ किञ्च—

**दक्खिणाए पडिलंभो, अत्थि वा नत्थि वा पुणो। न वियागरेज्ज मेहावी, संतिमग्गं च वूहए ॥ ३२ ॥**

व्याख्या—दानं दक्षिणा, तस्याः ‘ प्रतिलम्भः ’ प्राप्तिः, स दानलाभोऽस्माद्गृहस्थादेः सकाशादस्ति नास्ति वेत्येवं न व्यागृणीयात् ‘ मेधावी ’ मर्यादावान् स्वयूथ्यस्य तीर्थान्तरीयस्य वा एकान्तेन दानं–दाननिषेधं वा न कुर्यात्, तथाहि–

तद्दाननिषेधेऽन्तरायसम्भवः, तद्दानानुमतावप्यधिकरणोद्भवः, इत्यतोऽस्ति दानं न वेत्येकान्तेन न ब्रूयात् । कथं तर्हि ब्रूयात् ? इति दर्शयति–' शान्ति'र्मोक्ष[ स्तस्य ]मार्गस्तं ' उपबृंहयेत् ' वर्द्धयेत्, यथा मोक्षमार्गाभिवृद्धिर्भवति तथा वदेदित्यर्थः । एतावता यथा सावद्यं स्यात्तथा न वदेदिति गाथार्थः ॥ ३२ ॥

इच्चेएहिं ठाणेहिं, जिणदिट्ठेहिं संजए । धारयंते उ अप्पाणं, आमोक्खाए परिवएज्जासि त्तिबेमि ॥ ३३ ॥

बीयसुयखंधस्स अणायारनामं पंचमज्झयणं समत्तं ॥ ५ ॥

व्याख्या—इत्येतैरेकान्तनिषेधद्वारेणानेकान्तविधायिभिः स्थानैर्वाक्संयमप्रधानैः समस्ताध्ययनोक्तैः रागद्वेषरहितैर्जिनैः दृष्टैरुपलब्धैर्न स्वमतिविकल्पोत्थापितैः 'संयतः' संयमवानात्मान धारयन्, एभिः स्थानैरात्मानं वर्त्तयन् आमोक्षाय[अ]शेषकर्म्मक्षयार्थं 'परि' समन्तात्संयमानुष्ठाने 'व्रजेः' गच्छेस्त्वमिति विनेयस्योपदेशः । इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ।

इति श्रीपरमसुविहितखरतरगच्छविभूषणपाठकप्रवरश्रीमत्साधुरङ्गगणिवरसन्दृब्धायां श्रीसूत्रकृताङ्गदीपिकायां समाप्तमनाचारश्रुताख्यं पञ्चममध्ययनमिति ॥ ५ ॥



## अथ षष्ठमार्द्रकीयमध्ययनम् ।



उक्त पञ्चममध्ययनं, साम्प्रतं षष्ठमारभ्यते इदमार्द्रककुमाराध्ययनम् ।

अत्र आर्द्रककुमारोत्पत्तिः प्राग्भवस्वरूपप्रतिमादर्शनोत्पन्नजातिस्मरणादिकं सर्वं बृहट्टीकातोऽवसेयं, अत्र तु सूत्रार्थ एव प्रतन्यते, तथाहि—

पुरे कडं अद्द ! इमं सुणेह, एगंतचारी समणे पुरासी ।
से भिक्खुणो उवणेत्ता अणेगे, आइक्खतिण्हिं पुढो वित्थरेणं ॥ १ ॥

व्याख्या—यथा गोशालकेन समं वादोऽभूदार्द्रककुमारस्य तथाऽनेनाध्ययनेनोपदिश्यते, तं च राजपुत्रमार्द्रककुमारं प्रत्येकबुद्धं भगवत्समीपमागच्छन्तं गोशालकोऽब्रवीद्, यथा–भो आर्द्रक ! यदहं ब्रवीमि तच्छृणु, 'पुरा' पूर्वं यदनेन भवत्तीर्थकृता कृतं तच्चेदमिति दर्शयति–पुरा एकान्तप्रदेशचारी–श्रमणः पुराऽऽसीत्तपश्चरणोद्युक्तः, साम्प्रतं तूग्रैस्तपश्चरणैर्भग्नो मां विहाय देवादिमध्यगतोऽसौ धर्म्मं कथयति । बहून् भिक्षूनुपनीय–प्रभूतशिष्यपरिवारं कृत्वा भवद्विधानां मुग्धजनानामिदानीं धर्ममाचष्टे पृथक् पृथक् विस्तरेणेति गाथार्थः ॥ १ ॥

सा ऽऽजीविया पट्ठविताऽथिरेणं, सभागओ गणओ भिक्खुमज्झे ।
आइक्खमाणो बहुजन्नमत्थं, न संधयाती अवरेण पुव्वं ॥ २ ॥

व्याख्या—येयं बहुजनमध्यगतेन युष्मद्गुरुणा धर्मदेशना प्रारब्धा सा आजीविका प्रस्थापिता, एकाकी विहरन् पामरैः परिभूयत इति मत्वा महान् परिकरः कृतः, तदनेन दम्भप्रधानेन आजीविकार्थमिदमारब्धं अस्थिरेण, पूर्वमयं मया सार्द्धमेकाक्यन्तप्रान्ताशनेन शून्यारामदेवकुलादौ वृत्तिं कल्पितवान्, न च तथाभूतमनुष्ठानं सिकताकवलवन्निरास्वादं यावज्जीवं कर्तुमलं, अतो मां विहाय बहून् शिष्यान् प्रतार्य एवम्भूतेन स्फटाटोपेन विहरतीत्यतो अनवस्थितचित्तः, पूर्वचर्यापरित्यागेनापराचारममाश्रयणात् । 'सभागतः' पर्षदि व्यवस्थितः 'गणओ'त्ति 'गणशो' बहुशो भिक्षूणां मध्यगतो ( बहुजन्यमर्थं— ) बहुजनहितमर्थं कथयन् विहरति, एतच्चास्यानुष्ठानं [ पूर्वापर न सन्दधाति— ] पूर्वापरविरुद्धं, यदि साम्प्रतीयं वृत्तं प्राकारत्रयसिंहासनाशोकवृक्षभामण्डलछत्रचामरादिकं मोक्षाङ्गमभविष्यत्ततो या प्राक्तना चर्या क्लेशबहुलाऽनेन कृता सा क्लेशाय केवलं, अथ निर्जराहेतुका परमार्थभूता ततः साम्प्रतावस्था परप्रतारकत्वाद्दम्भकल्पा, ततः पूर्वोत्तरयोरनुष्ठानयोर्मौनव्रतधर्मदेशनयोः परस्परतो विरोध इति गाथार्थः ॥ २ ॥ अपि च—

एगंतमेवं अदुवावि इण्हिं, दोवण्णमन्नं न समेति जम्हा ।
पुव्विं च इण्हिं च अणागयं च, एगंतमेवं पडिसंधयाति ॥ ३ ॥

व्याख्या—यद्येकान्तचारित्वमेव शोभनं, पूर्वमाश्रितत्वात्ततः सर्वदाऽन्यनिरपेक्षैस्तदेव कर्त्तव्यं, अथ चेदं महापरिवारवृतं साधुतया मन्यसे ततस्तदेवादावप्याचरणीयमासीत्, अपि च द्वे अप्येते छायाऽऽतपवदत्यन्तविरोधिनी वृत्ते नैकत्र समवाय गच्छतः। तथा यदि मौनेन धर्म्मस्ततः किमियं महता प्रबन्धेन धर्म्मदेशना? अथानयैव धर्म्मस्ततः किमिति पूर्वं मौनव्रतमनेनाऽऽलम्बे?। तदेवं गोशालकेनोक्ते सत्यार्द्रकः श्लोकपश्चार्द्धेनोत्तरदानायाह—'पुव्विं चे'त्यादि, 'पूर्वं' पूर्वस्मिन् काले यन्मौनव्रतिकत्वं या चैकचर्या तच्छद्मस्थत्वाद् घातिकर्मचतुष्टयक्षयार्थं, साम्प्रत यद्धर्मदेशनादीनां दान तत्तीर्थकरनाम्नो वेदनार्थं "+तं च कहं वेइज्जइ? अगिलाए धम्मदेसणाईहिं" इति वचनात्, अपरासां चोच्चैर्गोत्रशुभायुर्नामादीना शुभप्रकृतीनां वेदनार्थमिति, यदिवा पूर्वं साम्प्रतं चानागते काले[च]रागद्वेषरहितत्वादेकत्वभावनाऽनतिक्रमणाच्चैकत्वमेवाशेषजनहितं धर्म्मं कथयन् सन्दधाति, न तस्य पूर्वोत्तरयोरवस्थयोराशंसारहितत्वाद्भेदोऽस्ति। यदुच्यते—पूर्वोत्तरयोरवस्थयोर्भेदस्तन्न किञ्चित् ॥ ३ ॥ अथ धर्म्मदेशनया श्रोतॄणां कश्चिदुपकारोऽपि स्यादत आह—

समिच्च लोयं तसथावराणं, खेमंकरे समणे माहणे वा।
आइक्खमाणो वि सहस्समज्झे, एगंतयं सारयई तहच्चे ॥ ४ ॥

व्याख्या—'समेत्य' ज्ञात्वा लोकं त्रसस्थावराणां जन्तूनां 'क्षेमं' शान्तिः—रक्षा, तत्करणशीलः क्षेमङ्करः श्रमणो

+ तच्च कथं वेद्यते? अग्लान्या धर्मदेशनादिभिः।

माहनो वा, स एवम्भूतो निर्ममो रागद्वेषरहितः प्राणिहितार्थं, न लाभपूजाख्यात्यर्थं, धर्ममाचक्षाणोऽपि प्राग्वच्छद्मस्थावस्थायां मौनव्रतिक इवोत्पन्नदिव्यज्ञानोऽपि देवासुरनरतिर्यक्महसमध्येऽपि व्यवस्थितः पङ्काधारपङ्कजवत्तद्दोषव्यासङ्गा-( संयोगा )भावान्ममत्वविरहादाशंसादोषविकलत्वादेकान्तमेव [ सारयति- ] साधयति । अस्य भगवतः पूर्वावस्थासाम्प्रतकालीनावस्थयोर्नास्त्यन्तरं, रागद्वेषाभावात् । तथा प्राग्वदर्चा-लेश्या शुक्लध्यानाख्या यस्य, अष्टमहाप्रातिहार्यैः पूज्यमानोऽपि नोच्छे[ नोत्से ]कं-गर्वं विदधाति, जितरागद्वेषत्वात् । तथा चोक्तं-" रागद्वेषौ विनिर्जित्य, किमरण्ये करिष्यसि ? । अथ नो निर्जितावेतौ, किमरण्ये करिष्यसि ? ॥ १ ॥ " तथा बाह्यमनङ्गमान्तरं कषायजयादिकं प्रधानं कारणमिति गाथार्थः ॥ ४ ॥

अथ भगावाननेकैर्लोकैः परिवृतोऽपि रागद्वेषाभावादेकान्तचार्येवासौ मन्तव्यः, निरीहः सन् धर्मं कथयन्नपि न दोषभागिति दर्शयति—

धम्मं कहंतस्स उ नत्थि दोसो, खंतस्स दंतस्स जिइंदियस्स ।
भासाइ दोसे य विवज्जगस्स, गुणे य भासाइ निसेवगस्स ॥ ५ ॥

व्याख्या—तस्य भगवतोऽपगतघनघातिकलङ्कस्योत्पन्नसकलपदार्थाविर्भावविज्ञानस्य जगदभ्युद्धरणप्रवृत्तस्यैकान्तपरहितकारिणः स्वकार्यनिरपेक्षस्य क्षान्तस्य दान्तस्य जितेन्द्रियस्य भाषादोषविवर्जकस्य कर्कशासभ्यवचोवर्जकस्य तथा

भाषाया ये गुणा हितमितदेशकालासन्दिग्धभाषणादयस्तन्निपेवकस्य मतो धर्म्मं कथयतोऽपि नास्ति दोषः, छद्मस्थस्य हि [बाहुल्येन] मौनमेव श्रेयः समुत्पन्नकेवलस्य हि भाषणमपि गुणायेति गाथार्थः ॥ ५ ॥

किम्भूतं धर्ममसौ कथयतीत्याह—

महव्वए पंच अणुव्वए य, तहेव पंचासव संवरे य ।
विरइं इहस्सामणियंमि पन्ने, लवावसक्की समणे त्तिबेमि ॥ ६ ॥

व्याख्या—पञ्चमहाव्रतानि तथा पञ्चैवाणुव्रतानि श्रावकानुद्दिश्य प्रज्ञापितवान्, तथा पञ्चाश्रवसंवरं च तथा सप्तदशप्रकारं संयमं च प्रतिपादितवान्, संयमवतो हि विरतिर्भवत्यतो विरतिं च प्रतिपादितवान्, च शब्दात्तत्फलभूतौ निर्जरामोक्षौ च कथितवान्। कथम्भूतः ? श्रामण्ये प्राप्तः प्राज्ञो वा एतत्प्रतिपादितवान्, कथम्भूतो ? 'लवावसक्की' लवं—कर्म्म, तस्मादवसर्प्पति, एवंविधः श्रमणस्तपस्वी, स्वयमेव हि भगवान् पञ्चमहाव्रतोपपन्न इन्द्रियनोइन्द्रियगुप्तो विरतो लवाव[ष्वष्क्की]मर्पी सन्, ततोऽन्येषामपि तथाभूतमुपदेशं दत्तवान्। तत आर्द्रककुमारवचनमाकर्ण्य गोशालकस्तत्प्रतिपक्षभूतमर्थं वक्तुकाम इदमाह—इत्येतद्वक्ष्यमाण यदहं ब्रवीमि तच्छृणु त्वमिति गाथार्थः ॥ ६ ॥ अथाह गोशालकः—

सीओदगं सेवउ बीयकायं, अहायकम्मं तह इत्थियाओ ।
एगंतचारिस्सिह अम्ह धम्मे, तवस्सिणो णाभिसमेति पावं ॥ ७ ॥

इमं वयं तु तुमं पाउकुवं, पावाइणो गरिहसि सव एव ।
पावाइणो पुढो किट्टयंता, सयं सयं दिट्ठि करिंति पाउ ॥ ११ ॥

व्याख्या—अहो आर्द्रकुमार ! 'इमां' पूर्वोक्तां वाचं 'प्रादुष्कुर्वन्' प्रकाशयन् सर्वान् प्रावादुकान् गर्हसि, यस्मात्सर्वेऽपि तीर्थिका बीजोदकादिभोजिनोऽपि संसारोच्छेदनाय प्रवर्त्तन्ते, ते तु भवता नाभ्युपगम्यन्ते, ते तु प्रावादुकाः पृथक् पृथक् स्वीयां स्वीयां दृष्टिं प्रत्येकं स्वदर्शनं कीर्त्तयन्तः 'प्रादुष्कुर्वन्ति' प्रकाशयन्ति, यदिवा श्लोकपश्चार्द्धमार्द्रककुमार आह—सर्वेऽपि प्रावादुका यथावस्थित स्वदर्शनं प्रादुष्कुर्वन्ति, तत्प्रामाण्याच्च वयमपि स्वदर्शनाविर्भावनं कुर्मः, तथाहि—अप्रासुकेन बीजोदकादिपरिभोगेन कर्मबन्ध एव केवलं, न संसारोच्छेदः, इतीदमस्मदीयं दर्शनं, एवं च व्यवस्थिते काऽत्र परनिन्दा ? को वाऽऽत्मोत्कर्ष ? इति गाथार्थः ॥ ११ ॥ किञ्च—

ते अन्नमन्नस्स तु गरहमाणा, अक्खंति भो समणा माहणा य ।
सतो य अत्थी असतो य णत्थी, गरहामो दिट्ठीं ण गरहामो किंचि ॥ १२ ॥

व्याख्या—'ते' प्रावादुकाः 'अन्योऽन्यस्य' परस्परेण तु स्वदर्शनस्थापनेन परदर्शनं गर्हमाणाः स्वदर्शनगुणान् कथयन्ति, ते श्रमणा ब्राह्मणाः स्वपक्षमेव समर्थयन्ति परकीयं च दूषयन्ति । तदेव पश्चार्द्धेन दर्शयति—स्वकीये पक्षे स्थाप्यमानेऽस्ति पुण्यं तत्कार्यं च स्वर्गापवर्गादिकमस्ति, 'असतः' पराभ्युपगमाच्च नास्ति पुण्यादिकमित्येवं सर्वेऽपि तीर्थिकाः

परस्परव्याघातेन प्रवृत्ताः, अतो वयमपि यथावस्थिततत्त्वप्ररूपणतो युक्तिविकलत्वादेकान्तदृष्टिं गर्हामो, नापरं किमपि गर्हामः, सत्ये उक्ते न काऽपि गर्हा ×, एकान्तवादं निराकुर्मः, न परवादिनो, रागद्वेषविरहान्न कमपि गर्हाम इति गाथार्थः ॥ १२ ॥

एतदेव स्पष्टतरमाह—

न किंचि रूवेणऽभिधारयामो, सदिट्ठिमग्गं तु करेमो पाउं ।
मग्गे इमे किट्टिए आरिएहिं, अणुत्तरे सप्पुरिसेहिं अंजू ॥ १३ ॥

व्याख्या—भो गोशालक ! वयं न कञ्चन श्रमणं ब्राह्मणं वा 'रूपेण' जुगुप्सिताङ्गोपाङ्गोद्घट्टनेन जात्यादिमर्मप्रकाशनेन[वा] गर्हामः, केवलं स्वदृष्टिमार्गं प्रादुष्कुर्मः—स्वदर्शनं प्रकाशयामः, अथवाऽन्यदर्शनप्ररूपितं मार्गं दर्शयामः, यथा—"ब्रह्मा लूनशिरा हरिर्दृशि सरुक् व्यालुप्तशिश्नो हरः, सूर्योऽप्युल्लिखितोऽनलोऽप्यखिलभुक् सोमः कलङ्काङ्कितः । स्वर्नाथोऽपि विसंस्थुलः खलु वपुःसंस्थैरुपस्थैः कृतः, सन्मार्गस्खलनाद्भवन्ति विपदः प्रायः प्रभूणामपि ॥ १ ॥" इत्यादि, एतच्च तैरेव स्वागमे पठ्यते, वयं तु श्रोतारः, परं न कस्याप्यपवादं कुर्मः । अयमस्मदीयो मार्गः 'अनुत्तरः' प्रधानः 'आर्यैः' सर्वज्ञैः [ कीर्तितः ] प्ररूपितः अत एव 'अंजू' इति व्यक्तो, निर्दोषत्वात्प्रकटः

---

× "नेत्रैर्निरीक्ष्य बिलकण्टककीटसर्पान्, सम्यग्यथा व्रजत तान्परिहृत्य सर्वान् ।
कुज्ञानकुश्रुतिकुमार्गकुदृष्टिदोषान्, सम्यग् वि(चा)रयत कोऽत्र परापवादः ? ॥ १ ॥" इति हर्ष०

[ ऋजुर्वा- ]अकुटिलः इति गाथार्थः ॥ १३ ॥ पुनरपि स्वधर्मप्ररूपणायाह—

उड्ढं अहेयं तिरियं दिसासु, तसा य जे थावर जे य पाणा ।
भूयाहिसंकाइ दुगुंछमाणा, णो गरहती बुसिमं किंचि लोए ॥ १४ ॥

व्याख्या—ऊर्द्ध्वाधस्तिर्यग्दिक्षु ये त्रसाः स्थावराश्च ये प्राणिनस्तेषां पालकः 'भूताभिशङ्कया' प्राण्युपमर्दशङ्कया सर्वं सावद्यमनुष्ठानं जुगुप्समानो नैवापरं लोकं कञ्चन 'गर्हते' निन्दति, कः ? 'बुसिमं'ति संयमवानिति, तदेवं रागद्वेषरहितस्य वस्तुस्वरूपाविर्भावने न काऽपि गर्हा भवति, तत्रापि चेद्गर्हा स्यात्तर्हि उष्णोऽग्निः शीतमुदकं विषं मारणात्मकमित्येवमादि न किञ्चिद्वस्तुस्वरूपमाविर्भावनीयमिति गाथार्थः ॥ १४ ॥

स एव गोशालकमतानुसारी त्रैराशिको निराकृतोऽपि पुनरन्येन प्रकारेणाह—

आगंतऽगारे आरामऽगारे, समणे उ भीते ण उवेति वासं ।
दक्खा हु संती बहवे मणूसा, ऊणातिरित्ता य लवालवा य ॥ १५ ॥

व्याख्या—भो आर्द्रकुमार ! भवत्सम्बन्धी योऽसौ तीर्थङ्कर स रागद्वेषभययुक्तः, तथाहि—असौ भवत्तीर्थकरः आगन्तागारं—कार्पटिकादीनां स्थानं धर्मशालाऽऽदिकं, आरामागारं उद्यानादिकं, तत्रासौ न वसति—न तत्र तिष्ठति भयेन । किं तत्र भयकारणं ? तत्र ह्यागन्तुकाः बहवो 'दक्षाः' प्रभूतशास्त्रविशारदाः मनुष्यास्तिष्ठन्ति, तद्भीतो न तत्र वासं कुरुते ।

यतस्ते स्वतोऽवमाः-हीना जात्या[दि]भिस्तैः पराजितस्य महांश्छायाभ्रंश इति भयेन न धर्मशालाऽऽदिषु वासं विधत्ते। कथम्भूतास्ते पण्डिताः ? लपन्तीति 'लपाः' वाचालाः घोषितानेकतर्कविचित्रदण्डकाः, तथा-न[? अ] लपा-मौनव्रतिका निष्ठितयोगाः गुटिकादियुक्ता वा, यद्वशात्परवादिनामभिधेयविषया वागेव न प्रवर्त्ते, ततस्तद्भयेन युष्मत्तीर्थकर आगन्तागारादौ न व्रजतीति गाथार्थः ॥ १५ ॥ पुनरपि गोशालक एवाह—

मेहाविणो सिक्खियबुद्धिमंता, सुत्तेहि अत्थेहि य निच्छयन्ना ।
पुच्छिंसु मा णे+ अणगार अन्ने, इति संकमाणो न उवेति तत्थ ॥ १६ ॥

व्याख्या—भो आर्द्रकुमार ! भवत्सम्बन्धी तीर्थकृत् एवं जानाति-यद्यहं धर्म्मशालादिषु स्थास्यामि तदा तत्र बहवो विशारदा मेधाविनो-ग्रहणधारणासमर्थाः, आचार्यादेः समीपे गृहीतशिक्षाः, तथौत्पत्त्यादिचतुर्विधबुद्ध्युपेताः, तथा सूत्रार्थविषये विनिश्चयज्ञाः-यथावस्थितसूत्रार्थवेदिनस्ते चैवम्भूताः सूत्रार्थविषयं मा प्रश्नं कार्षुरित्येवं शङ्कमान-स्तेभ्यो बिभ्यन् धर्म्मशालादिषु न तिष्ठति । अहं तैः पृष्टः सन्नुत्तरं दातुमसमर्थस्ततो मम छायाभ्रंशो भविष्यती भिया न तेषु मध्ये आयाति, तेभ्यो दूरत एव तिष्ठति, अत एवासौ न ऋजुमार्ग्गः, भययुक्तत्वात्तस्य, तथा म्लेच्छविषयं गत्वा न कदाचिद्धर्मदेशनां चकार, आर्यदेशेऽपि न सर्वत्रापि[ ? अपितु ]कुत्रचित्, अतो विषमदृष्टित्वाद्रागद्वेषवत्त्र्यसौ इति ॥ १६ ॥

+ 'णे' इति पादपूर्त्तावव्ययम् ।

[ एतद् ] गोशालकमतं परिहर्त्तुकाम आर्द्रक आह—

णोऽकामकिच्चा ण य बालकिच्चा, रायाभिओगेण कुओ भएणं ।
वियागरेज्जा पसिणं नवावि, स कामकिच्चेणिह आरियाणं ॥ १७ ॥

व्याख्या—भो गोशालक ! स हि भगवान् प्रेक्षापूर्वकारितया नाकामकृत्यो भवति, एतावता अनिच्छाकारी न भवति । यो ह्यविमृश्यकारितया भवति सोऽनिष्टमपि–स्वपरात्मनो निरर्थकमपि कृत्यं कुर्वीत, भगवाँस्तु सर्वज्ञः सर्वदर्शी परहितैकरतः [ कथं ] स्वपरयोर्निरुपकारकमेनं कुर्यात् ? तथा न चासौ बालकृत्यः–बालवदनालोचितकारी न पराऽनुरोधान्नाऽपि गौरवाद्धर्म्मदेशनादिकं विधत्ते, अपितु यदि कस्यचिद्भव्यसत्त्वस्योपकाराय तद्भाषितं भवति तेन प्रवृत्तिर्भवति, नान्यथा, तथा न राजाभियोगेनासौ धर्म्मदेशनादौ कथञ्चित्प्रवर्त्तते, ततः कुतस्तस्य भयेन प्रवृत्तिः ? स्यादित्येवं व्यवस्थिते केनचित् क्वचित्संशयकृत प्रश्न व्यागृणीयाद् यदि तस्योपकारो भवति, उपकारमन्तरेण न व्यागृणीयाद्, यदिवा अनुत्तरसुराणां मनःपर्यवज्ञानिनां च द्रव्यमनसैव तन्निर्णयसम्भवादतो न व्यागृणीयादित्युच्यते, यद्भवता कथ्यते–वीतरागोऽसौ किमिति धर्मकथां करोतीति ? चेदित्याशङ्कयाह—' स्वकामकृत्येन ' स्वेच्छा[चारि]कारितयाऽसावपि तीर्थकृन्नामकर्म्मणः क्षपणाय, न यथाकथञ्चिद्, अतोऽसावग्लान ' इह ' अस्मिन् संसारे आर्यक्षेत्रे चोपकारयोग्ये आर्य्याणामुपकाराय धर्म्मदेशनां व्यागृणीयादसाविति गाथार्थः ॥ १७ ॥ किञ्चान्यत्—

गंता व तत्था अदुवा अगंता, वियागरेज्जा समियासुपन्ने ।
अणारिया दंसणओ परित्ता, इति संकमाणो ण उवेति तत्थ ॥ १८ ॥

व्याख्या—स हि भगवान् परहितैकरतो गत्वाऽपि विनेयासन्नं, अथवाऽप्यगत्वा यथा यथा भव्यसत्त्वोपकारो भवति तथा तथाऽर्हन्तो धर्म्मदेशनां विदधति । उपकारे सति गत्वाऽपि कथयन्ति, असति तु स्थिता अपि न कथयन्त्यतो न तेषां रागद्वेषसम्भव इति । केवलमाशुप्रज्ञः समतया चक्रवर्त्तिद्रमकादिषु [पृष्टोऽ]पृष्टो वा धर्म्मं व्यागृणीयात् । "जहा पुण्णस्स कत्थइ, तहा तुच्छस्स कत्थइ" इति वचनान्न रागद्वेषवान्, यत्पुनरनार्यदेशमसौ न व्रजति तत्रेदमाह—अनार्य्याः दर्शनतोऽपि 'परि' समन्ता'दिता' गताः—प्रभ्रष्टा इति यावत्, तदेवमसौ भगवान् [तेषु] सम्यग्दर्शनमात्रमपि न भवतीत्याशङ्कमानस्तत्र न व्रजतीति । यदिवा विपरीतदर्शनाः—साम्प्रतेक्षिणो ह्यनार्य्यास्ते हि वर्तमानसुखमेवैकमङ्गीकृत्य प्रवर्त्तन्ते, न पारलोकिकमङ्गीकुर्वन्त्यतः मद्धर्मपराङ्मुखेषु तेषु भगवान्न याति, न पुनस्तद्द्वेषादिबुद्ध्येति । यदुच्यते त्वया—यथाऽनेकशास्त्रविशारदगुटिकादिसिद्धविद्यासिद्धादितीर्थिकपराभवभयेन न तत्समाजे गच्छतीत्येतदपि बालप्रलपितप्रायं, यतः—सर्वज्ञस्य भगवतः समस्तैः प्रावादुकैर्मुखमप्यवलोकयितुं न शक्यते, वादस्तु दूरोत्सादित एवेत्यतः कुतस्तत्पराभवः ? भगवाँस्तु केवलालोकेन यत्रैव स्वपरोपकारं पश्यति तत्रैव गत्वापि धर्म्मदेशनां विधत्ते इति गाथार्थः ॥ १८ ॥

पुनरन्येन प्रकारेण गोशालक आह—

पन्नं जहा वणिए उदयट्ठी, आयस्स हेउं पगरेति संगं ।
तओवमे समणे नायपुत्ते, इच्चेव मे होति मती वियक्का ॥ १९ ॥

व्याख्या—भो आर्द्रकुमार ! यथा कश्चिद्वणिक् 'उदयार्थी' लाभार्थी 'पण्यं' व्यवहारयोग्यं भाण्डं कर्पूरागुरुकस्तूरिकाऽम्बरादिकं गत्वा देशान्तरं विक्रीणाति, तथा 'आयस्य' लाभस्य 'हेतोः' कारणान्महाजनसङ्गं विधत्ते, तदुपमोऽयमपि भवत्तीर्थंकरः 'श्रमणो' ज्ञातपुत्रः इत्येवं मे मतिर्भवति वितर्को-मीमांसा वेति गाथार्थः ॥ १९ ॥

एवमुक्ते गोशालकेन आर्द्रक आह—

णवं ण कुज्जा विहुणे पुराणं, चिच्चाऽमइं ता[इ]य इ(?)साह एवं ।
प(त्ता)न्ना [एत्तो]वया बंभवतित्ति वुत्ता, तस्सोदयट्ठी समणे त्तिबेमि ॥ २० ॥

व्याख्या—भो गोशालक ! योऽयं वणिग्दृष्टान्तो दर्शितः, स किं सर्वतो देशतो वा सदृक्षः ? यदि देशतस्ततो न नः (अस्माकं) क्षतिमावहति, यतो वणिग्यत्रैव लाभं पश्यति तत्रैव क्रियां व्यापारयति, न यथाकथञ्चिदिति, एतावता साधर्म्यमस्त्येव । अथ सर्वसाधर्म्येण, तन्न युज्यते, यतो भगवान् विदितवेद्यतया सावद्यानुष्ठानरहितो नवं कर्म्म न कुर्य्यात्, तथा विधूनय-त्यपनयति पुरातनं यद्भवोपग्राहिकर्म्म बद्धं, तथा त्यक्त्वा 'अमतिं' विमतिं 'त्रायी' भगवान् 'तायी वा' मोक्षं प्रति गमनशीलो भवतीति, एतावता च सन्दर्भेण 'ब्रह्मणो' मोक्षस्य व्रतं ब्रह्मव्रतमित्येतदुक्तं, तस्मिश्चोक्ते तदर्थे च

अनुष्ठाने क्रियमाणे तस्योदयस्यार्थी—लाभार्थी श्रमण इति ब्रवीम्यहमिति ॥ २० ॥

न चैवम्भूता वणिज इति पुनरार्द्रकुमारो दर्शयितुमाह—

समारभंते वणिया भूयगामं, परिग्गहं चेव ममायमाणा ।
ते णातिसंजोगमविप्पहाय, आयस्स हेउं पकरेंति संगं ॥ २१ ॥

व्याख्या—ते हि वणिजश्चतुर्दशप्रकारमपि भूतग्रामं समारभन्ते, तदुपमर्दकाः क्रियाः प्रवर्त्तयन्ति क्रयविक्रयार्थं शकट वाहनोष्ट्रमण्डलिका( श्वाना )दिभिरनुष्ठानैरिति, तथा परिग्रहं द्विपदचतुष्पदादिकं ममीकुर्वन्ति, ते हि वणिजो ज्ञातिभिः सह संयोगं 'अविप्रहाय' अपरित्यज्य 'आयस्य' लाभस्य हेतोरपरेण सार्द्धं 'सङ्गं' सम्बन्धं कुर्वन्ति । भगवांस्तु-षड्जीव-रक्षापरोऽपरिग्रहस्त्यक्तस्वजनपक्षः सर्वत्राप्रतिबद्धो धर्माऽऽयमन्वेषयन् गत्वाऽपि धर्मदेशनां विधत्ते, अतो भगवतो वणिग्भिः सार्द्धं न सर्वसाधर्म्यमस्तीति गाथार्थः ॥ २१ ॥ पुनरपि वणिजां दोषमुद्भावयन्नाह—

वित्तेसिणो मेहुणसंपगाढा, ते भोयणट्ठा वणिया वयंति ।
वयं तु कामेहि अज्झोववन्ना, अणारिया पेमरसेसु गिद्धा ॥ २२ ॥

व्याख्या—वणिजो वित्तैषिणस्तथा 'मैथुने' स्त्रीसम्पर्के 'सम्प्रगाढा' अभ्युपपन्नास्तथा ते भोजनार्थ-माहारार्थं वणिज इतश्चेतश्च व्रजन्ति वदन्ति वा, तांस्तु वणिजो वयमेवं ब्रूमो-यथैते कामेष्वभ्युपपन्नाः-गृद्धाः, अनार्य्या रसेषु च साता-

गौरवादिषु 'गृद्धा' मूर्च्छिताः, न त्वेवम्भूता भगवन्तोऽर्हन्तः, कथं तेषां तैः सह साधर्म्यमिति दूरत एव निरस्तैषा कथेति गाथार्थः ॥ २२ ॥ किञ्च—

आरंभगं चेव परिग्गहं च, अविउस्सिया णिस्सिय आयदंडा ।
तेसिं च से उदए जं वयासी, चउरंतणंताय दुहाय णेह ॥ २३ ॥

व्याख्या—आरम्भं परिग्रहं च 'अव्युत्सृज्य' अपरित्यज्य तस्मिन्नेवारम्भे परिग्रहे च निश्चयेन 'सृता' बद्धा-निसृता वणिजो भवन्ति । तथा आत्मदण्डा असदाचारप्रवृत्तेरिति, भावोऽपि च तेषां वणिजां परिग्रहारम्भवतां स 'उदयो' लाभो यदर्थं ते प्रवृत्ताः यं च त्वं लाभं वदसि, स तेषां 'चतुरन्ता' चतुर्गतिको यः संसारोऽनन्तस्तस्मै-तदर्थं भवतीति, [तथा] दुःखाय च भवति । अतस्त्वमर्हतां वणिजां साम्यं मा कुर्विति गाथार्थः ॥ २३ ॥ एतदेव दर्शयितुमाह—

णेगंतिएऽणच्चंतिय उदए से, वयंति ते दो वि गुणोदयंमि ।
से उदए सातिमणंतपत्ते, तमुदयं साहयइ ताइ णाई ॥ २४ ॥

व्याख्या—अहो गोशालक ! स वणिजां लाभो नैकान्तिकः, लाभार्थं धावतामलाभोऽपि स्यात्, स तु लाभ आत्यन्तिकोऽपि न-अवश्य सर्वकालभाव्यपि न, कदाचित्स्यात् कदाचिन्नेति व्यापारविदो वदन्ति । तौ च द्वावपि भावौ विगतगुणोदयौ, किमुक्तं भवति ? किं तेनोदयेन-लाभेन ? यो नैकान्तिको नात्यन्तिकश्च अनर्थाय च प्रत्युत स्यात् । तथा

भगवतः सर्वज्ञस्य यो लाभः स केवलज्ञानप्राप्तिलक्षणो निर्जरारूप एव, न तु साद्यनन्तो लाभ इति, एवंविधलाभसहितो
भगवान् अन्येषामपि तादृग्विधमेव लाभं ददाति। कथम्भूतो भगवान्? त्रायी, आसन्नसिद्धिगमनानां त्राणकरणात्
तथा 'ज्ञाती' ज्ञातक्षत्रियवंशोद्भवः अथवा 'ज्ञाती' विदितसमस्तवेद्य इत्यर्थः। तदेवम्भूतेन भगवता तेषां वणिजां
निर्विवेकिनां कथं सर्वसाधर्म्यं? कथं वा तैः सह भगवतः उपमानं दीयत? इति गाथार्थः ॥ २४ ॥

साम्प्रतं देवकृतसमवसरणपद्मावलीदेवच्छन्दकसिंहासनादिकोपभोगं कुर्वन्नप्याधाकर्मकृतवसतिनिषेवकसाधुवत्कथं तदनुमतिकृतेन कर्मणाऽसौ न लिप्यत इत्येतद्गोशालकमतमाशङ्क्याह आर्द्रकुमारः—

अहिंसयं सव्वपयाणुकंपी, धम्मे ठितं कम्मविवेगहेउं।
तमायदंडेहिं समायरंता, अबोहीए ते पडिरूवमेयं ॥ २५ ॥

व्याख्या—भो गोशालक! असौ भगवान् समवसरणाद्युपभोगं कुर्वन्नप्यहिंसन्नुपभोगं करोति, एतदुक्तं भवति—न हि तत्र भगवतो मनागप्याशंसा प्रतिबन्धो वा विद्यते, समतृणमणिलोष्टुकाञ्चनतया तदुपभोगप्रवृत्तेर्देवाः प्रवचनप्रभावनाहेतोः सम्यक्त्वनिर्मलीकरणार्थमर्हद्भक्तिभाविताः सन्तः प्रवर्त्तन्ते, अतोऽसौ भगवानहिंसकः, तथा सर्वप्रजाऽनुकम्पकः। एवम्भूतं भगवन्तं धर्मे व्यवस्थितं कर्मविवेकहेतुभूतं भवद्विधा आत्मदण्डैः समाचरन्त आत्मकल्पं कुर्वन्ति वणिगादिभिरुदाहरणैरेतच्चाबोधे-रविज्ञानस्य प्रतिरूपं वर्त्तते। एकं तावदिदमज्ञानं—यत्स्वतः कुमार्गप्रवर्त्तनं द्वितीयं च यद्भगवतामपि जग-

द्वन्द्यानां सर्वातिशयनिधानभूतानामितरैः समत्वापादनमिति गाथार्थः ॥ २५ ॥

साम्प्रतमार्द्रकुमारमपहस्तितगोशालकं ततो भगवदभिमुखं गच्छन्तं दृष्ट्वाऽपान्तराले शाक्यपुत्रीया भिक्षव इदमूचुर्यदेत द्वणिग्दृष्टान्तं गोशालोक्तं त्वया दूषितं तच्छोभनं कृतं भवता, यतो बाह्यमनुष्ठानं शून्यप्रायं अन्तरङ्गमनुष्ठानमेव प्रधानं मोक्षाङ्गं ज्ञातव्यम् । अस्मत्सिद्धान्तेऽप्येनमेव व्यावर्ण्यते, भो आर्द्रककुमार ! त्व सावधानतया मदुक्तमवधारयेति भणित्वा ते भिक्षवः आन्तरानुष्ठानसमर्थकमात्मीयसिद्धान्ताविर्भावनायेदमाहुः ।

पिन्नागपिंडीमवि विद्धु सूले, केइ पएज्जा पुरिसे इमेत्ति ।
अलाउयं वावि कुमारएत्ति, स लिप्पती पाणिवहेण अम्हं ॥ २६ ॥

व्याख्या—'पिण्याकः' खलस्तस्य 'पिण्डि'मेकं खलशकलमचेतनमपि क्वापि स्थाने पतितं दृष्ट्वा तदुपरि केनचिन्नश्यता प्रावरण ( वस्त्रं ) खलोपरि प्रक्षिप्त, तच म्लेच्छेन केनाप्यन्वेष्टुं प्रवृत्तेन पुरुषोऽयमिति मत्वा खलपिण्ड्या सह गृहीतं, ततोऽसौ म्लेच्छो वस्त्रवेष्टितां तां खलपिण्डिं पुरुषबुद्ध्या शूले प्रोतां पावके पचेत्, तथा 'अलाबुकं' तुम्बकं कुमारकोऽयमिति मत्वा अग्नावेव पपाच, स चैव चित्तस्य दुष्टत्वात्प्राणिवधजनितेन पातकेन लिप्यते, अस्मत्सिद्धान्ते चित्तमूलत्वाच्छुभाशुभबन्धस्य, अशुभपरिणामेन बन्धः, अशुभचित्तप्रामाण्यादकुर्वन्नपि पाणातिपातं प्राणिघातफलेन युज्यत इति गाथार्थः ॥ २६ ॥

अमुमेव दृष्टान्तं वैपरीत्येनाह—

द्वितीये श्रुत० षष्ठाध्ययने, गोशालकोक्तवणिग्दृष्टान्तस्यासिद्धत्वम् ।

अहवा वि विद्धूण मिलक्खु सूले, पिन्नागबुद्धीइ नरं पएज्जा ।
कुमारगं वावि अलाउयंति, न लिप्पइ पाणिवहेण अम्हं ॥ २७ ॥

व्याख्या—अथवाऽपि सत्यपुरुषं खलबुद्ध्या कश्चिन्म्लेच्छः शूले प्रोतमग्नौ पचेत्, तथा कुमारकमलाबुबुद्ध्याऽग्नावेव-पचेत्, न चासौ प्राणिबधजनितेन पातकेन लिप्यतेऽस्माकमिति गाथार्थः ॥ २७ ॥ किञ्चान्यत्—

पुरिसं च विद्धूण कुमारगं वा, सूलंमि केइ पयए जायतेए ।
पिन्नायपिंडं सतिमारुहेत्ता, बुद्धाण तं कप्पति पारणाए ॥ २८ ॥

व्याख्या—पुरुषं वा कुमारकं वा शूले विद्धा कश्चित्पचेत् वह्नौ खलपिण्डीयमिति मत्वा 'सतीं' शोभनां, तदेतत् बुद्धानामपि पारणाय कल्पते–योग्यं भवति, किमुतापरेषाम् ? एव मनसा असङ्कल्पितं कर्म न लगतीति गाथार्थः ॥ २८ ॥

पुनः शाक्य एव दानफलमधिकृत्याह—

सिणायगाणं तु दुवे सहस्से, जे भोयए निति[णिय]ए भिक्खुयाणं ।
ते पुन्नखंधे सुमहज्जिणित्ता, भवंति आरोप्प महंतसत्ता ॥ २९ ॥

व्याख्या—स्नातका बौद्धमते प्रधाना दर्शनिनस्तेषां भिक्षुकाणां सहस्रद्वयं 'निजे' शाक्यपुत्रीये धर्म्मे व्यवस्थितः

कश्चिदुपासकः पचनपाचनाद्यपि कृत्वा भोजयेत् समांसगुडदाडिमेन इष्टेन भोजनेन, ते महासत्त्वाः पुरुषाः श्रद्धालवः पुण्यस्कन्धं [सु]महान्तं समावर्ज्य-अर्जयित्वा तेन च पुण्यस्कन्धेनाऽऽरोप्याख्या देवा भवन्ति, सर्वोत्तमां देवगतिं गच्छन्तीत्यर्थः ॥ २९ ॥

तदेवं बुद्धेन दानमूलः शीलमूलश्च धर्मः प्रवेदितः, तदेवा-गच्छ बौद्धसिद्धान्तं प्रपद्यस्वेत्येवं भिक्षुकैरभिहितः सन्नार्द्रकोऽनाकुलया दृष्ट्या तान् वीक्ष्योवाचेदं वक्ष्यमाणमित्याह—

अजोगरूवं इह संजयाणं, पावं तु पाणाण पसज्झ काउं ।
अबोहिए दोण्ह वि तं असाहू, वयंति जेआवि पडिस्सुणंति ॥ ३० ॥

व्याख्या—अहो शाक्यपुत्रीयाः ! 'इह' अस्मिन् भवदीये शाक्यमते 'संयतानां' भिक्षूणां यदुक्तं भोजनं तदयो-[ग्यरूप-मयो]ग्यं, तथाहि—अहिंसार्थमुत्थितस्य त्रिगुप्तिगुप्तस्य पञ्चसमितिसमितस्य सतः प्रव्रजितस्य सम्यग्ज्ञानपूर्विकां क्रियां कुर्वतो भावशुद्धिः फलवती भवति, तद्विपर्यस्तमतेस्त्वज्ञानावृतस्य महामोहाकुलीकृतान्तरात्मतया खलपुरुषयोरपि विवेकमजानतः कुतस्त्या भाव शुद्धिः ? अतोऽत्यन्तमयुक्तमेतद्बुद्धमतानुसारिणां यत्खलबुद्ध्या पुरुषस्य शूलप्रोतनपचनादिकं, तथा बुद्धस्य चाऽन्न[पिण्याक]बुद्ध्या पिशित(मांस)भक्षणानुमत्यादिकमित्येतदाह 'प्राणाना'मिन्द्रियादीनामपगमनेन तु पापमेव कृत्वा रससातगौरवादिगृद्धास्तदभावं व्यावर्णयन्ति, एतच्च तेषां पापाभावव्यावर्णनमबोध्यै—अबोधिलाभार्थं तयो-

द्वयोरपि सम्पद्यते अतोऽसाध्वेतत्, कयोर्द्वयोरित्याह–ये वदन्ति पिण्याकबुद्ध्या पुरुषशाकेऽपि पातकामात्रं ये च तेभ्यः श्रृण्वन्ति तयोर्द्वयोरपि वर्गयोरसाध्वेतदिति। अपिच–नाज्ञानावृतमूढजने भावशुद्ध्या शुद्धिर्भवति, यदि स्यात्संसारमोचकादीनामपि तर्हि कर्मविमोक्षः स्यात्, तथा भावशुद्धिमेव केवलामभ्युपगच्छतां भवतां शिरस्तुण्डमुण्डनपिण्डपातादिकं चैत्यकर्म्मादिकं चानुष्ठानमनर्थकमापद्यते, तस्मान्नैवंविधया भावशुद्ध्या शुद्धिरुपजायत इति स्थितमिति गाथार्थः ॥ ३० ॥

अथार्द्रकः स्वपक्षाविर्भावनायाह—

उड्ढं अहेयं तिरियं दिसासु, विन्नाय लिंगं तसथावराणं ।
भूयाभिसंकाइ दुगुंछमाणे, वदे करेज्जा वि कओ विहऽत्थि ॥ ३१ ॥

व्याख्या—ऊर्ध्वमधस्तिर्यक् सर्वासु दिक्षु त्रसानां स्थावराणां च लिङ्गं–चलनस्पन्दनाङ्कुरोद्भवच्छेदम्लानादिकं विज्ञाय भूताभिशङ्कया–जीवोपमर्दोऽत्र भविष्यतीत्येवं बुद्ध्या सर्वमनुष्ठानं जुगुप्समानस्तदुपमर्दं परिहरन् ' वदेत् ' धर्मं कथयेत्कुर्यादप्यतः कुतोऽस्तीहास्मिन्नेवम्भूतेऽनुष्ठाने क्रियमाणे प्रोच्यमाने वाऽस्मत्पक्षे युष्मदापादितो दोष इति गाथार्थः ॥ ३१ ॥

अथ खले पुरुषबुद्ध्या असम्भवमेव दर्शयितुमाह—

पुरिसेत्ति पिन्नंति [विन्नत्ति] न एय अत्थि, अणारिए से पुरिसे तहा हु ।
को संभवो ? पिन्नगपिंडियाए, वाया वि एसा बुइया असच्चा ॥ ३२ ॥

व्याख्या—तस्यां पिण्याकपिण्डयां पुरुषोऽयमित्येवं महामूर्खस्यापि [ विज्ञप्तिरेव नास्ति ] मतिरीदृशी न जायते, तथा खलेऽपि यः पुरुषमतिं मन्यते स अनार्य एवासौ यः पुरुषमेव खलोऽयमिति मत्वा हतेऽपि नास्ति दोषः इत्येवं वदेत्, तथाहि—कः सम्भवः ? पिण्याकपिण्डयां पुरुषबुद्धेरित्यतो वागपीयमसत्या, ईदृग्भाषाया भाषकोऽपि निर्विवेक अशुभं कर्म्म बध्नाति अनन्तं च संसारं रुलतीति गाथार्थः ॥ ३२ ॥ किञ्च—

वायाभिओएण जमावहेज्जा, णो तारिसं वायमुदाहरिज्जा ।
अट्ठाणमेयं वयणं गुणाणं, णो दिक्खिए बूय सुरालमेयं ॥ ३३ ॥

व्याख्या—वाचाऽभियोगो—वागभियोगस्तेनापि यस्मात्पापमावहेत्, अतो विवेकी—भाषागुणदोषज्ञो न तादृशीं 'वाचं' भाषामुदाहरेत्—न वदेत्। यत एवं ततोऽस्थानमेतद्वचनं गुणानां, अतो यः प्रव्रजितः [ उदारं—सुष्ठु परिस्थूर ] ईदृशमसारं वचनं न ब्रूयात्। तद्यथा—पिण्याकोऽपि पुरुषः पुरुषोऽपि पिण्याकः तथाऽलाबुकमेव बालको बालक एव अलाबुकमिति गाथार्थः ॥ ३३ ॥

साम्प्रतमार्द्रक एव तं भिक्षुकं युक्तिपराजितं सन्तं सोल्लुण्ठं बिभणिषुराह—

लद्धे (हु) अट्ठे अहो !! एव तुब्भे, जीवाणुभागे सुविचिंतिए य ।
पुव्वं समुद्दं अवरं च पुट्ठं, ओलोइए पाणितलट्ठिए वा ॥ ३४ ॥

व्याख्या—अहो भिक्षवः ! एवंविधाभ्युपगमे युष्माभिरेव लब्धः 'अर्थो' विज्ञानं यथावस्थितं तत्त्वमिति तथाऽवगतः सुचिन्तितो भवद्भिर्जीवानामनुभागः-कर्मविपाकस्तत्पीडा इति, तथा एवम्भूतेन विज्ञानेन भवतां यशः पूर्वं समुद्रमपरं समुद्रं च स्पृष्टं-गतमित्यर्थः, तथा भवद्भिरेवं[विध]विज्ञानावलोकेनावलोकितः पाणितलस्थित इवायं लोक इति अहो ! भवतां विज्ञानातिशयो !! यदुत-पिण्याकपुरुषयोरलाबुकबालकयोर्वा घाते[ पापस्य ]कर्म्मणो भावाभावं प्राक् कल्पितवन्तो भवन्त इति गाथार्थः ॥ ३४ ॥

अथार्द्रकः परपक्षं दूषयित्वा स्वपक्षस्थापनायाह—

जीवाणुभागं सुविचिंतयंता, आहारिया अन्नविहीइ सोहिं ।
न वियागरे छन्नपओपजीवी, एसोऽणुधम्मो इह संजयाणं ॥ ३५ ॥

व्याख्या—जिनशासनप्रतिपन्नाः [ सर्वज्ञोक्तमार्गानुसारिणो ] जीवानामनुभाग-मवस्थाविशेषं तदुपमर्देन पीडां वा सुष्ठु 'विचिन्तयन्तः' पर्यालोचयन्तः अन्नविधौ शुद्धिं 'आहृतवन्तः' स्वीकृतवन्तो द्विचत्वारिंशद्दोषरहितेन शुद्धेनाहारेणाहारं कृतवन्तो, नतु यथा भवतां पिशिताद्यपि पात्रपतितं न दोषायेति, एवंविधं वचोऽपि जैना महर्षयो न भाषन्ते । भवन्तः कीदृशाः ? छन्नपदोपजीविनः, हिंसास्थानोपजीविन इत्यर्थः, न तादृशा जैना मुनयः, तेषां हि मुनीनां निर्दोषाहारग्रहणेन षट्कायप्रतिपालनेन तीर्थङ्करानुयायी धर्म्मो ज्ञेय इति गाथार्थः ॥ ३५ ॥ पुनरार्द्रकुमारः कथयति—

सिणायगाणं तु दुवे सहस्से, जे भोयए निइ[निय]ए भिक्खुयाणं ।
असंजए लोहियपाणि से ऊ, नियच्छती गरिहमिहेव लोए ॥ ३६ ॥

व्याख्या—'स्नातकानां' बौद्धभिक्षूणां नित्यं यः सहस्रद्वयं भोजयेदित्युक्तं प्राक् तस्य यो लाभं वक्ति सोऽसंयतो 'लोहितपाणिः' रुधिरार्द्रपाणिरनार्य्य इव 'निन्दां' जुगुप्सापदवीं इहलोक एव निश्चयेन गच्छति परलोके चानार्यगम्यां गतिं गच्छति, एवं तावत्सावद्यानुष्ठानानुमन्तॄणामपात्रभूतानां यद्दानं तत्कर्म्मबन्धाय केवलं, न लाभायेति गाथार्थः ॥३६॥ किञ्च—

थूलं उरब्भं इह मारियाणं, उद्दिट्ठभत्तं च पगप्पइत्ता ।
तं लोणतेल्लेण उवक्खडित्ता, सपिप्पलीयं पगरंति मंसं ॥ ३७ ॥

व्याख्या—'स्थूलं' महाकाय-मुपचितमाँसशोणितं 'उरभ्र' ऊरणकं 'इह' शाक्यशासने भिक्षुकसङ्घोद्देशेन व्यापाद्य-घातयित्वा तथोद्दिष्टभक्तं च प्रकल्पयित्वा[विकर्त्य वा तं] उरभ्र तन्माँसं वा लवणतैलाभ्यामुपस्कृत्य-पाचयित्वा सपिप्पलीकं समरिचं अपरसँस्कारकद्रव्यसमन्वितं प्रकर्षेण भक्षणयोग्यं माँसं कुर्वन्तीति गाथार्थः ॥ ३७ ॥

सँस्कृत्य च यत्कुर्वन्ति तद्दर्शयितुमाह—

तं भुंजमाणा पिसितं पभूतं, नो उवलिप्पामो वयं रएणं ।
इच्चेवमाहंसु अणज्जधम्मा, अणारिया बाल रसेसु गिद्धा ॥ ३८ ॥

व्याख्या—'तत्' पिशितं शुक्रशोणितसम्भूतमनार्या इव भुञ्जाना अपि प्रभूतं तद्रजसा–पापेन कर्म्मणा न वयमुपलिप्यामहे इत्येवं धार्ष्ट्योपेताः प्रोचुरनार्या 'बाला' विवेकरहिताः 'रसेषु' मांसादिषु 'गृद्धाः' मूर्च्छिताः, इत्येतच्च तेषां महते अनर्थायेति गाथार्थः ॥ ३८ ॥ एतदेव दर्शयति—

जे यावि भुंजंति तहप्पगारं, सेवंति ते पावमजाणमाणा ।
मणं न एयं कुसला करिंती, वाया वि एसा बुइया उ मिच्छा ॥ ३९ ॥

व्याख्या—ये चापि रसगारवगृद्धाः शाक्योपदेशवर्त्तिनस्तथाप्रकारं स्थूलोरभ्रसम्भूतं घृतलवणमरिचादिसंस्कृतं पिशितं भुञ्जन्ते पापमजानानाः निर्विवेकिनः सेवन्ते* तदेवं महादोषं मांसभक्षणमिति मत्वा यद्विधेयं तद्दर्शयति–तदेवम्भूतं मांसाद-

---

* "यदुक्तं—हिंसामूलममेध्यमास्पदमलं ध्यानस्य रौद्रस्य य–द्वीभत्सं रुधिराविलं कृमिगृहं दुर्गन्धिपूयाविलम् । शुक्रासृक्प्रभवं नितान्तमलिनं सद्भिः सदा निन्दितं, को भुङ्क्ते ? नरकाय राक्षससमो मांसं तदात्मद्रुहः ॥ १ ॥ तथा–मां स भक्षयिताऽमुत्र, यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं, प्रवदन्ति मनीषिणः ॥ २ ॥ (तथा)–योऽत्ति यस्य च मांस–मुभयोः पश्यतान्तरम् । एकस्य क्षणिका तृप्ति–रन्यः प्राणैर्वियुज्यते ॥ ३ ॥" इति हर्ष०

नाभिलापरूपं मनो-ऽन्तःकरणं 'कुशला' निपुणा न कुर्वन्ति, महापापहेतुत्वा[त्तदभिलाषा]न्मनो निवर्त्तयन्ती त्यर्थः× । आस्तां भक्षणं वागप्येषा " न मांस भक्षणे दो+ष० " इत्यादिका वागप्युक्ता महते पातकायेति मत्वा वचोऽपि न वाच्यमिति गाथार्थः ॥ ३९ ॥ न केवलं मांसादनमेव त्याज्यमन्यदपि मुमुक्षूणां परिहर्त्तव्यमिति दर्शयितुमाह—

सव्वेसि जीवाण दयट्ठयाए, सावज्जदोसं परिवज्जयंता ।
तस्संकिणो इसिणो नायपुत्ता, उद्दिट्ठभत्तं परिवज्जयंति ॥ ४० ॥

व्याख्या—सर्वेषां जीवानां सुखाभिलाषिणां दुःखद्विषां, न केवलं पञ्चेन्द्रियाणामेवेति सर्व ग्रहणं, 'दयाऽर्थं' दयानिमित्तं सावद्यारम्भं महासदोष मत्वा तं परिवर्ज्जयन्तः [ तच्छङ्किनो-दोषशङ्किनः ] साधवो ज्ञातपुत्रीया महर्षयः 'उद्दिष्टं' साधुदानाय कल्पितं यद्भक्तपानादिकं, तत् परिवर्जयन्तीति गाथार्थः ॥ ४० ॥ किञ्च—

भूयाभिसंकाइ दुगुंछमाणा, सव्वेसि पाणाण निहाय दंडं ।
तम्हा ण भुंजंति तहप्पगारं, एसोऽणु धम्मो इह संजयाणं ॥ ४१ ॥

× " निवृत्तिस्तु महागुणाय, यदुक्त-श्रुत्वा दुःखपरम्परामतिघृणां मांसाशिना दुर्गतिं, ये कुर्वन्ति शुभोदयेन विरतिं मांसादनस्यादरात् । सद्दीर्घायुरदूषितं गदरुजा सम्भाव्य यास्यन्ति ते, मर्त्येषूद्भटभोगधर्ममतिषु स्वर्गापवर्गेषु च ॥ १ ॥" इति हर्ष० । + " षो, न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥ १ ॥ "

द्वितीये श्रुत० उद्दिष्टभक्तस्यापि वर्जनीयत्वं जैनश्रमणानाम् ।

व्याख्या—'भूताभिशङ्कया' भूतोपमर्दशङ्कया सावद्यमनुष्ठानं 'जुगुप्समानाः' परिहरन्तस्तथा सर्वेषां प्राणिनां 'दण्डः' समुपतापस्तं 'नि[धाय]हाय' त्यक्त्वा सम्यगुत्थानेनोत्थाय सत्साधवो यतयस्ततो न भुञ्जन्ते तथाप्रकारमशुद्र-जातीयमाहारमिति, एषोऽनुधर्म्मः इह प्रवचने संयताना–यतीनां तीर्थकराचरणादनु–पश्चादाचर्यते[इत्यनुना विशेष्यते], यथा तीर्थकरैर्निर्दोषाहारग्रहणं कृतं तथा तदनुसारिभिः साधुभिरपि तथैव विधेयं, यद्वाऽणुरिति स्तोकेनाप्यतिचारेण बाध्यते शिरीषपुष्पमिव सुकुमारोऽयं धर्म्म इति गाथार्थः ॥ ४१ ॥ किञ्चान्यत्—

निग्गंथधम्मंमि इमं समाहिं, अस्सिं सुठिच्चा अणिहे चरेज्जा ।

बुद्धे मुणी सीलगुणोववेए, अच्चत्थ[ओ]तं पाउणती सिलोगं ॥ ४२ ॥

व्याख्या—निर्ग्रन्थधर्म्मे–श्रुतचारित्ररूपे क्षान्त्यादिके वा सर्वज्ञोक्ते व्यवस्थितः 'इमं' पूर्वोक्तं समाधिमनुप्राप्तोऽस्मिंश्चा–शुद्धाहारपरिहाररूपे समाधौ सुस्थि[ता]नः 'अनिहो' मायारहितोऽस्नेहो वा साधुः संयमानुष्ठानं चरेत्, तथा बुद्धो–ऽवगततत्त्वो 'मुनिः' कालत्रयवेदी, तथा शीलेन क्रोधाद्युपशमरूपेण गुणैश्च–मूलोत्तरगुणभूतैरुपेतो–युक्तः इत्येवं गुण कलितोऽत्यर्थं सतोषात्मिकां 'श्लाघा' प्रशंसां लोके लोकोत्तरे चावाप्नोति, तथा चोक्तम्–"राजानं तृणतुल्यमेव मनुते शक्रेऽपि नैवादरः, वित्तोपार्जनरक्षणव्ययकृताः प्राप्नोति नो वेदनाः। संसारान्तरवर्त्त्यपीह लभते शं मुक्तवन्निर्भयः, सन्तोषात्पुरुषोऽमृतत्वमचिराद्यायात्सुरेन्द्रार्चितः ॥ १ ॥" इत्यादि ॥ ४२ ॥

तदेवमार्द्रककुमारं निराकृतगोशालकाजीवकबौद्धमतमभिसमीक्ष्य साम्प्रतं द्विजातयः प्रोचुस्तद्यथा—भो आर्द्रककुमार ! शोभनमकारि भवता यदेते वेदबाह्ये द्वे अपि मते निरस्ते, तत्साम्प्रतमेतदप्यार्हतं वेदबाह्यमेवातस्तदपि नाश्रयणार्हं भवद्विधानां, तथाहि—भवान् क्षत्रियः, क्षत्रियाणां च सर्ववर्णोत्तमा ब्राह्मणा एवोपास्याः, न शूद्राः, अतो यागादिविधिना ब्राह्मणसेवैव युक्तिमतीत्येतत्प्रतिपादयन्नाह—

सिणायगाणं तु दुवे सहस्से, जे भोयए णि[यए]तिए माहणाणं ।
ते पुन्नखंधं सुमहऽज्जणित्ता, भवंति देवा इति वेयवाओ ॥ ४३ ॥

व्याख्या—षट्कर्माभिरताः वेदाध्यापकाः शौचाचारपरतया नित्यस्नायिनो ब्रह्मचारिणो द्विजाः स्नातका उच्यन्ते, तेषां नित्यं सहस्रद्वयं ये भोजयेयुः कामिकाहारेण, ते समुपार्जितपुण्यस्कन्धाः सन्तो देवाः स्वर्गनिवासिनो भवन्तीत्येवम्भूतो वेदवाद इति गाथार्थः ॥ ४३ ॥ अथार्द्रक एतद्दूषयितुमाह—

सिणायगाणं तु दुवे सहस्से, जे भोयए णि[यए]तिए कुलालयाणं ।
से गच्छति लोलुयसंपगाढे, तिव्वाहितावी णरगाभिसेवी ॥ ४४ ॥

व्याख्या—स्नातकानां सहस्रद्वयमपि नित्यं ये भोजयन्ति, किम्भूतानां ? 'कुलालयाः' मार्जारास्तत्सदृशाः द्विजाः-ज्ञातव्याः, यतः—सावद्याहारवाञ्छया सर्वदा सर्वगृहेषु मार्जारा इव भ्रमन्ति, एवंविधानां निन्द्यजीविकाजीवनानां सहस्र-

द्वयं यो भोजयेत्सोऽसत्पात्रनिक्षिप्तदानस्तैः स्नातकैर्ब्राह्मणैः सह नरके बहुवेदने [गच्छति] एतावता त्रयस्त्रिंशत्सागरायुर्नारको जायते इति गाथार्थः ॥ ४४ ॥ अपि च—

दयावरं धम्म दुगुंछमाणे, वहावहं धम्म पसंसमाणे ।
एगंपि जे भोजयाति असीलं, णिवो णिसं जाति कओऽसुरेहिं ? ॥ ४५ ॥

व्याख्या—[दयया वर]दयावरं धर्मं 'जुगुप्समानो' निन्दन् तथा 'वधात्मकं' प्राण्युपमर्दात्मकं धर्मं प्रशंसन् एकमपि 'अशीलं' विरतिरहितं षट्कायोपमर्दन यो भोजयेत्, एकमपि, किम्पुनः प्रभूतान् ? 'नृपो' राजाऽन्यो वा यः कश्चिन्मूढमतिधार्मिकमात्मानं मन्यमानः, स वराको निशेव नित्यान्धकारत्वान्निशा–नरकभूमिस्तां याति, कुतस्तस्यासुरेष्वप्यधमदेवेषु प्राप्तिरिति गाथार्थः ॥ ४५ ॥

तदेवमार्द्रकुमारं निराकृतब्राह्मणवादं भगवदन्तिकं गच्छन्तं दृष्ट्वा एकदण्डिनोऽन्तराल एवोचुस्तद्यथा—भो आर्द्रककुमार ! शोभनं कृतं भवता, यदेते सर्वारम्भप्रवृत्ता गृहस्थाः शब्दादिविषयपरायणा मांसाशिनो राक्षसकल्पा द्विजातयो निराकृताः, साम्प्रतमस्मत्सिद्धान्तं शृणु, श्रुत्वा चावधारय, अस्मत्सिद्धान्तभवत्सिद्धान्तयोर्न कोऽपि भेदोऽस्ति, इत्येतद्दर्शयितुमाह—

दुहओ वि धम्मंमि समुट्ठियामो, अस्सिं सुठिच्चा तह एसकालं ।
आयारसीले वुइएऽह णाणे, ण संपरायम्मि विसेसमत्थि ॥ ४६ ॥

व्याख्या—योऽयमस्मद्धर्मो भवदीयश्चार्हतः स उभयरूपोऽपि कथञ्चित्सदृशः, यतः युष्माकं मते जीवास्तित्वे पुण्यपापबन्धमोक्षानामपि सद्भावः, अस्माकमपीत्थमेवाऽस्ति । अस्माकमपि पञ्च यमाः अहिंसाद्याः, भवतां च त एव पञ्च महाव्रतरूपाः, तथेन्द्रियनोइन्द्रियनियमोऽप्यावयोस्तुल्य एव, तदेवमुभयस्मिन्नपि धर्मे बहुसमाने सम्यगुत्थानोत्थिता यूयं वयं च तस्माद्धर्मे सुष्ठु स्थिताः, पूर्वस्मिन्काले वर्तमाने एष्ये च यथागृहीतप्रतिज्ञानिर्वोढारो, न पुनरन्ये, यथाव्रतेश्चत्यागविधानेन प्रव्रज्यां मुक्तवन्तो मुञ्चन्ति मोक्ष्यन्ति चेति, तथाऽऽचारप्रधानं शीलमुक्तं यमनियमलक्षणं, न फल्गुकल्ककुहकाजीवनरूपं, अथानन्तर ज्ञान च मोक्षाङ्गतयाऽभिहितं, तच्च श्रुतज्ञानं केवलाख्यं च, यथास्वमार्गोदर्शने प्रसिद्धं, तथा प्राणिनो यत्र स्वकर्मभिर्भ्राम्यन्ते स 'सम्परायः' संसारस्तस्मिन्नावयोर्न विशेषोऽस्तीति गाथार्थः ॥ ४६ ॥

पुनरप्येकदण्डिनः प्रोचुः—

अव्वत्तरूवं पुरिसं महंतं, सणातणं अक्खयमव्वयं च ।
सव्वेसु भूतेसु वि सव्वतो सो, चंदो व ताराहि समत्तरूवे ॥ ४७ ॥

व्याख्या—'पुरुषं' जीवं यथा भवन्तोऽभ्युपगतवन्तस्तथा वयमपि, कथम्भूतं जीवं ? अमूर्तत्वादव्यक्तरूप करचरणशिरोग्रीवाद्यवयवतया न लक्ष्यते, तथा 'महान्तं' लोकव्यापिनं तथा 'सनातनं' शाश्वतं–द्रव्यार्थतया नित्यं, नानाविधगतिसम्भवेऽपि चैतन्यलक्षणात्मस्वरूपस्याप्रच्युतेस्तथा'ऽक्षतं' केनचित्प्रदेशानां खण्डशः कर्तुमशक्यत्वात्तथा'ऽव्ययं'

अनन्तेनापि कालेनैकस्यापि प्रदेशस्य व्ययाभावात्, तथा सर्वेष्वपि भूतेषु कायाकारपरिणतेषु प्रतिशरीरं 'सर्वतः' सामस्त्यान्निरंशत्वादसावात्मा सम्भवति, किमि[? क इ]व ? 'चन्द्र इव' शशीव, ताराभिरश्विन्यादिभिर्नक्षत्रैर्यथा 'समस्तरूपः' सम्पूर्णः सम्बन्धमुपयात्येवमसावप्यात्मा प्रत्येकं शरीरैः सह सम्पूर्णः सम्बन्धमुपयाति । तदेवमेकदण्डिभिर्दर्शनसाम्यापादनेन सामवादपूर्वकं स्वदर्शनारोपणार्थमार्द्रककुमारोऽभिहितो, यत्रैतानि सम्पूर्णानि निरूपचरितानि पूर्वोक्तानि विशेषणानि धर्मसंसारयोर्विद्यन्ते स एव पक्षः सश्रुतिकेन समाश्रयितव्यो भवति, एतानि चास्मदीय एव दर्शने यथोक्तानि सन्ति, नाऽर्हते, अतो भवताप्यस्मदीयमेव दर्शनमभ्युपगन्तव्यमिति गाथार्थः ॥ ४७ ॥

अथार्द्रककुमारस्तदुत्तरदानायाह—

एवं ण मिज्जंति न संसरंति, न माहणा खत्तिय वेस पेसा ।
कीडा य पक्खी य सरीसिवा य, नरा य सव्वे तह देवलोगा ॥ ४८ ॥

व्याख्या—यदिवा प्राक्तनः श्लोकः 'अव्वत्तरूव'मित्यादिको वेदान्तवाद्यात्माऽद्वैतमतेन व्याख्यातव्यस्तथाहि-ते एकमेवाव्यक्तं पुरुषमात्मानं महान्तमाकाशमिव सर्वव्यापिनं सनातन[मनन्त]मक्षयमव्ययं सर्वेष्वपि भूतेषु 'सर्वतः' सर्वात्मतयाऽसौ स्थित इत्येवमभ्युपगतवन्तो, यथा सर्वास्वपि तारास्वेक एव चन्द्रः सम्बन्धमुपयात्येवमसावपीति, अस्य चोत्तरदानायाह—'एव'मित्यादि-यथा भवतां दर्शने एकान्तेनैव नित्योऽविकारी चात्माऽभ्युपगम्यते इत्येवं पदार्थाः

सर्वेऽपि नित्यास्तथा च सति कुतो बन्धमोक्षसद्भावः ? बन्धाभावाच्च न नारकतिर्यङ्नरामरलक्षणश्चतुर्गतिकः संसारो, मोक्षाभावाच्च निरर्थकं व्रतग्रहणं भवतां पञ्चरात्रोपदिष्टयमनियमप्रतिपत्तिश्च, एवं च यदुच्यते भवता–यथा 'आवयोस्तुल्यो धर्म्म' इति तदयुक्तमुक्तं, यतो न कथञ्चिदावयोः साम्यं, किञ्च–सर्वव्यापित्वे सत्यात्मनो विकारित्वे चात्माद्वैते चाभ्युपगम्यमाने नरकतिर्यङ्नरामरभेदेन बालकुमारसुभगदुर्भगाढ्यदरिद्रादिभेदेन वा न मीयेरन्–न परिच्छिद्येरन्, नापि स्वकर्मप्रेरिता नानागतिषु संसरन्ति, सर्वव्यापित्वादेकत्वाद्वा, तथा न ब्राह्मणा न क्षत्रिया न वैश्या न प्रेष्या न शूद्रा नापि कीटपक्षिसरीसृपाश्च भवेयुः, तथा नराश्च सर्वेऽपि देवलोकाश्चेत्येवं नानागतिभेदेन न भिद्येरन्, अतो न सर्वव्याप्यात्मा तथा नाप्यात्माऽद्वैतवादो ज्यायान्, यतः प्रत्येकं सुखदुःखानुभवः समुपलभ्यते, तथा शरीरत्वक्पर्यन्तमात्र एवात्मा, तत्रैव तद्गुणविज्ञानोपलब्धेरिति स्थितं, तदेवं व्यवस्थिते युष्मदागमो यथार्थाभिधायी न भवति, असर्वज्ञप्रणीतत्वाद्, असर्वज्ञप्रणीतत्वं चैकान्तपक्षसमाश्रयणादिति ॥ ४८ ॥ एवमसर्वज्ञस्य मार्गोद्भावने दोषमाविर्भावयन्नाह—

लोयं अजाणित्तिह केवलेणं, कहंति जे धम्ममजाणमाणा ।
णासंति अप्पाण परं च नट्ठा, संसारघोरम्मि अणोरपारे ॥ ४९ ॥

व्याख्या—लोकं चतुर्दशरज्ज्वात्मकं चराचरं वा लोकमज्ञात्वा 'केवलेन' दिव्यज्ञानावभासेन 'इह' अस्मिन् जगति ये तीर्थिका 'अजानाना' अविद्वांसो धर्मं दुर्गतिगमनमार्गार्गलाभूतं 'कथयन्ति' प्रतिपादयन्ति ते स्वतो नष्टा

अपरानपि नाशयन्ति, क ? 'घोरे' भयानके संसारसागरे 'अणोरपारे' अर्वाग्भागपरभागविवर्जिते अनाद्यनन्ते, इत्येवम्भूते संसारार्णवे आत्मानं प्रक्षिपन्तीति गाथार्थः ॥ ४९ ॥

साम्प्रतं सम्यग्ज्ञानवतामुपदेष्टॄणां गुणानाविर्भावयन्नाह—

लोयं विजाणंतिह केवलेणं, पुन्नेण नाणेण समाहिजुत्ता ।
धम्मं समत्तं च कहंति जे उ, तारंति अप्पाण परं च तिण्णा ॥ ५० ॥

व्याख्या—लोकं चतुर्दशरज्ज्वात्मकं केवलालोकेन केवलिनो विविध-मनेकप्रकारं जानन्ति, इह जगति प्रकर्षेण जानाति प्रज्ञः पुण्यहेतुत्वाद्वा पुण्यं, तेन तथाभूतेन ज्ञानेन समाधिना च युक्ताः समस्तं धर्मं श्रुतचारित्ररूपं ये तु परहितैषिणः 'कथयन्ति' प्रतिपादयन्ति ते महापुरुषाः स्वतः संसारसागरं तीर्णाः पर च तारयन्ति सदुपदेशदानत इति, यथादेशकः—सम्यग्मार्गज्ञ आत्मानं पर च तदुपदेशवर्त्तिनं महाकान्ताराद्विवक्षितदेशप्रापणेन निस्तारयति, एवं केवलिनोऽप्यात्मानं परं च संसारकान्तारान्निस्तारयन्तीति गाथार्थः ॥ ५० ॥ पुनरप्यार्द्रकुमार एवमाह—

जे गरहियं ठाणमिहावसंति, जे यावि लोए चरणोववेया ।
उदाहडं तं तु समं मतीए, अहाउसो विप्परियासमेव ॥ ५१ ॥

व्याख्या—असर्वज्ञप्ररूपणमेवम्भूतं भवति, तद्यथा—ये केचित्संसारान्तर्वर्त्तिनोऽशुभकर्मणोपपेताः—समन्विताः 'गर्हितं'

निन्दितं जुगुप्सितं निर्विवेकिजनाचरितं स्थानं कर्मानुष्ठानरूपं 'इह' जगति आ[रमन्ति]सेवन्ति आजीविकाहेतुमाश्रयन्ति, ये च सदुपदेशवार्त्तिनोऽस्मिंल्लोके 'चरणेन' विरतिपरिणामरूपेणोपेताः-समन्वितास्तेषामुभयेषामपि यदनुष्ठानं [शोभना] शोभनरूपमपि तदसर्वज्ञैः 'सम' तुल्यं 'उदाहृतं' उपन्यस्तं 'स्वमतया' स्वाभिप्रायेण भो एकदण्डिन् ! तं विपरीतमतिं [एव] जानीहि, सम्यग्धर्मासम्यग्धर्मयोः कथं साम्यं स्यादिति गाथार्थः ॥ ५१ ॥ तदेवमेकदण्डिनो निराकृत्यार्द्रककुमारो यावद्भगवदन्तिकं व्रजति तावद्धस्तितापसाः परिवृत्य तस्थुरिदं च प्रोचुरित्याह—

संवच्छरेणावि य एगमेगं, बाणेण मारेउ महागयं तु ।
सेसाण जीवाण दयट्ठयाए, वासं वयं वित्ति पकप्पयामो ॥ ५२ ॥

व्याख्या—हस्तिनं व्यापाद्यात्मनो वृत्तिं कल्पयन्तीति हस्तितापसास्तेषां मध्ये कश्चिद्वृद्धतम एतदुवाच, तद्यथा—भो आर्द्रकुमार ! सश्रुतिकेनाल्पबहुत्वमालोचनीयं, तत्र येऽमी तापसाः कन्दमूलफलाशिनस्ते बहूनां सत्त्वानां स्थावराणां तदाश्रितानां चोदुम्बरादिषु जङ्गमानामुपघाते वर्त्तन्ते, येऽपि च भैक्ष्येणात्मानं वर्त्तयन्ति तेऽप्याशंसादोषदूषिता इतश्चेतश्चाटाट्यमानाः पिपीलिकादिजन्तूनामुपघाते वर्त्तन्ते, वयं च संवत्सरेण अपिशब्दात् षण्मासेन चैकैकं हस्तिनं महाकायं बाणप्रहारेण व्यापाद्य शेषसत्त्वानां दयार्थमात्मनो वृत्तिं [ वर्षमेकं यावत् ] कल्पयामः । तदेवं वयमल्पसत्त्वोपघातेन प्रभूततरसत्त्वानां रक्षां कुर्म इति गाथार्थः ॥ ५२ ॥ साम्प्रतमेतदार्द्रकुमारो हस्तितापसमतं दूषयितुमाह—

संवच्छरेणावि य एगमेगं, पाणं हणंता अणिअत्तदोसा ।
सेसाण जीवाण वहेण लग्गा, सिया य थोवं गिहिणो वि तम्हा ॥ ५३ ॥

व्याख्या—संवत्सरेणैकैकं प्राणिनं घ्नन्तोऽपि प्राणातिपातादनिवृत्तदोषास्ते भवन्ति, एतावता धर्म्मबुद्ध्या शेषजीवरक्षार्थमेकैकं प्राणिन घ्नतामपि प्राणिवधो लगत्येव, आशंसादोषश्च भवतां पञ्चेन्द्रियमहाकायमत्त्ववधपरायणानामतिदुष्टो भवति, साधूनां सूर्यरश्मिप्रकाशितवीथिषु युगमात्रदृष्ट्या गच्छतामीर्या[ समिति ]समितानां द्विचत्वारिंशद्दोष- [ रहित ] माहारमन्वेषयतां लाभालाभसमवृत्तीना कुत आशंसादोषः ? पिपीलिकादिसत्त्वोपघातो वा ? तथा ( यदि ) स्तोकसत्त्वोपघातेन दोषाभावोऽभ्युपगम्यते तदा गृहस्था अपि आजीविकार्थमारम्भं कुर्वन्तः स्वक्षेत्रे आरम्भं कुर्वन्ति, न परत्र क्वापि, तेऽपि स्तोकजीववधकारिणोऽपरसर्वजन्तूनां क्षेत्रकालव्यवहितानां रक्षणाद् गृहिणोऽपि निर्दोषा एव, स्तोकजीववधकारिणः प्रभूतसत्त्वरक्षकाः, ततस्तेऽपि भवदभिप्रायेण गृहस्था अपि दोषरहिता एवेति गाथार्थः ॥ ५३ ॥

साम्प्रतमार्द्रकुमारो हस्तितापसान् दूषयित्वा तदुपदेष्टार दूषयितुमाह—

संवच्छरेणावि य एगमेगं, पाणं वहंता समणव्वतेसु ।
आयाहिते से पुरिसे अणज्जे, नो तारिसे केवलिणो भवंति ॥ ५४ ॥

व्याख्या—भो हस्तितापसाः! भवन्मते श्रमणव्रते व्यवस्थिताः सन्तः एकैकं संवत्सरेणापि ये घ्नन्ति ये चोपदिशन्ति

ते अनार्य्या, असत्कर्म्मानुष्ठायित्वात्, तथा आत्मनः परेषां चाहितास्ते पुरुषाः केवलिनो न भवन्ति, तथा एकस्य प्राणिनः संवत्सरेणापि घाते येऽन्ये पिशिताश्रितास्तत्संस्कारे च क्रियमाणे स्थावरजङ्गमा विनश्यन्ति ते तैः प्राणिघातोपदेशकैर्न दृष्टा, न च तैर्निरवद्योपायो माधुकर्या वृत्त्या यो भवति स दृष्टः, अतस्ते न केवलमकेवलिनो विशिष्टविवेकरहिताश्चेति। तदेवं हस्तितापसान्निराकृत्य भगवदन्तिकं गच्छन्तमार्द्रकुमारं महता कलकलेन लोकेनाभिष्टूयमानं तं समुपलभ्याभिनवगृहीतः सर्वलक्षणसम्पूर्णो वनहस्ती समुत्पन्नतथाविधविवेकोऽचिन्तयत्, यथा-अयमार्द्रकुमारोऽपाकृताशेषतीर्थिको निष्प्रत्यूहं सर्वज्ञपादपद्मान्तिकं वन्दनाय व्रजति, ततोऽहमपि यद्यपगताशेषबन्धनः स्यां तत एनं महापुरुषमार्द्रकुमारं प्रद्भुतस्करपञ्च-शतोपेत तथा प्रबोधितानेकवादिगणसमन्वित परमया भक्त्यैतदन्तिकं गत्वा वन्दामीत्येवं यावदसौ हस्ती कृतमङ्गल-स्तावत्तत्टत्(टदितिशु)टितसमस्तबन्धनः सन्नार्द्रकुमारं प्रति प्रदत्तकर्णतालस्तथोर्द्ध्वप्रसारितदीर्घकरः प्रधावितः, तदनन्तरं लोकेन कृतहाहारवगर्भकलकलेन पूत्कृतं, यथा-धिक्कष्टं ! हतोऽयमार्द्रकुमारो महर्षिर्महापुरुषस्तदेवं प्रलपन्तो लोका इतश्चे-तश्च प्रपलानाः, असावपि वनहस्ती समागत्यार्द्रककुमारसमीप भक्तिसम्भ्रमावनतायता(ग्रभा)गोत्तमाङ्गो निभृतकर्ण-तालश्चिःप्रदक्षिणीकृत्य निहितधरणीतलदन्ताग्रभागः स्पृष्टकराग्रतचरणयुगलः सुप्रणिहितमनाः प्रणिपत्य महर्षिं वना-भिमुखं ययाविति । तदेवमार्द्रकुमारतपोऽनुभावाद्बन्धनान्मुक्तं महागजमुपलभ्य सपौरजनपदः श्रेणिकराजस्तमार्द्र-कुमारं महर्षिं तत्तपःप्रभावं चाभिनन्द्य अभिवन्द्य च प्रोवाच-भगवन् ! आश्चर्यमिदं यदसौ वनहस्ती तादृग्विधाच्छृङ्खलाबन्धनाद्गुणमत्तपःप्रभावान्मुक्त इत्येतदतिदुष्करमित्येवमभिहिते आर्द्रकुमारः प्रत्याह-भो श्रेणिकमहाराज !

नैतदुष्करं यदसौ वनहस्ती बन्धनान्मुक्त, अपि त्वेतद्दुष्करं यत्स्नेहपाशमोचनं। एतच्च प्राग्निर्युक्तिगाथया दर्शितम्, सा चेयं– "+न दुक्करं वा णरपासमोयणं, गयस्स मत्तस्स वणंमि रायं। जहा उ वत्तावलिएण तंतुणा, सुदुक्करं मे पडिहाइ मोयणं ॥ १ ॥" एवमार्द्रकुमारो राजानं प्रतिबोध्य भगवदन्तिकं गत्वाऽभिवन्द्य च भगवन्तं भक्तिभरनिर्भर आसाञ्चक्रे। भगवानपि तानि पञ्चापि शतानि प्रव्राज्य तच्छिष्यत्वेनोपनिन्ये इति गाथार्थः ॥ ५४ ॥

साम्प्रतं समस्ताध्ययनोपसंहारार्थमाह—

बुद्धस्स आणाइ इमं समाहिं, अस्सिं सुठिच्चा तिविहेण ताई।
तरिउं समुद्दं च महाभवोघं, आयाण वंधं समुदाहरिज्जा त्ति बेमि ॥ ५५ ॥

अद्दइज्जं छट्ठं अज्झयणं समत्तं।

व्याख्या—'बुद्ध' अवगततत्त्वः सर्वज्ञो वर्द्धमानस्वामी, तस्याज्ञया–तदागमेनेमं समाधिं सद्धर्मावाप्तिलक्षणमवाप्या-स्मिंश्च समाधौ सुष्ठु स्थित्वा मनोवाक्कायैश्च प्रणिहितेन्द्रियः स एवम्भूतः आत्मनः परेषां च 'त्रायी' त्राणशीलस्तायी वा

+ "न दुष्करमेतद्यन्नरपाशैर्बद्धमत्तवारणस्य विमोचनं वने राजन्!। एतत्तु मे प्रतिभाति दुष्करं यच्च तत्रावलितेन तन्तुना मम प्रतिमोचनमिति" बृहद्वृत्ति।

गमनशीलो मोक्षं प्रति, स एवम्भूतस्तरीतुमतिलङ्घ्य समुद्रमिव दुस्तरं महाभवौघं मोक्षार्थमादीयत इत्यादानं—सम्यग्दर्शन-ज्ञानचारित्ररूपं, तद्विद्यते यस्यासावादानवान् साधुः, स च सम्यग्दर्शनेन सता परतीर्थिकृतपरसमृद्धिदर्शनेन मौनीन्द्रदर्शनान्न प्रच्यवते, सम्यग्ज्ञानेन तु यथावस्थितवस्तुप्ररूपणतः समस्तप्रावादुकवादनिराकरणेनापरेषां यथावस्थितमोक्षमार्गमाविर्भावयतीति, सम्यक्चारित्रेण तु समस्तभूतग्रामहितैषितया निरुद्धाश्रवद्वारः संस्तपोविशेषाच्चानेकभवोपार्जितं कर्म निर्जरयति स्वतोऽन्येषां चैवं प्रकारमेव धर्ममुदाहरेद्व्यागृणीयादाविर्भावयेदित्यर्थः ॥ ५५ ॥ इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ।

इति श्रीपरमसुविहितखरतरगच्छविभूषणपाठकप्रवरश्रीमत्साधुरङ्गगणिसन्दृब्धायां श्रीसूत्रकृताङ्गदीपिकायां समाप्तश्चेदमार्द्रकुमाराध्ययनं षष्ठमिति ।

## अथ सप्तमं नालन्दीयाख्यमध्ययनम् ।



व्याख्यातं षष्ठमध्ययनं, साम्प्रतं सप्तमं नालन्दीयाख्यं समारभ्यते अस्य चायमभिसम्बन्धः—

इह द्वितीयाऽङ्गे प्राक्तनेषु सर्वेष्वप्यध्ययनेषु स्वसमयपरसमयप्ररूपणाद्वारेण प्रायः साधूनामाचारोऽभिहितोऽनेन तु श्रावकगतो विधिरुच्यते, यदिवाऽनन्तराध्ययने परवादिनिराकरणं कृत्वा साध्वाचारस्य य उपदेष्टा स उदाहरणद्वारेण प्रदर्शितः, इह तु श्रावकधर्मस्य य उपदेष्टा स उदाहरणद्वारेण प्रदर्श्यते, यदिवाऽनन्तराध्ययने परतीर्थिकैः सह वाद इह तु स्वयूथ्यैरित्यनेन सम्बन्धेनायातमिदमध्ययनं प्रारभ्यते, तथाहि—

ते णं काले णं ते णं समए णं रायगिहे नामं नगरे होत्था, रिद्धित्थिमियसमिद्धे वण्णओ जाव पडिरूवे । तस्स णं रायगिहस्स नगरस्स बहिया उत्तरपुरच्छिमे दिसीभाए, एत्थ णं नालंदा-नामं बाहिरिया होत्था, अणेगभवणसयसंनिविट्ठा जाव पडिरूवा [ सू० १ ]

व्याख्या—सुगमं, नवर नालन्दा-इति नाम्ना पाटकविशेषः समभूत् ।

तत्थ णं नालंदाए बाहिरियाए लेवे नामं गाहावई होत्था । अड्ढे दित्ते वित्ते जाव

+अपरिभूए । से णं लेवे नामं गाहावई समणोवासए आवि होत्था । अभिगयजीवाजीवे जाव विहरइ । ×[निग्गंथे पावयणे निस्संकिए निक्कंखिए निव्वितिगिच्छे लद्धट्ठे गहियट्ठे पुच्छियट्ठे विणिच्छियट्ठे अभिगहियट्ठे अट्ठिमिंजापेमाणुरागरत्ते, अयमाउसो ! निग्गंथे पावयणे अयं अट्ठे अयं परमट्ठे सेसे अणट्ठे, उस्सियफलिहे अप्पाव(अवंगु)यदुवारे चियत्तंतेउरप्पवेसे चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासीणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणे समणे निग्गंथे तहाविहेणं एसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणे बहूहिं सीलवयगुणविरमणपच्चक्खाणपोसहोववासेहिं अप्पाणं भावेमाणे एवं च णं विहरइ ॥ सू० २ ]

तस्स णं लेवस्स गाहावइस्स तीए नालंदाए बाहिरियाए उत्तरपुरच्छिमे दिसीभाए एत्थ णं

+ 'जाव' इत्यत्र "विच्छिन्नविपुलभवणसयणासणजाणवाहणाइण्णे बहुधणबहुजायरूवरजते आओगपओगसंपउत्ते विच्छड्डियपउरभत्तपाणे बहुदासीदासगोमहिसगवेलगप्पभूते बहुजणस्स" इति पाठः प्रत्यंतरे ।

×[ ] एतच्चिह्नान्तर्गतः पाठो नास्ति सर्वेष्वपि दीपिकादर्शेषु ।

सेसदवियानामं उदगसाला होत्था। अणेगखंभसयसंनिविट्ठा पासादीया जाव पडिरूवा, तीसे णं सेसदवियाए उदगसालाए उत्तरपुरच्छिमे दिसीभाए एत्थ णं हत्थिजामे नामं वणसंडे होत्था, किण्हे वण्णओ वणसंडस्स [ सू० ३ ]

व्याख्या—शेषद्रव्याभिधाना-गृहोपयुक्तशेषद्रव्येण कृता, एवंविधा 'उदकशाला' पानीयशाला 'तस्य' लेपस्य गाथापतेरासीत्।

तस्सिं च णं गिहपदेसंसि भयवं गोयमे विहरति, भगवं च णं अहे आरामंसि। अहे णं उदए पेढालपुत्ते[भगवं]पासावच्चिज्जे नियंठे मेतज्जे गोत्तेणं, जेणेव भगवं गोयमे तेणेव उवागच्छाति, उवागच्छित्ता भयवं गोयमं एवं वयासी–

व्याख्या—सुगमैवेति। भगवान् श्रीगौतमः साधुभिः परिवृतस्तस्मिन् वनषण्डे स्थित आसीत्। स उदको गौतमस्वामिसमीपं समागत्य भगवन्तमेवमवादीत्—

आउसंतो गोयमा! अत्थि खलु मे केइ पएसे पुच्छियव्वे, तं च मे आउसो! अहासुयं अहादरिसियं मे वियागरेज्जाहि सवायं। भयवं गोयमे उदयं पेढालपुत्तं एवं वयासी–अवियाइं

आउसो ! सोच्चा निसम्म जाणिस्सामो । सवायं उदए पेढालपुत्ते भगवं गोयमं एवं वयासी—

व्याख्या—आयुष्मन् गौतम ! 'अस्ति' विद्यते मम कश्चित्प्रदेशः-प्रश्नः प्रष्टव्यः, तत्र सन्देहात्, तं च प्रदेशं मम यथाश्रुतं भवता यथा च भगवता सन्दर्शितं तथैव मम-'व्यागृणीहि' प्रतिपादय एवं पृष्टः, स चायं भगवान् सवादं वा शोभनभारतीकं वा प्रश्नं पृष्टस्तमुदकं पेढालपुत्रमेवमवादीत्तद्यथा—अपि चायुष्मन्नुदक ! 'श्रुत्वा' भवदीयं प्रश्नं निशम्य-चावधार्य च गुणदोषविचारणतः सम्यगहं ज्ञास्ये । तदुच्यतां विश्रब्धं भवता स्वाभिप्रायः । सवादमुद(कः)पः पेढालपुत्रो भगवन्तं गौतममेवमवादीत्तद्यथा—

आउसो गोयमा ! अत्थि खलु कुमारपुत्तिया नामं समणा निग्गंथा तुम्हाणं पवयणं पवयमाणा गाहावतिं समणोवासगं उवसंपन्नं एवं पच्चक्खावेंति—णण्णत्थ अभिओएणं, गाहावती चोरग्गहणविमोक्खणताए तसेहिं पाणेहिं निहाय दंडं । एवं ण्हं पच्चक्खंताणं दुप्पच्चक्खायं भवइ । एवं ण्हं पच्चक्खावेमाणाणं दुप्पच्चक्खावियं भवइ । एवं ते परं पच्चक्खावेमाणा अतियरंति सयं पतिण्णं, कस्स णं तं हेउं ? ।

व्याख्या—भो गौतम ! अस्तीति-विद्यन्ते सन्ति कुमारपुत्रा नाम निर्ग्रन्था युष्मदीयं प्रवचनं प्रवदन्तस्तद्यथा-गृहपतिं

श्रमणोपासकमुपसम्पन्नं–नियमायोत्थितमेवं ‘ प्रत्याख्यापयन्ति ’ प्रत्याख्यानं कारयन्ति–स्थूलेषु प्राणिषु ‘ दण्डं ’ विनाशं परित्यज्य प्राणातिपातनिवृत्तिं कुर्व्वन्ति, एतावता स्थूलप्राणातिपातनिवृत्तिं कुर्वन्ति, अन्यत्र राजाद्यभियोगेन यः प्राण्युपघातो न तत्र निवृत्तिरिति, राजाद्यभियोगं विना स्थूलप्राणिवधनिवृत्तिः परमन्येषां स्थूलव्यतिरिक्तानां प्राणिना वधानुमतिप्रत्ययो दोषः स्यात्। एतावता त्रसप्राणिवधनिवृत्तौ कृतायामन्येषां प्राणिनामनुमतिदोषो लगतीति भाव, इत्याश[ङ्कावानाह]ङ्कां ज्ञात्वा प्राह—

[‘ गाहावई ’ इत्यादि, ] अस्य चार्थमुत्तरत्राविर्भावयिष्यामः–अग्रे कथयिष्यामः। ‘ एवं ह्व ’मित्यादि, एवमेव त्रसप्राणिविशेष[ण]त्वेनापरत्रसभूतविशेषणरहितत्वेन प्रत्याख्यानं गृह्णतां श्रावकाणां दुष्प्रत्याख्यातं भवति, प्रत्याख्यानभङ्गसद्भावात्, प्रत्याख्यापयितामपि साधूनां दुष्टं प्रत्याख्यानदानं भवति, किमिति ? अत आह—एवं ते साधवः प्रत्याख्यानं कारयन्तः श्रावकाश्च प्रत्याख्यानं गृह्णन्तः स्वां प्रतिज्ञामतिचरन्ति–अतिलङ्घयन्ति, एवं कुर्वतामेवं च कारयतां प्रत्याख्यानं भज्यते। ‘ कस्स णं तं हेउं ’ केन कारणेन प्रतिज्ञामतिचरन्ति–प्रतिज्ञाभङ्गो भवति ? उद(क)य उवाच—

**संसारिया खलु पाणा, थावरा वि पाणा तसत्ताए पच्चायंति, तसा वि पाणा थावरत्ताए पच्चायंति, थावरकायाओ विप्पमुच्चमाणा तसकायंसि उववज्जंति तसकायाओ विप्पमुच्चमाणा थावरकायंसि उववज्जंति। तेसिं च णं थावरकायंसि उववन्नाणं ठाणमेयं घत्तं। [ सू० ४ ]**

व्याख्या—सांसारिकाः खलु 'प्राणा' जन्तवः स्थावराश्च पञ्चापि प्राणिनः सन्तोऽपि तथाविधकर्मोदयात् 'त्रसतया' त्रसत्वेन 'प्रत्यायान्ति' उत्पद्यन्ते, तथा त्रसा अपि स्थावरतयोत्पद्यन्ते, एवं च परस्परगमने व्यवस्थिते सत्यनवश्यम्भावी प्रतिज्ञाविलोपस्तथाहि–नागरिको मया न हन्तव्य एवम्भूता प्रतिज्ञा येन गृहीता स यदा बहिरारामादौ व्यवस्थितं नागरिकं व्यापादयेत् किमेतावता तस्य न भवेत्प्रतिज्ञालोपः ? एवमत्रापि येन त्रसवधनिवृत्तिः कृता स यदा तमेव त्रसं प्राणिनं स्थावरकायस्थितं व्यापादयेत् किं तस्य न भवेत्प्रतिज्ञाभङ्गः ? अपि तु भवत्येवेत्यर्थः । एवमपि स्थावरकाये समुत्पन्नानां त्रसानां यदि तथाभूतं किञ्चिदसाधारणं लिङ्गं स्यात्तत्स्ते त्रसाः स्थावरत्वेऽप्युत्पन्नाः शक्यन्ते परिहर्तुं, न च तदस्तीत्येतद्दर्शयितुमाह–'थावरकायाओ' इत्यादि, स्थावरकायात्प्रविमुच्यमानाः–स्थावरकायायुषा विप्रमुक्तास्त(द्योग्यैश्च)अपरैः कर्मभिः सर्वात्मना त्रसकाये समुत्पद्यन्ते, तथा त्रसकायादपि सर्वात्मना विप्रमुच्यमानाः (तत्कर्मभिः) स्थावरकाये समुत्पद्यन्ते, तत्र चोत्पन्नाना तथाभूतत्रसलिङ्गाभावात्प्रतिज्ञालोप इत्येतत्सूत्रेण दर्शयति 'तेसिं च णं' मित्यादि, तेषां–त्रसानां स्थावरकाये समुत्पन्नानां गृहीतत्रसप्राणातिपातविरतेः श्रावकस्याप्यारम्भप्रवृत्तत्वेनैतत्त्रस[स्थावर]रूपं स्थानं घात्यं भवति, यतः स्थावरवधादनिवृत्तस्तत्र स्थावरोत्पन्नं घातयति, एवं कृतत्रसप्रत्याख्यानस्य श्रावकस्य प्रतिज्ञाभङ्गः स्यात् ।

एवं ण्हं पच्चक्खंताणं सुप्पच्चक्खायं भवइ, एवं ण्हं पच्चक्खावेमाणाणं सुप्पच्चक्खावियं भवइ, एवं ते परं पच्चक्खावेमाणा नाइयरंति सयं पइन्नं ॥ ॥ १३५ ॥

व्याख्या—नागरिकदृष्टान्तेन त्रसमेव स्थावरत्वेनायातं व्यापादयतोऽवश्यं प्रतिज्ञाभङ्गः, यतस्तत एव मदुक्तया [वक्ष्यमाण]नीत्या प्रत्याख्यान कुर्वतां सुप्रत्याख्यातं भवति। एवमेव च प्रत्याख्यापयतां सुप्रत्याख्यातं भवति, एवं च प्रत्याख्यानं कुर्वन्तः कारयन्तश्च नाऽतिचरन्ति स्वीयां प्रतिज्ञामित्येतद्दर्शयितुमाह—

नन्नत्थ अभिओगेणं गाहावईचोरग्गहणविमोक्खणयाए तसभूतेहिं पाणेहिं निहाय दंडं, एवमेव सइ भासाए परक्कमे विज्जमाणे जे ते कोहा वा लोहा वा परं पच्चक्खाविंति अयंपि नो उवएसे भे किं णेयाउए भवति? अवियाइं आउसो गोयमा ! तुब्भंपि एवं रोयति ?। [सू० ५]

व्याख्या—तत्र गृहपतिः प्रत्याख्यानमेवं गृह्णाति, तद्यथा—त्रसभूतेषु वर्त्तमानकाले त्रसत्वेनोत्पन्नेषु 'दण्डः' प्राणुपमर्दस्तन्निहाय–परित्यज्य प्रत्याख्यानं करोति, तदिह भूतत्वविशेषणात्स्थावरपर्यायापन्नवधेऽपि न प्रत्याख्यानभङ्गः, गृहपतिचोरविमोक्षणन्यायेन, एतदपि युक्तमेव सम्यगुक्तं, तदेतदपि त्रसकाये भूतत्वविशेषणमभ्युपगम्यतां, एतदभ्युपगमे हि यथा क्षीरविकृतिप्रत्याख्यायिनो दधिभक्षणेऽपि न प्रतिज्ञाविलोपस्तथा त्रसभूताः सत्त्वा न हन्तव्या इत्येवं प्रतिज्ञावतः स्थावरहिंसायामपि न प्रत्याख्यानातिचारः, तदेवं विद्यमाने सति 'भाषायाः' प्रत्याख्यानवाचः 'पराक्रमे' भूतविशेषणादोषपरिहारसामर्थ्ये एवं पूर्वोक्तया नीत्या सति दोषपरिहरणोपाये ये केचन क्रोधाद्वा लोभाद्वा 'परं' श्रावकादिकं भूतशब्दनिर्विशेषणमेव प्रत्याख्यापयन्ति तेषामेवं प्रत्याख्यानं ददतां मृषावादो भवति गृह्णतां चावश्यं भावी व्रतलोप इति,

तदेवमयमपि 'नः' अस्मदीयोपदेशाभ्युपगमो भूतत्वविशेषणविशिष्टः पक्षः किं भवतां नैव 'नैयायिको' न्यायोपपन्नो भवति ? इदमुक्तं भवति भूतत्वविशेषणेन हि स्थावरोत्पन्नान् हिंसतोऽपि न प्रतिज्ञाऽतिचार इति । अपि च आयुष्मन् गौतम ! तुभ्यमपि रोचते एवमेतद्यथा मया व्याख्यात । एवमभिहितो गौतमः सद्भावं भवाद् वा तमुदकं पेढालपुत्रमेवं वक्ष्यमाणमवादीत्तद्यथा—

सवायं भगवं गोयमे उदयं पेढालपुत्तं एवं वयासी—आउसंतो ! उदगा ! नो खलु अम्हं एयं एवं रोयति, जे ते समणा वा माहणा वा एवमाइक्खंति जाव परूविंति, नो खलु ते समणा वा निग्गंथा वा भासं भासंति, अणुतावियं खलु ते भासं भासंति ।

व्याख्या—आयुष्मन् उदक ! नो खलु अस्माकमेतदेवं, यद्यथा त्वयोच्यते, तद्रोचते, इदमुक्तं भवति-यदिह त्रसकायविरतौ भूतत्वविशेषणं क्रियते तन्निरर्थकतयाऽस्मभ्यं न रोचत इति । तदेवं व्यवस्थिते भो उदक ! ये ते श्रमणा वा ब्राह्मणा वा एवं भूतशब्दविशेषणत्वेन प्रत्याख्यानमाचक्षते, परैः पृष्टास्तथैव भाषन्ते प्रत्याख्यान स्वतः कुर्वन्तस्तत्कारयन्तश्चैवमिति सविशेषण प्रत्याख्यानं भाषन्ते, एवमेव सामान्येन प्ररूपयन्तो न खलु ते श्रमणा वा निर्ग्रन्था वा यथार्थां भाषां भाषन्ते, अपि तु अनुतापिकां भाषां भाषन्ते, अन्यथाप्ररूपणे श्रोतुरनुतापो भवति, तेनानुतापिकेत्युच्यते । तथा पुनरपि तेषां सविशेषणप्रत्याख्यानवतामुत्तरं( प्रकट )दोषमाह—

अब्भाइक्खंति खलु ते समणे समणोवासए वा, जेहिं वि अन्नेहिं पाणेहिं भूतेहिं जीवेहिं सत्तेहिं संजमयंति, ताण वि ते अब्भाइक्खंति, कस्स णं तं हेउं ?।

व्याख्या—तेहि सविशेषणप्रत्याख्यानवादिनो यथावस्थितप्रत्याख्यानं ददतः साधून् गृह्णतश्च श्रावकान् 'अभ्याख्यान्ति' अभूतदोषोद्भावनतोऽभ्याख्यानं ददति। किञ्चान्यत्—येष्वप्यन्येषु पाणिषु भूतेषु जीवेषु सत्त्वेषु ये 'संयमयन्ति' संयमं कुर्वन्ति, तद्यथा—ब्राह्मणो न मया हन्तव्य इत्युक्ते स यदा वर्णान्तरे तिर्यक्षु वा व्यवस्थितस्तदा तद्वधे ब्राह्मणवध आपद्यते, भूतशब्दाविशेषणात्, एवं ते भूतशब्दविशेषणवादिनोऽन्यान् 'अभ्याख्यान्ति' दूषयन्ति। 'कस्स णं तं हेउं' कस्माद्धेतोस्तदसद्भूतं दूषणं भवति ? यस्मात्—

संसारिया खलु पाणा, तसा वि पाणा थावरत्ताए पच्चायंति थावरा वि पाणा तसत्ताए पच्चायंति, तसकायाओ विप्पमुच्चमाणा थावरकायंसि उववज्जंति, थावरकायाओ विप्पमुच्चमाणा तसकायंसि उववज्जंति, तेसिं च णं तसकायंसि उववन्नाणं ठाणमेयं अघत्तं। [ सू० ६ ]

व्याख्या—सांसारिकाः खलु प्राणाः परस्परं जातिसङ्क्रमणभाजो भवन्ति, यतस्त्रसाः प्राणाः स्थावरत्वेन प्रत्यायान्ति स्थावराश्च त्रसत्वेनेति, त्रसकायाश्च सर्वात्मना त्रसायुष्कं परित्यज्य स्थावरकाये तद्योग्यकर्मोपादानादुत्पद्यन्ते तथा-स्थावरकायाच्च तदायुष्कादिना कर्मणा विमुच्यमानास्त्रसकाये समुत्पद्यन्ते, तेषां च स्थावर[ त्रस ]काये समुत्पन्नानां स्थान-

तसा पाणा ते तुब्भे वयह तसभूया पाणा, एते संति दुवे ठाणा तुल्ला एगट्ठा, किमाउसो ! इमे भे ( भवता ) सुप्पणीततराए भवति–तसभूता पाणा [तसा], इमे भे दुप्पणीततराए भवति–तसा पाणा [तसा], ततो एगमाउसो! पडिक्कोसह एक्कं अभिणंदह, अयंपि भेदे से णो णेयाउए भवति ।

व्याख्या—'सवाय' मित्यादि, सद्वाचं सवादं वा उदकः–पेढालपुत्रो भगवन्तं गौतममेवमवादीत्, तद्यथा–हे आयुष्मन् गौतम ! कतरान् प्राणिनो यूयं वदथ ? त्रसा एव प्राणाः–प्राणिनस्त एव त्रसाः प्राणाः–उतान्यथेत्येवं पृष्टो भगवान् गौतमस्तमुदकं पेढालपुत्रं एवमवादीत् आयुष्मन्नुदक ! यान् प्राणिनो यूयं वदथ त्रसभूतास्त्रसत्वेनाविर्भूताः प्राणिनो, नातीताः नाप्येष्याः, किन्तु वर्त्तमानकाल एव त्रसाः प्राणा इति, तानेव वयं वदामस्त्रसाः–त्रसत्वं प्राप्तास्तत्कालवर्त्तिन एव त्रसाः प्राणाः 'जे वय' मित्यादि, यान् वयं वदामस्त्रसा एव प्राणास्त्रसाः प्राणास्तान् यूयमेवं वदथ–त्रसभूता एव प्राणाः, एवं च व्यवस्थिते किमायुष्मन् ? युष्माकमयं पक्षः सुष्ठु 'प्रणीततरो' युक्तियुक्तः प्रतिभासते ? तथा त्रसा एव प्राणास्त्रसाः इत्ययं तु पक्षो दुष्प्रणीततरो 'भवति' प्रतिभासते भवता ? तद्यथा–त्रसभूताः प्राणास्त्रसाः, त्रसाः प्राणास्त्रसाः, कोऽयं भेदः ? एकार्थिका एते, एकार्थिकत्वेन भवतां कोऽयं व्यामोहो ? येन शब्दभेदमात्रमाश्रित्य एकं पक्षमाक्रोशथ द्वितीयं त्वभिनन्दथ इति, तदयमपि तुल्येऽप्यर्थे सत्येकस्य पक्षस्याक्रोशनमपरस्याभिनन्दनमित्युपदेशाभ्युपगमो भवतां नो नैयायिको–न न्यायोपपन्नो भवति, उभयोरपि पक्षयोः समानत्वात्, केवलं सविशेषणपक्षे भूतशब्दोपादानं मोहमात्रहरीति । पुनर्यदुक्तं भवता–

त्रसानां वधनिवृत्तौ कारितायां साधोरनुमतिदोषः स्थावरप्राणिविषयो लगति, भूतशब्दाकथनेऽनन्तरमेव त्रसं स्थावरपर्यायापन्नं व्यापादयतो व्रतभङ्ग इत्येतदपि न किञ्चित्, तत्परिहर्तुकाम आह—

भगवं च णं उदाहु—संतेगतिया मणूसा भवंति, तेसिं च णं एवं वुत्तपुव्वं भवति—नो खलु वयं संचाएमो मुंडे भवित्ता अगाराओ अणगारियं पव्वइत्तए, वयं णं अणुपुव्वेणं गोत्तस्स लिसिस्सामो, ते एवं संखं सावेंति ते एवं संखं ठवयंति, नन्नत्थ अभिओएणं।

व्याख्या—भगवान् गौतमस्वामी पुनराह-सन्त्येके केचन लघुकर्म्माणो मनुष्याः प्रव्रज्यां कर्तुमसमर्थाः प्रव्रज्यां विना धर्मं चिकीर्षवः साधोर्धर्मोपदेशदानोद्यतस्याग्रत इदमुक्तपूर्वं भवति, तथाहि—भोः साधो ! न खलु वयं शक्नुमो मुण्डा भवितुं-प्रव्रज्यां गृहीतुं अगारादनगारतां-साधुभावं प्रतिपत्तुं, वयं त्वाऽनुपूर्व्येण-क्रमशो 'गोत्रं' साधुत्वं, तस्य साधुभावस्य 'पर्यायेण' परिपाट्यात्मानमनुश्लेषयिष्यामः। इदमुक्तं भवति-पूर्वं देशविरतिरूपं श्रावकधर्मं अनुपालयामस्ततोऽनुक्रमेण पश्चात्श्रमणधर्ममिति। तत एव ते 'संख्या' व्यवस्थां श्रावयन्ति। एवं व्यवस्थां प्रत्याख्यानं कुर्वन्तः 'स्थापयन्ति' प्रकाशयन्ति नान्यत्र अभियोगेन, स च "रायाभिओगो गणाभिओगो देवयाभिओगो बलाभिओगो गुरुनिग्गहो" इत्येवमादिनाऽभियोगेन व्यापादयतोऽपि त्रसं न व्रतभङ्गः। एवं साधूपदेशेन प्रत्याख्यानं कुर्वन्ति।

गाहावइचोरग्गहणविमोक्खणताए।

अस्यायमर्थः—रत्नपुरे नगरे रत्नशेखरो नाम राजा, तेन च परितुष्टेन रत्नमालाऽग्रमहिषी प्रमुखाऽन्तःपुरस्य कौमुदीमहोत्सवे नगरस्यान्तः स्वेच्छाप्रचारोऽनुज्ञातः । तदवगम्य नागरलोकेनापि राजाऽनुमत्या स्वकीयस्य स्त्रीजनस्य तथैव क्रीडनमनुमतं, राज्ञा च नगरे सडिंडिमशब्दमाघोषितं, तद्यथा—अस्तमनोपरि कौमुदीमहोत्सवे प्रवृत्ते यः कश्चित्पुरुषो नगरमध्ये स्थितः प्रच्छन्नमुपलब्धश्च तदा तस्य शरीरनिग्रहं करिष्यामि न केनाप्यस्मिन्नर्थे विज्ञप्तिः कार्या नाहं तं मोक्ष्यामि, इत्येवं व्यवस्थिते सत्येकस्य वणिजः षट्पुत्राः, ते च कौमुदीदिने क्रयविक्रयव्यग्रतया तावत्स्थिताः यावत्सूर्योऽस्तंगतः, तदनन्तरमेव स्थगितानि च नगरद्वाराणि, तेषां च व्यग्रतया न निर्गमनमभूत् । ततस्ते भयसम्भ्रान्ताः नगरमध्य एवाऽऽत्मानं गोपयित्वा स्थिताः । ततोऽतिक्रान्ते कौमुदीप्रचारे राज्ञाऽऽरक्षकाः समाहूयादिष्टाः, यथा—सम्यग्निरूपयत यूयमत्र कौमुदीप्रचारे नगरान्तः कश्चित्पुरुषो व्यवस्थित इति । तैरप्यारक्षकैः सम्यङ् निरूपयद्भिरुपलभ्य षड्वणिक्पुत्रवृत्तान्तो राज्ञे निवेदितः । राज्ञाप्याज्ञाभङ्गकुपितेन तेषां षण्णामपि वधः समादिष्टः । ततस्तत्पिता पुत्रवधमाकर्णनगुरुशोकविह्वलोऽकालापतितकुलक्षयोद्भ्रान्तलोचनः किंकर्त्तव्यतामूढतयाऽगणितविधेयाधेयविशेषो राजानमुपस्थितोऽवादीच्च गद्गदया गिरा, यथा—मा कृथा देव ! कुलक्षयमस्माकं, गृह्यतामिदमस्मदीयं कुलक्रमायातं स्वभुजोपार्जितं च प्रभूतं द्रविणजात, मुच्यताममी षट्पुत्राः, क्रियतामयमस्माकमनुग्रहः इत्येवमभिहितो राजा तद्वचनमाकर्ण्य विशेषं पुनरपि वधमादिदेश । अमावपि वणिक् सर्ववधाशङ्की समस्तमोचनानभिप्रायं राजानमवेत्य पञ्चानां मोचनं याचितवान्, तानप्यसौ राजा न मोक्तुमना इत्येवमवगम्य चतुर्मोचनकृते सादर विज्ञप्तवान्, तथाऽपि राजा तमनादृत्य कुपितवदन एव स्थितः । ततस्त्रयाणा विमोचने

द्वितीये श्रुत० सप्तमाध्ययने श्रावकस्याणुव्रतादानं साधोश्च तत्प्रदानमविरुद्धम् ।

कृतादरस्त्वरिताऽभूत्तानप्यमुञ्चन्तं राजानं ज्ञात्वा वणिजस्तापराधो द्वयोर्निर्मोचनं प्रार्थितवान्, तथाप्यग्रजप्रधानं नृपतिमवगम्य ततः पौरमहत्तरसमेतो राजानमेवं विज्ञप्तवान् देव ! अस्माकमेव कुलक्षयः समुपस्थितः, तस्माच्च भवन्त एव नाणायालं, अतः क्रियतामेकपुत्रविमोचनेन महाप्रसाद इति भणित्वा पादयोः सपौरमहत्तमः पतितः, ततो राजापि सञ्जातानुकम्पेन मुक्तस्तदेको ज्येष्ठपुत्र इति । तदेतस्य दृष्टान्तस्य दार्ष्टान्तिकयोजनेयं, तद्यथा—साधुनाऽभ्युद्यतसम्यग्दर्शनमवगम्य श्रावकमखिलप्राणातिपातविरतिग्रहणायाभ्यर्थितः, परं श्रावकः षट्कायरक्षणेऽसमर्थतया यदा न सर्वप्राणातिपातविरतिं प्रतिपद्यते, यथाऽसौ राजा वणिजोऽत्यर्थं विज्ञप्तोऽपि न षडपि पुत्रान् मुमुक्षति नाऽपि पञ्च नतु त्रिद्विसंख्यानिति, तत एकविमोक्षणेनात्मानं कृतार्थमिव मन्यमानः स्थितोऽसौ, एवं साधोरपि श्रावकस्य यथाशक्ति व्रतं गृह्णतस्तदनुरूपमेवाणुव्रतदानमविरुद्धं, यथा च तस्य वणिजो न शेषपुत्रवधानुमतिक्लेशोऽप्यस्ति एवं साधोरपि न शेषप्राणिवधानुमतिप्रत्ययजनितः कर्मबन्धो भवति, किं तर्हि ? यदेव व्रतं गृहीत्वा यानेव सत्त्वान् बादरान् सङ्कल्पजप्राणातिपातनिवृत्त्या रक्षति तन्निमित्तः कुशलानुबन्ध एव इत्येतत्सूत्रेणैव दर्शयितुमाह—

**तसेहिं पाणेहिं निहाय दंडं, तंपि तेसिं कुसलमेव भवति । [ सू० ७ ]**

व्याख्या—त्रसेषु द्वीन्द्रियादि ' निहाय ' परित्यज्य त्रसेषु प्राणातिपातविरतिं गृहीत्वेत्यर्थः, तदपि त्रसप्राणातिपातविरमणव्रतं ' तेषां ' देशविरतिधारिणां कुशलमेव भवति । यच्च प्रागभिहितं, तद्यथा—तमेव त्रसं स्थावरपर्यायापन्नं

॥ १३९ ॥

नागरिकमिव बहिःस्थं व्यापादयतोऽवश्यं भावी व्रतभङ्ग इत्येतत्परिहर्तुकाम आह—

तसा वि वुच्चंति तसा तससंभारकडेणं कम्मुणा नामं च णं अब्भुवगतं भवति, तसाउयं च णं पलिखीणं भवति, तसकायट्ठितीया ते ततो आउयं विप्पजहंति, ते तओ आउयं विप्पजहित्ता थावरत्ताए पच्चायंति । थावरा वि वुच्चंति थावरा थावरसंभारकडेण कम्मुणा णामं च णं अब्भुवगतं भवति, थावरआउं च णं पलिखीणं भवति, थावरकायट्ठितीया तो आउगं विप्पजहंति, ततो-आउगं विप्पजहित्ता भुज्जो पारलोइयत्ताए पच्चायंति, ते पाणा वि वुच्चंति ते तसा वि वुच्चंति, ते महाकाया चिरट्ठितीया [ सू० ८ ]

व्याख्या—' त्रसा ' द्वीन्द्रियादयोऽपि त्रसा उच्यन्ते, ते च त्रसास्त्रससम्भारकृतेन कर्मणा भवति, सम्भारो नाम अवश्यतया कर्म्मणो विपाकानुभवेन वेदनं, एवं त्रसनामकर्म्मणा त्रसा अभिधीयन्ते, त्रसत्वेन यत्प्रतिबद्धमायुष्कं तद्य-क्षोदयप्राप्तं भवति, तदा त्रससम्भारकृतेन कर्मणा त्रसा इति व्यपदिश्यन्ते । यदा [ च ] त्रसायुः परिक्षीणं भवति, त्रसकाय-स्थितिकं च कर्म यदा परिक्षीणं भवति, तच्च जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतः सातिरेकसागरोपमसहस्रद्वयपरिमाणं, तदा, ततस्त्रसकायस्थितेरभावात्तदायुष्कं ते परित्यजन्ति, अपराण्यपि तत्सहचरितानि कर्म्माणि परित्यज्य स्थावरत्वेन प्रत्या-

यान्ति, स्थावरादि नाम च तत्राभ्युपगतं भवति, अपराण्यपि तत्सहचरितानि सर्वात्मना त्रसत्वं परित्यज्य स्थावरत्वेनोदयं यान्ति इति, एवं व्यवस्थिते कथं स्थावरकायं व्यापादयतो गृहीतत्रसकायप्राणातिपातनिवृत्तेः श्रावकस्य व्रतभङ्गः ? इति। किञ्चान्यत् 'थावराउयं च ण'मित्यादि, यदा तदपि स्थावरायुष्कं परिक्षीण भवति [ तथा ] स्थावरकायस्थितिश्च, सा जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतोऽनन्तकालमसङ्ख्येयपुद्गलपरावर्त्ता इति, ततस्तत्कायस्थितेरभावात्तदायुष्कं परित्यज्य भूयः पारलौकिकत्वेन स्थावरकायस्थितेरभावात्त्रसत्वेन प्रत्यायान्ति। 'ते पाणा वि वुच्चंति' ते त्रससम्भारकृतेन कर्म्मणा समुत्पन्नाः सन्तः सामान्यसंज्ञया प्राणा अप्युच्यन्ते, त्रसा अप्युच्यन्ते, ते महाकाया योजनलक्षप्रमाणवपुर्विकुर्वणात्, तथा चिरस्थितिका अप्युच्यन्ते, भवस्थित्यपेक्षया त्रयस्त्रिंशत्सागरोपमायुष्कसद्भावात्। ततस्त्रसपर्यायव्यवस्थितानामेव प्रत्याख्यानं तेन गृहीतं, न तु स्थावरकायव्यवस्थितानामपीति, यस्तु नागरिकदृष्टान्तो भवतोपन्यस्तोऽसावपि दृष्टान्तदार्ष्टान्तिकयोरसाम्यात्केवलं भवतोऽनुपासितगुरुकुलवासित्वमाविष्करोति, तथाहि—नगरधर्मैर्युक्तो नागरिकः, स च मया न हन्तव्यः, इति प्रतिज्ञां गृहीत्वा यदा तमेव व्यापादयति बहिःस्थितं पर्यायापन्नं तदा तस्य किल व्रतभङ्ग इति भवतः पक्षः, स च न घटते, यतो—यो हि नगरधर्म्मैरुपेतः स बहिःस्थितोऽपि नागरिक एव, अतः पर्यायापन्न इत्येतद्विशेषणं नोपपद्यते। अथ सामस्त्येन परित्यज्य नगरधर्म्मानसौ वर्त्तते ? ततस्तमेवेत्येतद्विशेषणं नोपपद्यते, तदेवमत्र त्रसः सर्वात्मना त्रसत्वं परित्यज्य यदा स्थावरः समुत्पद्यते तदा पूर्वपर्यायपरित्यागादपरपर्यायापन्नत्वात्त्रस एवासौ न भवति, त[द्य]था—नागरिकः पल्यां प्रविष्टस्तद्धर्म्मोपेतत्वात्पूर्वधर्म्मपरित्यागान्नागरिक एवासौ न भवति। पुनरप्यन्यथोदकः पूर्वपक्षमारचयितुमाह—

सवायं उदए पेढालपुत्ते भयवं गोयमं एवं वयासी—आउसंतो गोयमा ! नत्थि णं से केइ परियाए जन्नं समणोवासगस्स एगपाणातिवायविरए वि दंडे निखित्ते, कस्स णं तं हेउं ?।

व्याख्या—सद्वा[चं सवा]दमुदकः पेढालपुत्रो भगवन्तं गौतममेवमवादीत्, तद्यथा—आयुष्मन् गौतम ! नास्त्यसौ कश्चित्पर्यायो येन एकप्राणातिपातविरतिविषये दण्डस्त्यक्तो भवति श्रमणोपासकस्य, एतावता श्रावक एकां प्राणातिपातविषयां विरतिं ग्रहीतुं न शक्नोतीति भावः । कस्माद्धेतोः—केन कारणेन ?। अथोदकः कारणं दर्शयति—

संसारिया खलु पाणा, थावरा वि पाणा तसत्ताए पच्चायंति, तसा वि पाणा थावरत्ताए पच्चायंति।

व्याख्या—संसरणशीलाः परस्परं प्राणिनः, ततः स्थावराः सामान्येन त्रसतया प्रत्यायान्ति, त्रसा अपि स्थावरतया प्रत्यायान्ति, तदेवं संसारिणां परस्परगमनं प्रदर्श्याधुना यत्परेण विवक्षितं तदा[विष्कुर्वन्ना]ह—

थावरकायाओ विप्पमुच्चमाणा सव्वे तसकायंसि उववज्जंति, तसकायाओ विप्पमुच्चमाणा सव्वे थावरकायंसि उववज्जंति, तेसिं च णं थावरकायंसि उववन्नाणं ठाणमेयं घत्तं ।

व्याख्या—स्थावरकायाद्विप्रमुच्यमानाः स्थावरेभ्यो निर्गत्य सर्वेऽपि प्राणिनस्त्रसेषु समुत्पद्यन्ते, स्थावरशून्यं जगज्जातं तथा त्रसेभ्यो विप्रमुच्यमानाः सर्वेऽपि प्राणिनः स्थावरेषु समुत्पद्यन्ते, न कोऽपि त्रसो जगति लभ्यते, तेषां च त्रसानां सर्वेषां स्थावरकाये समुत्पन्नानां स्थानमेतद् घात्यं भवति, यतः श्रावकेण स्थावरवधनिवृत्तिः कृता नास्ति, एतावता

स्थावरविनाशे स्थावरमध्ये उत्पन्नानां त्रसानामपि विनाशो जायते, एवं कृतत्रसवधप्रत्याख्यानस्य श्रावकस्य व्रतभङ्गः स्यात् । एवमुक्त्वा स्थिते उदके गौतमस्वाम्याह—

सवायं भगवं गोयमे उदयं पेढालपुत्तं एवं वयासी—नो खलु आउसो! अस्माकं + वत्तव(एणं)याए तुब्भं चेव अणुप्पवादेणं अत्थि णं से परियाए जेणं समणोवासगस्स सवपाणेहिं सवभूएहिं सवजीवेहिं सवसत्तेहिं दंडे निखित्ते [भवइ], कस्स णं तं हेउं? संसारिया खलु पाणा, तसा वि पाणा थावरत्ताए पच्चायंति, थावरा वि पाणा तसत्ताए पच्चायंति, ते तसकायाओ विप्पमुच्चमाणा सवे थावरकायंसि उववज्जंति, थावरकायाओ विप्पमुच्चमाणा सवे तसकायंसि उववज्जंति, तेसिं च णं तसकायंसि उववन्नाणं ठाणमेयं अघत्तं, ते पाणा वि वुच्चंति, ते तसा वि वुच्चंति, ते महाकाया [ते] चिरट्ठितीया, ते बहुतरगा पाणा जेहिं समणोवासगस्स सुपच्चक्खायं भवति, ते अप्पतरगा पाणा जेहिं समणोवासगस्स अपच्चक्खायं भवति, से महया तसकायाओ उवसंतस्स उवट्ठियस्स पडिविरयस्स, जन्नं तुब्भे वा अन्नो वा एवं वदह—नत्थि णं से[केइ]परियाए जंसि समणोवासगस्स एगपाणा-

+ " अस्माकमित्येतन्मगधदेशे आगोपालाङ्गनाप्रसिद्धं संस्कृतमेवोच्चार्यते, तदिहापि तथैवोच्चारितमिति " वृत्तिकारमिश्राः ।

(इत्रा)ए वि दंडे निक्खित्ते, अयंपि भेदे से नो णेआउए भवति। [ सू० ९ ]

व्याख्या—गौतम उदकं पेढालपुत्रं प्रत्यवादीत्–नो खलु आयुष्मन् उदक! अस्माकं सम्बन्धिना वक्तव्येन एतदस्ति, यत्सर्वेऽपि त्रसाः स्थावरत्वेन प्रत्यायान्ति स्थावराः सर्वेऽपि त्रसत्वेन प्रत्यायान्ति नैतदस्मद्वक्तव्यतायामस्ति, तथाहि–नैतद्भूतं न च भवति न कदाचिद्भविष्यति, यदुत सर्वेऽपि स्थावरा निर्लेपतया त्रसत्वं प्रतिपद्यन्ते, स्थावराणामानन्त्यात्त्रसानां चासंख्येयत्वेन तदाधारत्वानुपपत्तिः × तथा त्रसा अपि सर्वेऽपि न स्थावरत्वं प्रतिपन्ना न प्रतिपद्यन्ते नापि प्रतिपत्स्यन्ते, इदमुक्तं भवति–यद्यपि विवक्षितकालवर्त्तिनस्त्रसाः कालपर्यायेण स्थावरकायत्वेन यास्यन्ति तथाप्यपरापरत्रसोत्पत्त्या त्रसजात्यनुच्छेदान्न कदाचिदपि त्रसकायशून्यः संसारो भवतीति सर्वथा निर्युक्तिकं भवद्वचः। भवदीयं पक्षं भवदभिप्रायेणैव निराक्रियते—तदेव पराभिप्रायेण परिहरति–अस्त्यसौ पर्यायः, स चायं–भवदभिप्रायेण यदा सर्वेऽपि स्थावरास्त्रसत्वं प्रतिपद्यन्ते यस्मिन् पर्याये–ऽवस्थाविशेषे श्रमणोपासकस्य कृतत्रसप्राणातिपातनिवृत्तेः सतस्त्रसत्वेन [च] भवदभ्युपगमेन सर्वप्राणिनामुत्पत्तेस्तैश्च सर्वप्राणिभिस्त्रसत्वेन भूतै–रुत्पन्नैः करणभूतैस्तेषु [वा] विषयभूतेषु दण्डो ' निक्षिप्तः ' परित्यक्तः। इदमुक्तं भवति–यदा सर्वेऽपि स्थावरा भवदभिप्रायेण त्रसत्वेनोत्पद्यन्ते तदा सर्वप्राणविषयं प्रत्याख्यानं श्रमणोपासकस्य भवतीति। एतदेव प्रश्नपूर्वकं दर्शयितुमाह—' कस्स णं तं हेउं ?' इत्यादि सुगमं, यावत्त्रसकाये समुत्पन्नानां स्थावराणां स्थानमेत-

× अनन्ताः स्थावरा असख्याताना त्रसानां मध्ये क समान्ति ?।

दघात्य-मघातार्हं, तत्र विरतिसद्भावात् । ते च त्रसा नारकतिर्यङ्नरामरगतिभाजः सामान्यसंज्ञया प्राणिनोऽप्यभिधीयन्ते विशेषसंज्ञया त्रसा[अपि]अभिधीयन्ते[,तथा] महाकायाः, वैक्रियशरीरस्य योजनलक्षप्रमाणत्वादिति । तथा चिरस्थितिकास्त्रय-स्त्रिंशत्सागरोपमपरिमाणत्वाद्भवस्थितेः, तथा[च]ते प्राणिनो बहुतमाः यैः श्रमणोपासकस्य सुप्रत्याख्यान भवति, त्रसानुद्दिश्य तेन प्रत्याख्यानग्रहणात् । भवन्मते सर्वस्थावराणां त्रसत्वेनोत्पत्तेरतस्तेऽल्पतरकाः प्राणिनो, यैः श्रावकस्य अप्रत्याख्यानं भवति । इदमुक्तं भवति-अल्पशब्दस्याभाववाचित्वान्न सन्त्येव ते येष्वप्रत्याख्यानमिति । इत्येवं पूर्वोक्तया नीत्या 'से' तस्य श्रमणोपासकस्य महतस्त्रसकायादुपशान्तस्योपरतस्य प्रतिविरतस्य मतः सुप्रत्याख्यानं भवतीति । तदेवं व्यवस्थिते 'ण' मिति वाक्यालङ्कारे, यत्तूयं वदथ अन्यो वा कश्चित्, यथा-नास्ति कोऽपि पर्यायो यत्र श्रावकस्य प्राणातिपात प्रत्याख्यानं भवति, अयमपि भवत्पक्षो नो नैयायिको-न युक्त इत्यर्थः । अथ श्रीगौतमस्वामीनां स्थावरपर्यायापन्नानां व्यापादनेऽपि न व्रतभङ्गो भवतीत्यस्यार्थस्य प्रसिद्धये दृष्टान्तत्रयमाह—

भगवं च णं उदाहु नियंठा खलु पुच्छियव्वा-आउसंतो नियंठा ! इह खलु संतेगतिया मणुस्सा भवंति, तेसिं च णं एवं वुत्तपुव्वं भवइ-जे इमे मुंडे भवित्ता अगाराओ अणगारियं पव्वइया, एएसिं च णं आमरणंताए दंडे निखित्ते, जे इमे अगारमावसंति एतेसि णं आमरणंताए दंडे नो निखित्ते, केई च णं ( केचित् ) समणा जाव वासाइं चउपंचमाइं छद्दसमाणि अप्पयरो वा भुज्जयरो वा देसं

वा दूइज्जिता अगारमावसेज्जा ? हंता वसेज्जा, तस्स णं तं गारत्थं वहमाणस्स से पच्चक्खाणे भग्गे भवति ? नो इणमट्ठे समट्ठे, एवामेव समणोवासगस्स वि तसेहिं पाणेहिं दंडे निखित्ते थावरेहिं पाणेहिं दंडे नो निखित्ते, तस्स णं तं थावरकायं वहमाणस्स से पच्चक्खाणे नो भग्गे भवति। से एवमायाणह ? नियंठा !, एवमायाणियव्वं।

एको दृष्टान्तः, भगवान् गौतमस्वामी अपरानपि [तत्] स्थविरान् साक्षिणः कर्त्तुमिदमाह—

भो उदक ! निर्ग्रन्थाः [युष्मत्स्थविराः] खलु प्रष्टव्यास्तद्यथा-भो निर्ग्रन्था ! युष्माकमप्येतद्वक्ष्यमाणमभिमतं माहोस्विन्न ? युष्माकमप्येतदभिप्रेतं यदहं वच्मि, तथाहि-सन्त्येके मनुष्याः ये मुण्डा भूत्वाऽगारात्-गृहान्निर्गत्यानगारतां प्रतिपन्नाः, प्रव्रजिता इत्यर्थः, तेषामुपरि यावज्जीवमामरणान्तं मया दण्डो 'निक्षिप्तः' परित्यक्तो भवति, कोऽर्थः ? कश्चित्तथाविधो मनुष्यो यतीनुद्दिश्य व्रतं गृह्णाति, तद्यथा—न मया यावज्जीवं यतयो हन्तव्याः, एतावता यावज्जीवं यतीन्न हनिष्यामि, गृहस्थानुद्दिश्य नियमो नास्ति, एवं च सति केचन मनुष्याः प्रव्रज्यां गृहीत्वा श्रमणा जाताः कियन्तमपि कालं प्रव्रज्यापर्यायं प्रतिपाल्य यावद्वर्षाणि चत्वारि पञ्च वा षड् दश वा अल्पतरं वा प्रभूततरं वा कालं तथा देशं च 'दूइज्जित्त'त्ति विहृत्य कुतश्चित् कर्मोदयात्तथाविधपरिणतेरगार-गृहमावसेयुः-गृहस्था भवेयुरित्येवम्भूतः पर्यायः किं सम्भाव्यते ? उत नेति, इत्येवं पृष्टा निर्ग्रन्थाः प्रत्युचुः-हन्त गृहवासं व्रजेयुः, 'तस्य च' श्रावकस्य यतिवधगृहीतव्रतस्य

'तं' गृहस्थं व्यापादयतः किं व्रतभङ्गो भवेदुत नेति? ततस्ते निर्ग्रन्था आहुर्न व्रतभङ्ग इति। एवमेव श्रमणोपासकस्यापि त्रसेषु दण्डो निक्षिप्तो न स्थावरेष्विति, अतस्त्रसं स्थावरपर्यायापन्नं व्यापादयतस्तत्प्रत्याख्यानभङ्गो न भवतीति। साम्प्रतं द्वितीयं दृष्टान्तं दर्शयितुकाम आह—

भगवं च णं उदाहु—नियंठा खलु पुच्छियव्वा—आउसंतो नियंठा! [इह] खलु गाहावई वा गाहावइपुत्तो वा तहप्पगारेहिं कुलेहिं आगम्म धम्मसवणवत्तियं उवसंकमेज्जा? हंता उवसंकमेज्जा, तेसिं च णं तहप्पगाराणं धम्मे आइक्खियव्वे? हंता आइक्खियव्वे, किं ते तहप्पगारं धम्मं सोच्चा निसम्म एवं वदेज्जा—इणमेव निग्गंथं पावयणं सच्चं अणुत्तरं केवलियं पडिपुण्णं संसुद्धं नेयाउयं सल्लकत्तणं सिद्धिमग्गं मुत्तिमग्गं निज्जाणमग्गं निव्वाणमग्गं अवितहमसंदिद्धं सव्वदुक्खप्पहीणमग्गं, इत्थं ठिया जीवा सिज्झंति बुज्झंति मुच्चंति परिनिव्वायंति सव्वदुक्खाणमंतं करेंति, तमाणाए तहा गच्छामो तहा चिट्ठामो तहा निसियामो तहा तुयट्टामो तहा भुंजामो तहा भासामो तहा अब्भुट्ठेमो तहा उट्ठाए उट्ठेमो त्ति पाणाणं भूयाणं जीवाणं सत्ताणं संजमेणं संजमामो त्ति वदेज्जा? हंता वएज्जा, किं ते तहप्पगारा कप्पंति पव्वावित्तए? हंता कप्पंति, किं ते तहप्पगारा कप्पंति मुंडावित्तए?

हंता कप्पंति, किं ते तहप्पगारा कप्पंति सिक्खावित्तए ? हंता कप्पंति, किं ते तहप्पगारा कप्पंति उवट्ठावित्तए ? हंता कप्पंति, तेसिं च णं तहप्पगाराणं सव्वपाणेहिं जाव सव्वसत्तेहिं दंडे निखित्ते ? हंता निखित्ते, से णं एयारूवेणं विहारेणं विहरमाणा जाव वासाइं चउपंचमाइं छद्दसमाणि वा अप्पतरो वा भुज्जतरो वा देसं दूइज्जित्ता अगारं वइज्जा ? हंता वएज्जा, तस्स णं सव्वपाणेहिं जाव सव्वसत्तेहिं दंडे निखित्ते ? णो तिणट्ठे समट्ठे, से जे से जीवे जस्स परेणं सव्वपाणेहिं जाव सव्वसत्तेहिं दंडे नो निखित्ते, से जे से जीवे जस्स आरेणं सव्वपाणेहिं जाव सव्वसत्तेहिं दंडे निखित्ते, से जे से जीवे जस्स इदाणिं सव्वपाणेहिं जाव सव्वसत्तेहिं दंडे नो निखित्ते भवइ, परेणं असंजए आरेणं संजए, इदाणिं असंजए, असंजयस्स णं सव्वपाणेहिं जाव सव्वसत्तेहिं दंडे नो निखित्ते भवति, से एवमायाणह ?, नियंठा !, से एवमायाणियव्वं ।

व्याख्या—भगवानेव गौतमस्वाम्याह–गृहस्था यतीनामन्तिके [समागत्य] धर्मं श्रुत्वा सम्यक्त्वं प्रतिपद्य तदुत्तरकालं सञ्जातवैराग्याः प्रव्रज्यां गृहीत्वा पुनस्तथाविधकर्मोदयात्प्रव्रज्यां त्यजन्ति, ते च पूर्वं गृहस्थाः सर्वाऽऽरम्भप्रवृत्तास्तदारतः प्रव्रजिताः सन्तो जीवोपमर्दपरित्यक्तदण्डाः पुनः प्रव्रज्यापरित्यागे सति नो परित्यक्तदण्डाः, तदेवं प्रत्याख्यातॄणां यथाव-

स्थात्रयेऽप्यन्यथात्वं भवत्येवं त्रसस्थावरयोरपि द्रष्टव्यम् । एतच्च 'भगवं च णं उदाहु' इत्यादिग्रन्थस्य 'से एव-मायाणियव्वं' इत्येतत्पर्यन्तमानस्य तात्पर्यम्, अक्षरघटना तु सुगमेति स्वबुद्धया कार्या । तदेव द्वितीयं दृष्टान्तं प्रदर्श्याधुना तृतीयं दृष्टान्तं परतीर्थिकोद्देशेन दर्शयितुमाह—

भगवं च णं उदाहु नियंठा खलु पुच्छियव्वा—आउसंतो नियंठा ! केइ खलु परिव्वायगा [वा] परिव्वाइयाओ वा अन्नयरेहिंतो तित्थाययणेहिंतो आगम्म धम्मसवणवत्तियं उवसंकमेज्जा ? हंता उवसंकमेज्जा ।

व्याख्या—भगवान् गौतमस्वामी कथयति निर्ग्रन्थाः पृष्टव्याः निर्ग्रन्थानुद्दिश्य पृच्छति-भो आयुष्मन्तो निर्ग्रन्था ! इह जगति कश्चित् परिव्राजकः परिव्राजिका वा अन्यतीर्थायतनादागत्य साधुसमीपे धर्मं श्रोतुमुपसङ्क्रमते ? निर्ग्रन्था वदन्ति उपसङ्क्रमते, तादृशस्य परिव्राजकस्य कथ्यते धर्म्मः ? हन्त कथ्यते, तमुपस्थापयितुं कल्पते ? हन्त कल्पते ।

किं तेसिं तहप्पगाराणं धम्मे आइक्खियव्वे ? हंता आइक्खियव्वे, तं चेव जाव उवट्ठावित्तए, [कप्पंति ? हंता कप्पंति] किं ते तहप्पगारा कप्पंति संभुंजित्तए ? हंता कप्पंति, ते णं एयारूवेणं विहारेणं विहरमाणा तं चेव जाव अगारं वएज्जा ? हंता वएज्जा, ते णं तहप्पगारा कप्पंति संभुंजित्तए?

त्तए ? णो तिणमट्ठे समट्ठे, से जे से जीवे जे परेणं नो कप्पइ संभुंजित्तए, से जे से जीवे आरेणं कप्पइ संभुंजित्तए, से जे से जीवे जे इदाणिं णो कप्पति संभुंजित्तए, परेणं अस्समणे आरेणं समणे, इदाणिं अस्समणे, अस्समणेणं सार्द्धिं नो कप्पति समणाणं निग्गंथाणं संभुंजित्तए, से एवमायाणह नियंठा ! से एवमायाणियव्वं [ सू० १० ]

व्याख्या—ते परिव्राजकाः साधुत्व प्राप्ताः सन्तः उपविशन्ति ? हन्त उपविशन्ति, को दोषः ? पुनस्तथाविधकर्मोदयात्साधुमार्गं त्यक्त्वा गृहवासमङ्गीकुर्वन्ति ? हन्त कुर्वन्ति, ततः मण्डल्यामुपवेशयितुं कल्पते ? निर्ग्रन्था ऊचुः—

'नो तिणट्ठे समट्ठे' इत्यादि सर्वं सुगमम् । तात्पर्यार्थस्त्वयं पूर्वं परिव्राजकादयः सन्तोऽसम्भोग्याः साधूनां गृहीतश्रामण्याश्च साधूनां सम्भोग्याः संवृत्ताः, पुनः प्रव्रज्यात्यागादसम्भोग्या इत्येवं पर्यायान्यथात्वं त्रसस्थावराणामप्यायोजनीयमिति । यदा त्रसः स्थावरेषूत्पन्नस्तदा स्थावर एव, न त्रसः, यदा पूर्वं त्रसोऽभूत्तदा तस्य वधः प्रत्याख्यातोऽभूत् श्रावकेण, यदा स एव त्रसः स्थावरतयोत्पन्नस्तदा न प्रत्याख्यानं स्थावरघाते, यदा पुनः स्थावरकायान्निर्गत्य सोऽजनि तदा पुनः प्रत्याख्यानमिति, तदेवं निर्दोषां देशविरतिं प्रसाध्य पुनरपि तद्गतमेव विचारं कर्तुकाम आह—

भगवं च णं उदाहु संतेगातिया समणोवासगा भवंति, तेसिं च णं एवं वुत्तपुव्वं भवइ नो खलु वयं

संचाएमो मुंडा भवित्ता अगाराओ अणगारियं पवइत्तए, वयं णं चाउद्दसट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणा विहरिस्सामो, थूलगं पाणाइवायं पच्चक्खाइस्सामो, एवं थूलगं मुसावायं थूलगं अदिन्नादाणं थूलगं मेहुणं थूलगं परिग्गहं पच्चक्खाइस्सामो, इच्छापरिमाणं करिस्सामो, दुविहं तिविहेणं, मा खलु मम अट्ठाए किंचिवि करेह वा करावेह वा, तत्थ वि पच्चक्खाइस्सामो, ते णं—अभोच्चा अपिच्चा असिणाइत्ता आसंदीपेढियाओ पच्चोरुहित्ता, ते तहा कालगता किं वत्तवं सिया ? सम्मं कालगतात्ति वत्तवं सिया, ते पाणा वि वुच्चंति ते तसा वि वुच्चंति ते महाकाया ते चिरट्ठितीया ते वहुतरगा पाणा जेहिं समणोवासगस्स सुपच्चक्खायं भवति, ते अप्पतरगा पाणा जेहिं समणोवासगस्स अपच्चक्खायं भवति, इति से महयाओ जण्णं तुब्भे वदह तं चेव, जाव अयंपि भेदे से णो णेयाउए भवति ।

व्याख्या—पुनरपि गौतमस्वाम्युदकं प्रतीदमाह, तथाहि—बहुभिः प्रकारैस्त्रसमद्भावः सम्भाव्यते, ततश्चाशून्यस्तैः संसारः, तदशून्यत्वे च [न]निर्विषयं श्रावकस्य त्रसवधनिवृत्तिरूपं प्रत्याख्यानं, तदधुना बहुप्रकारत्रससम्भूत्याऽशून्यतां संसारस्य दर्शयति, भगवानाह—सन्ति एके केचन श्रमणोपासका भवन्ति, तेषां चेदमुक्तपूर्वं भवति—सम्भाव्यते श्रावकाणा-

मेवम्भूतस्य वचसः सम्भव इति, तद्यथा–न खलु वयं शक्नुमः प्रव्रज्यां गृहीतुं, किन्तु वयं चतुर्दश्यष्टमीपूर्णमासीषु सम्पूर्णं पौषध + सम्यगनुपालयन्तो विहरिष्यामस्तथा स्थूलप्राणातिपातमृषावादादत्तमैथुनपरिग्रहं प्रत्याख्यास्यामो 'द्विविध'-मिति कृतकारितप्रकारद्वयेन, अनुमतेः श्रावकस्याप्रतिषिद्धत्वात्तथा 'त्रिविधेन' मनसा वाचा कायेन च तथा 'मा' इति निषेधे, खलु निश्चितं पौषधस्थस्य पचनपाचनादिकं मम मा कार्षीं, तथा परेण मा कारयत तत्राऽनुमतावपि सर्वथा यदसम्भवि तत्प्रत्याख्यास्यामः, ते एवं कृतप्रतिज्ञाः सन्तः श्रावकाः अभुक्त्वा अपीत्वा अस्नात्वा च पौषधोपेतत्वादासन्दी-पीठिकातः प्रत्याऽरुह्याऽवतीर्य सम्यक् पौषधं गृहीत्वा कालं कृतवन्तस्ते तथा प्रकारेण कृतकालाः सन्तः सम्यक्कृतकाला उच्यन्ते ? किंवा असम्यक् ? कथं च वक्तव्यं स्यात् ? इत्येवं पृष्टैर्निर्ग्रन्थैरवश्यमेवं वक्तव्यं स्यात्–सम्यक्कालगता इति एवं च कालगतानामवश्यं भावी देवलोकेषूत्पादस्तदुत्पन्नाश्च ते त्रसा एव, ततश्च कथं निर्विषयता प्रत्याख्यानस्योपासकस्येति ? । एवं च बहवो जीवाः येषां श्रावकस्य प्रत्याख्यानं स्यात्, ते स्तोका येषु विषये न प्रत्याख्यानं, एवं श्रावकस्य महत्त्रस-कायाद्विरतिरस्ति, त्रसरक्षणे महान् यत्नः श्रावकस्य विराधनायाश्च विरतिः । एवंविधस्य श्रावकस्य भवद्भिरुच्यते–नास्ति स कोऽपि पर्यायो यत्र श्रावकस्य प्राणातिपातप्रत्याख्यानं स्यात्, एतद्भवद्वचो न न्यायोपपन्नमिति । पुनरन्यथा श्रावकोद्देशेन प्रत्याख्यानस्य विषयं प्रदर्शयितुमाह—

+ " आहारशरीरसत्कारब्रह्मचर्याव्यापाररूपम् " इति वृत्तिकाराः ।

भगवं च णं उदाहु संतेगतिया समणोवासगा भवंति, तेसिं च णं एवं वुत्तपुव्वं भवइ नो खलु वयं संचाएमो मुंडा भवित्ता अगाराओ जाव पव्वइत्तए, नो खलु वयं संचाएमो चाउद्दसट्ठ–मुद्दिट्ठपुण्णमासिणीसु जाव अणुपालेमाणा विहरित्तए, वयं णं अपच्छिममारणंतियसंलेहणा-झूसणाझूसिया भत्तपाणपडियाइक्खिया जाव कालं अणवकंखमाणा विहरिस्सामो, सव्वं पाणाइ-वायं पच्चक्खाइस्सामो जाव सव्वं परिग्गहं पच्चक्खाइस्सामो तिविहं तिविहेणं मा खलु मम अट्ठाए किंचि वि जाव आसंदीए पेढियाओ पच्चोरुहित्ता ते तहा कालगता किं वत्तव्वं सिया? सम्मं कालगता इति वत्तव्वं सिया, ते पाणा वि वुच्चंति जाव अयंपि भेदे से णो नेयाउए भवइ ।

व्याख्या—गौतमस्वाम्याह, तद्यथा 'सन्ति' विद्यन्ते 'एके' केचन श्रमणोपासकाः, तेषां चेतदुक्तपूर्वं भवति, तथाहि–खलु न शक्नुमो वयं प्रव्रज्यां गृहीतुं नापि चतुर्दश्यादिषु सम्यक् पौषधं पालयितुं, वयं चापश्चिमया संलेखनाक्षपणया क्षपितकायाः सन्तो भक्तपानं प्रत्याख्याय 'कालं' दीर्घकालमनवकाङ्क्षमाणा विहरिष्यामः। इदमुक्तपूर्वं भवति, तद्यथा–न खलु वयं दीर्घकालं पौषधादिकं व्रतं पालयितुं समर्थाः, किन्तु वयं सर्वमपि प्राणातिपातादिकं प्रत्याख्याय संलेखनासंलिखितकायाश्चतुर्विधाहारपरित्यागेन जीवितं परित्यक्तुमलमिति, एतत्सूत्रेणैव दर्शयति–' सव्वं पाणाइवाय 'मित्यादि

द्वितीये श्रुत० सप्तमाध्ययने श्रावकस्य त्रसवध निवृत्तस्य निषयतां प्रतिपादयति।

सुगमम्। यावत्ते तथाकालगताः किं वक्तव्यमेतत्स्यात्–सम्यक् ते कालगताः? इति, एवं पृष्टा निर्ग्रन्था एतदूचुर्यथा ते सन्मनसः–शोभनमनसस्ते कालगता इति, ते च सम्यक् संलेखनया यदा कालं कुर्वन्ति तदाऽवश्यमन्यतमेषु देवलोकेषूत्पद्यन्ते, तत्र चोत्पन्ना यद्यपि व्यापादयितुं न शक्यन्ते तथापि त्रसत्वात्ते श्रावकस्य[त्रस]वधनिवृत्तस्य विषयतां प्रतिपद्यन्ते। पुनरप्यन्यथा प्रत्याख्यानस्य विषयमुपदर्शयितुमाह—

भगवं च णं उदाहु संतेगतिया मणुस्सा भवंति तं जहा–महेच्छा महारंभा महापरिग्गहा अहम्मिया जाव दुप्पडियाणंदा जाव सव्वाओ परिग्गहाओ अपडिविरता, जावज्जीवाए, जेहिं समणोवासगस्स आयाणसो आमरणंताए दंडे निखित्ते, ते ततो आउगं विप्पजहंति, ते तओ भुज्जो सगमादाए दोग्गतिगामिणो भवंति, ते पाणा वि वुच्चंति ते तसा वि वुच्चंति। ते महाकाया [ते] चिरट्ठितीया, ते बहुतरगा पाणा, जाव जं णं तुब्भे वदह तं चेव, अयंपि भेदे से णो नेयाउए भवति।

व्याख्या—भगवानाह–'एके' केचन मनुष्या एवम्भूता भवन्ति, तद्यथा–महेच्छा महारम्भा महापरिग्रहा इत्यादि सुगमं, यैर्येषु वा श्रमणोपासकस्य 'आदान' प्रथमव्रतग्रहणं, तत आरभ्याऽऽमरणान्तं दण्डो 'निक्षिप्तः' परित्यक्तो भवति, ते च तादृग्विधास्तस्माद्भवात्कालात्यये स्वायुषं त्यजन्ति, त्यक्त्वा त्रसजीवितं ते भूयः 'स्वकर्म'स्वकृतं किल्बिष-

मादाय-गृहीत्वा दुर्गतिगामिनो भवन्ति । एतदुक्तं भवति-महारम्भपरिग्रहत्वाचे मृताः पुनरन्यतरपृथिव्यां नारकत्रसत्वेनोत्पद्यन्ते, ते च सामान्यसंज्ञया प्राणिनो विशेषसंज्ञया त्रसाः महाकायाश्चिरस्थितिका इत्यादि पूर्ववत्, यावत् ' नो णेआउएत्ति ' । पुनरप्यन्येन प्रकारेण प्रत्याख्यानस्य विषयं दर्शयितुमाह—

भगवं च णं उदाहु संतेगतिया मणुस्सा भवंति [तं जहा] अणारंभा अपरिग्गहा धम्मिया धम्माणुया जाव सव्वाओ परिग्गहाओ पडिविरया जावज्जीवाए, जेहिं समणोवासगस्स आयाणसो आमरणंताए दंडे निखित्ते, ते तओ आउयं विप्पजहंति, ते तओ भुज्जोसगमादाए सोग्गतिगामिणो भवंति, ते पाणा वि वुच्चंति जाव णो णेयाउए भवति ।

व्याख्या—भगवानाह-सन्त्येके मनुष्याः महारम्भपरिग्रहादिभ्यो विपर्यस्ताः सुशीलाः सुव्रताः सुप्रत्यानन्दाः साधव इत्यादि सुगमं, यावत् ' नो णेयाउए भवति ' एते च सामान्यश्रावकास्तेऽपि त्रसेष्वेवान्यतरेषु देवेषूत्पद्यन्ते अतोऽपि न निर्विषयं प्रत्याख्यानमिति । किञ्चान्यत्—

भगवं च णं उदाहु संतेगतिया मणुस्सा भवंति, तंजहा—अप्पिच्छा अप्पारंभा अप्पपरिग्गहा धम्मिया धम्माणुया जाव एगच्चाओ परिग्गहाओ अप्पडिविरया, जेहिं समणोवासगस्स आया-

णसो आमरणंताए दंडे निखित्ते। ते तओ आउ[गं] विप्पजहंति, आउयं विप्पजहित्ता भुज्जोसगमादाए सुग्गइगामिणो भवंति, ते पाणा वि वुच्चंति जाव नो णेयाउए भवति।

व्याख्या—एतेऽपि अल्पलोभा अल्पपरिग्रहा अल्पारम्भा धार्म्मिकाः प्राणातिपातादेकस्मिन् पक्षे विरता एकतो अविरता अतो विरताविरता उच्यन्ते, श्रमणोपासकस्य येषामामरणान्ताद्दण्डो निषिद्धोऽस्ति, ते विरताविरताः स्वमायुस्त्यक्त्वा सद्गतिगामिनो जायन्ते-देवेषूत्पद्यन्ते। ते तत्रस्थाः प्राणास्तथा त्रसा महाकायाश्चिरस्थितिकाश्चोच्यन्ते ते तानपि न घ्नन्ति। अतो यद्भवतोच्यते नास्ति स कोऽपि पर्यायो यत्र श्रावकस्य प्राणातिपातविरतिः स्यात्तन्मृषा। 'अयं भेदे से नो णेयाउए' इत्यादि सर्वत्र योज्यम्।

भगवं च णं उदाहु संतेगतिया मणुस्सा भवंति, आरण्णिया आवसहिया गामणियंतिया कण्हुई रहस्सिया, जेहिं समणोवासगस्स आयाणसो आमरणंताए दंडे निखित्ते, ते नो बहुसंजया नो बहुपडिविरता पाणभूयजीवसत्तेहिं अविरया, ते अप्पणा सच्चामोसाइं एवं विप्पडिवेदेंति— अहं न हंतव्वो अन्ने हंतव्वा, जाव कालमासे कालं किच्चा अन्नयराइं आसुरियाइं किब्बिसियाइं जाव उववत्तारो हवंति, तओ विप्पमुच्चमाणा भुज्जो एलमूयत्ताए तमोरूवत्ताए पच्चा-

यंति, ते पाणा वि वुच्चंति जाव नो णेयाउए भवति ।

व्याख्या—गौतमस्वाम्येव प्रत्याख्यानस्य विषयं दर्शयितुमाह—'एके' केचन मनुष्याः एवम्भूता भवन्ति, तद्यथा—आरण्यकास्तीर्थिकविशेषास्तथा आवसथिकास्तीर्थिकविशेषा एव तथा ग्रामनिमन्त्रिकास्तथा 'कण्हुई रहस्सिया' त्ति क्वचित्कार्ये रहस्यकाः एते सर्वेऽपि तीर्थिकविशेषास्ते च नो बहुसंयताः हस्तपादादिक्रियासु, तथा ज्ञानावरणीयाद्युत्तरत्वान्न बहुविरताः सर्वप्राणभूतजीवसत्त्वेभ्यस्तत्स्वरूपापरिज्ञानात्तद्वधादविरता इत्यर्थः। ते तीर्थिकविशेषा बहुसंयताः स्वतोऽविरताः आत्मना सत्यामृषाणि वाक्यान्येवमिति वक्ष्यमाणनीत्या 'वियुञ्जन्ति' प्रयुञ्जन्ति 'एवं विप्पडिवेदेंति' + एवं विविध प्रकारेण परेषां प्र[ति]वेदयन्ति—ज्ञापयन्ति, तानि पुनरेवम्भूतानि वाक्यानि दर्शयति, तद्यथा—अहं न हन्तव्योऽन्ये पुनर्हन्तव्यास्तथाऽहं नाज्ञापयितव्योऽन्ये पुनराज्ञापयितव्या इत्यादीन्युपदेशवाक्यानि ददति, ते चैवमेवोपदेशदायिनः स्त्रीकामेषु मूर्च्छिताः गृद्धा यावद्वर्षाणि चतुःपञ्चमानि षड्दशमानि वाऽतोऽप्यल्पतरं वा प्रभूततरं वा कालं भुक्त्वा उत्कट[ा भोगा] भोगभोगा[स्ताँ]स्ते तथाभूताः किञ्चिदज्ञानतपःकारिणः कालमासे कालं कृत्वाऽन्यतरेषु आसुरीयेषु स्थानेषु किल्बिषिकेष्वसुरदेवाधमेषूपपत्तारो भवन्ति, यदि वा प्राण्युपघातोपदेशदायिनो भोगाभिलाषुकाः 'अमूर्येषु' नित्यान्धकारेषु किल्बिषप्रधानेषु नरकस्थानेषु ते समुत्पद्यन्ते, ते च देवा नारका वा त्रसत्वं न व्यभिचरन्ति, तेषु च यद्यपि द्रव्यप्राणातिपातो न

+ "क्वचित्पाठोऽस्यायमर्थः" इतिवृत्तौ ।

सम्भवति तथापि ते भावतो यः प्राणातिपातस्तद्विरतेर्विषयतां प्रतिपद्यन्ते, ततोऽपि च देवलोकाच्च्युता नरकाद्वा निर्गताः क्लिष्टपञ्चेन्द्रियतिर्यक्षु तथाविधमनुष्येषु वा एडमूकतया समुत्पद्यन्ते, तथा 'तमोरूवत्ताए'त्ति अन्धबधिरतया प्रत्यायान्ति, ते चोभयोरप्यवस्थयोस्त्रसत्वं न व्यभिचरन्ति, अतो न निर्विषयं प्रत्याख्यानं एतेषु च द्रव्यतोऽपि प्राणातिपातः सम्भवतीति। साम्प्रतं प्रत्यक्षसिद्धमेव विरतेर्विषयं दर्शयितुमाह—

भगवं च णं उदाहु संतेगतिया पाणा दीहाउया जेहिं समणोवासगस्स आयाणसो [ आमरणंताए ] जाव [दंडे] निक्खित्ते [ भवइ ] ते पुव्वामेव कालं करिंति, करित्ता पारलोइयत्ताए पच्चायंति, ते पाणा वि वुच्चंति ते तसा वि [ वुच्चंति ] ते महाकाया ते चिरट्ठितिया ते दीहाउया ते बहुतरगा जेहिं समणोवासगस्स [ सुपच्चक्खायं भवइ ] जाव णो णेयाउए भवति।

व्याख्या—यो हि प्रत्याख्यानं गृह्णाति तस्माद्दीर्घायुष्काः 'प्राणाः' प्राणिनस्ते च नारकमनुष्यदेवा द्वित्रिचतुष्पञ्चेन्द्रियतिर्यञ्चश्च सम्भवन्ति, ततः कथं निर्विषयं प्रत्याख्यानमिति ? शेषं सुगमं यावत् 'णो णेयाउए भवइ'त्ति।

भगवं च णं उदाहु संतेगतिया पाणा भवंति समाउया जेहिं समणोवासगस्स आयाणसो [आमरणंताए] जाव दंडे निक्खित्ते भवइ, ते (पाणा) सममेव कालं करिंति करित्ता पारलोइयत्ताए

पच्चायंति, ते पाणा वि [वुच्चंति] ते तसा [वि वुच्चंति] ते महाकाया ते समाउया [ते बहुतरगा, जेहिं समणोवासगस्स सुपच्चक्खायं भवति, ] जाव नो णेआउए भवति ।

व्याख्या—यः श्रावकस्त्रसवधप्रत्याख्यानं गृह्णन्नस्ति ते न समायुष्का एके प्राणिनः सन्ति ते समयेन कालं कुर्वन्ति सममेव परलोकगतयो भवन्ति, ते समायुष्का अपि त्रसा एव, तेषां श्रावकस्य प्रत्याख्यानं सुप्रत्याख्यानं भवति, यदुच्यते त्वया—नास्ति स कोऽपि पर्यायो यत्र श्रावकस्य प्रत्याख्यानं स्यादपि मुधेति अयंपि भेदे से नो णेआउए ।

भगवं च णं उदाहु संतेगतिया पाणा अप्पाउगा, जेहिं समणोवासगस्स आयाणसो आमरणंताए दंडे [निक्खित्ते भवइ], ते पुव्वामेव कालं करिंति, करित्ता पारलोइयत्ताए पच्चायंति, ते पाणा० ते तसा० ते महाकाया ते अप्पाउया ते बहुतरगा पाणा, जेहिं समणोवासगस्स सुपच्चक्खायं हवइ ते अप्पतरगा जेहिं समणोवासगस्स दुपच्चक्खायं हवइ इति से महया जाव नो णेयाउए भवइ ।

व्याख्या—एके प्राणिनः अल्पायुषः सन्ति तेऽपि त्रसा उच्यन्ते, कृतप्रत्याख्यानाच्छ्रमणोपासकात्पूर्वं म्रियन्ते, तद्विषय प्रत्याख्यानं स्यात्, एतावता बहुतरप्राणविषयं प्रत्याख्यानं अल्पतरप्राणिविषये अप्रत्याख्यान, अथवा यस्मात् श्रावकादल्पायुषः प्राणिनः सन्ति ते यावन्न म्रियन्ते तावत्त्रसविषयं प्रत्याख्यानं स्यात्, ते तु मृत्वा पुनस्त्रसेष्वेवोत्पद्यन्ते तदाऽव्रतोऽपि

द्वितीये श्रुत० सप्तमाध्ययने प्रत्यक्षसिद्धं विरतेर्विषयं दर्शयति ।

प्रत्याख्यानं कथं कथ्यते? विमृश भवद्वचोऽयुक्तमेवेति तत्त्वम् ।
प्रत्याख्यानं स्यात्, अतः श्रावकस्य निर्विषयं प्रत्याख्यानं कथं कथ्यते ? विमृश भवद्वचोऽयुक्तमेवेति तत्त्वम् ।

भगवं च णं उदाहु संतेगतिया समणोवासगा भवंति, तेसिं च णं एवं वुत्तपुव्वं भवइ—नो खलु वयं संचाएमो मुंडे भवित्ता जाव पव्वइत्तए, नो खलु वयं संचाएमो चाउद्दसट्ठमुद्दिट्ठपुण्ण-मासिणीसु पडिपुण्णं पोसहं अणुपालित्तए, नो खलु वयं संचाएमो अपच्छिमं जाव विहरित्तए, वयं णं सामाइयं देसावगासियं पुरत्थापाईणं वा पडीणं वा दाहिणं वा उदीणं वा एतावता जाव सव्वपाणेहिं जाव सव्वसत्तेहिं दंडे निक्खित्ते, सव्वपाणभूयजीवसत्तेहिं खेमंकरे अहमंसि ।

व्याख्या—भगवानाह इत्यादि सुगमम् । यावत् 'वयं णं सामाइयं देसावगासियं'ति देशावकाशिकं पूर्वगृहीतस्य दिग्व्रतस्य योजनशतादिकस्य त[य]त्प्रतिदिनं संक्षिप्ततरं योजनगव्यूतपत्तनगृहमर्यादादिकं परिमाणं विधत्ते तद्देशावकाशिक-मित्युच्यते, तदेव दर्शयति 'पुरत्थापाईण' मित्यादि, प्रातरेव प्रत्याख्यानावसरे दिगाश्रितमेवम्भूतं प्रत्याख्यानं करोति, तथाहि—'प्राचीनं' पूर्वाभिमुखं प्राच्यां दिश्येतावन्मयाऽद्य गन्तव्यं, तथा 'प्रतीचीनं' प्रतीच्यां—अपरस्यां दिशि, तथा दक्षिणाभिमुखं दक्षिणस्यां, तथोदीच्यामुत्तरस्यां वा दिश्येतावन्मयाऽद्य गन्तव्यमित्येवम्भूतं स प्रतिदिनं प्रत्याख्यानं विधत्ते, तेन च गृहीतदेशावकाशिकेन श्रावकेण सर्वप्राणिभ्यो गृहीतपरिमाणात्परेण दण्डो 'निक्षिप्तः' परित्यक्तो भवति, ततश्चा-सौ श्रावकः सर्वप्राणभूतजीवसत्त्वेषु क्षेमङ्करोऽहमस्मीत्येवमध्यवसायी भवति ।

तत्थ आरेणं जे तसा पाणा जेहिं समणोवासगस्स आयाणसो आमरणंताए दंडे निखित्ते, ते ततो आउं विप्पजहंति विप्पजहित्ता तत्थ आरेणं चेव जे तसा पाणा जेहिं समणोवासगस्स, आयाणसो (दंडे निखित्ते) जाव तेसु पच्चायंति, तेहिं समणोवासगस्स सुपच्चक्खायं भवति । ते पाणा वि वुच्चंति ते तसा० महाकाया ते चिरट्ठितीया जाव अयंपि भेदे से नो णेयाउए ॥ १ ॥ [ सू० ११ ]

व्याख्या—'तत्र' गृहीतपरिमाणे देशे ये आरेण त्रसाः प्राणा येषु श्रमणोपासकस्य आदान इत्यादेरारभ्याऽऽमरणान्तो दण्डो 'निक्षिप्तः' परित्यक्तो भवति, ते च त्रसाः प्राणाः स्वायुष्कं परित्यज्य तत्रैव-गृहीतपरिमाणदेश एव योजनादिदेशाभ्यन्तर एव त्रसाः प्राणास्तेषु प्रत्यायान्ति, इदमुक्तं भवति-गृहीतपरिमाणे देशे त्रसायुष्कं परित्यज्य त्रसेष्वेवोत्पद्यन्ते, ततश्च तेषु श्रमणोपासकस्य सुप्रत्याख्यानं भवति, उभयथापि त्रसत्वसद्भावात्, शेषं सुगमं, यावत् 'नो णेआउए भवति'त्ति एवमन्यान्यप्यष्टौ सूत्राणि द्रष्टव्यानि, तत्र प्रथमे सूत्रे तदेव यद् व्याख्यातं, तच्चैवम्भूतं, तद्यथा-गृहीतपरिमाणे देशे ये त्रसास्ते गृहीतपरिमाणदेशा[देशस्था]स्तेष्वेव त्रसेषूत्पद्यन्ते । अथाग्रेतनानि तत्थ आरेणं जे तसा पाणा जेहिं समणोवासगस्स आयाणसो आमरणंताए दंडे निखित्ते, ते ततो आउ विप्पजहंति ते ततो आउं वि०त्ता तत्थ आरेणं चेव जे थावरा पाणा जेहिं समणोवासगस्स अट्ठाए दंडे अणिक्खित्ते अणट्ठाए दंडे निखित्ते तेसु पचायति, तेहिं समणोवासगस्स अट्ठाए दंडे अणिक्खित्ते अणट्ठाए दंडे णिखित्ते, ते पाणा वि वुच्चति ते तसा नि० ते चिरट्ठिइया जाव अयंपि भेदे से० ॥ २ ॥ अयं द्वितीयो भङ्गकः ।

द्वितीये श्रुत० सप्तमाध्ययने प्रत्यक्षसिद्धं विरतेर्विषयं दर्शयति ।

तत्थ जे आरेणं तसा पाणा जेहिं समणोवासगस्स आयाणसो आमरणंताए जाव आउं विप्पजहंति [ विप्पजहित्ता ] तत्थ परेणं जे तसा—थावरा पाणा जेहिं समणोवासगस्स आयाणसो आमरणंताए दंडे निखित्ते, तेसु पच्चायंति, तेहिं समणोवासगस्स सुपच्चक्खायं भवइ । ते पाणा वि जाव, अयं पि भेदे से णो नेयाउए ॥ ३ ॥ तत्थ जे आरेणं थावरा पाणा जेहिं समणोवासगस्स आयाणसो अट्ठाए दंडे अणिक्खित्ते अणट्ठाए निक्खित्ते, ते तओ आउं विप्पजहंति विप्पजहित्ता तत्थ आरेणं चेव जे तसा पाणा जेहिं समणोवासगस्स आयाणसो आमरणंताए० तेसु पच्चायंति, जेहिं [ तेसु ] समणोवासगस्स सुपच्चक्खायं भवति, ते पाणा वि वुच्चंति जाव अयंपि भेदे नो णेयाउए ॥ ४ ॥ तत्थ जे ते आरेणं थावरा पाणा जेहिं समणोवासगस्स अट्ठाए दंडे अणिक्खित्ते अणट्ठाए णिक्खित्ते ते तओ आउं विप्पजहंति विप्पजहित्ता तत्थ आरेणं चेव जे थावरा पाणा, जेहिं समणोवासगस्स अट्ठाए दंडे निखित्ते तेसु पच्चायंति, तेहिं समणोवासगस्स ×सुपच्चक्खायं भवति ते पाणा वि० जाव अयंपि भेदे से नो० ॥ ५ ॥ तत्थ णं जे ते

× एतच्चिन्हान्तर्गतपाठस्थाने " अट्ठाए अणट्ठाए " इत्येवं रूपः प्रत्यन्तरे ।

परेणं थावरा पाणा, जेहिं समणोवासगस्स अट्ठाए दंडे अणिक्खित्ते, अणट्ठाए णिक्खित्ते, ते तओ आउं विप्पजहंति विप्पजाहित्ता ते तत्थ आरेणं चेव जे तसथावरा पाणा जेहिं समणोवासगस्स आयाणसो आमरणंताए० तेसु पच्चायंति, तेहिं समणोवासगस्स सुपच्चक्खायं हवइ, ते पाणा वि० जाव अयंपि भेदे से णो णेयाउए भवति ॥ ६ ॥ तत्थ जे ते परेणं तसथावरा पाणा जेहिं समणोवासगस्स आयाणसो आमरणंताए अट्ठाए अणट्ठाए दंडे निक्खित्ते हवइ, ते तओ आउं विप्पजहंति विप्पजहित्ता तत्थ आरेणं जे तसा पाणा जेहिं समणोवासगस्स आयाणसो आमरणंताए दंडे निखित्ते तेसु पच्चायंति, तेहिं समणोवासगस्स सुपच्चक्खायं हवइ, ते पाणा वि० जाव अयंपि भेदे से णो णेयाउए भवति ॥ ७ ॥ तत्थ जे ते परेणं तसथावरा पाणा जेहिं समणोवासगस्स आयाणसो आमरणंताए अट्ठाए अणट्ठाए दंडे निक्खित्ते, ते ततो आउं विप्पजहंति विप्पजहित्ता तत्थ आरेणं जे थावरा पाणा जेहिं समणोवासगस्स अट्ठाए दंडे अणिखित्ते अणट्ठाए दंडे निखित्ते तेसु पच्चायंति तेहिं समणोवासगस्स सुपच्चक्खायं भवइ, ते पाणावि० जाव अयंपि

भेदे से णो णेयाउए भवति । ॥ ८ ॥ तत्थ जे ते परेणं तसथावरा पाणा, जेहिं समणोवासगस्स आयाणसो आमरणंताए अट्ठाए अणट्ठाए दंडे निक्खित्ते, ते ततो आउं विप्पजहंति विप्पजहित्ता ते तत्थ परेणं चेव जे तसथावरा पाणा जेहिं समणोवासगस्स आयाणसो आमरणंताए दंडे निक्खित्ते तेसु पच्चायंति जे(ते)हिं समणोवासगस्स सुपच्चक्खायं भवइ, ते पाणा वि० जाव अयंपि भेदे से नो णेयाउए भवति ॥ ९ ॥

व्याख्या—गृहीतपरिमाणे देशे ये त्रसास्ते [गृहीतपरिमाणदेशस्थाश्च]स्तेष्वेव त्रसेषूत्पद्यन्ते इति प्रथमो भङ्गकः ॥ १ ॥ द्वितीयं सूत्रं त्वाराद्देशवर्त्तिनस्त्रसा आराद्देशवर्त्तिषु स्थावरेषूत्पद्यन्ते (इति) द्वितीयः ॥ २ ॥ तृतीये त्वाराद्देशवर्त्तिनस्त्रसा गृहीतपरिमाणाद्देशाद्बहिर्ये त्रसाः स्थावराश्च तेषूत्पद्यन्ते अयं तृतीयः ॥ ३ ॥ चतुर्थे त्वाराद्देशवर्त्तिनो ये स्थावरास्ते तद्देशवर्तिष्वेव त्रसेषूत्पद्यन्ते अयं (चतुर्थः) तुर्यः ॥ ४ ॥ पञ्चमसूत्रे तु आराद्देशवर्तिनो ये स्थावरास्ते गृहीतपरिमाणस्थेषु तद्देशवर्तिषु स्थावेरषूत्पद्यन्ते अय पञ्चमः ॥ ५ ॥ षष्ठसूत्रं तु परदेशवर्तिनो ये स्थावरास्ते गृहीतपरिमाणस्थेषु त्रसस्थावरेषूत्पद्यन्ते अयं षष्ठः ॥ ६ ॥ सप्तमसूत्रं त्विदं— परदेशवर्त्तिनो ये त्रसाः स्थावरास्ते आराद्देशवर्त्तिषु त्रसेषूत्पद्यन्ते अयं सप्तमः ॥ ७ ॥ अष्टमसूत्रं तु परदेशवर्त्तिनो ये त्रसाः स्थावरास्ते आराद्देशवर्त्तिषु स्थावरेषूत्पद्यन्ते अष्टमः ॥ ८ ॥ नवमसूत्रे परदेशवर्त्तिनो ये त्रसाः स्थावरास्ते परदेशवर्त्तिष्वेव त्रसस्थावरेषूत्पद्यन्ते नवमोऽयम् ॥ ९ ॥ (एवमनया प्रक्रियया नवापि सूत्राणि मणनीयानि)

तत्र यत्र [यत्र] त्रसास्तत्रादानशः आदेशारभ्य श्रमणोपासकेनामरणान्तो दण्डस्त्यक्त इत्येवं योजनीयं, यत्र तु स्थावरास्तत्रार्थाय दण्डो न निक्षिप्तो-न परित्यक्तः, अनर्थाय च दण्डः परित्यक्त इति। शेषाक्षरघटना तु स्वबुद्ध्या विधेयेति।

भगवं च णं उदाहु ण एयभूयं ण एयं भवं ण एयं भविस्संति जण्णं तसा पाणा वोच्छिज्जिहिंति थावरा पाणा भविस्संति, थावरा पाणा [ वि ] वोच्छिज्जिहिंति तसा पाणा भविस्संति, अव्वोच्छिन्नेहिं तस-थावरेहिं पाणेहिं जण्णं तुब्भे वा अन्नो वा एवं वदह-णत्थि णं से केइ परियाए जाव नो णेआउए भवति। [ सू० १२ ]

व्याख्या—भगवान् गौतमस्वाम्युदकं प्रत्येतदाह तद्यथा-भो उदक! नैतद्भूतमनादिके काले प्रागतिक्रान्ते नाप्यनागामिनि काले चैतद्भविष्यति नाप्येतद्वर्त्तमाने काले भवति यत्त्रसाः सर्वथा निर्लेपतया स्वजात्युच्छेदे नो छेत्स्यन्ति-विच्छेदं यास्यन्ति, सर्वे स्थावरा एव भविष्यन्ति, स्थावराश्च प्राणिनः कालत्रयेऽपि न भविष्यन्ति-विच्छेदं यास्यन्ति, सर्वेऽपि त्रसा भविष्यन्ति। यद्यपि तेषां परस्परसङ्क्रमेण गमनमस्ति तथापि न सर्वप्रकारेण निर्लेपतया त्रसाः सर्वे स्थावरा भवन्ति स्थावराश्च सर्वेऽपि निर्लेपतया त्रसा जायन्ते, नैतद्भवति कदाचिदपि, यदुत-प्रत्याख्यानिनमेकं विहाय परेषां नारकाणां द्वीन्द्रियादीनां तिरश्चां मनुष्यदेवानां च सर्वथाऽप्यभावः, एवं च त्रसविषयं प्रत्याख्यानं निर्विषयं भवति यदि तस्य प्रत्याख्यानिनो जीवत एव सर्वे नारकादयस्त्रसाः समुच्छिद्यन्ते, नायं भावः सम्भवति, स्थावरास्त्वनन्ता न त्रसेषु सम्मान्ति त्रसास्त्वसंख्यातास्ते


गौतम-
स्वाम्युदकं
त्रसाः
प्राणाः
स्थावराश्च
प्राणाः
कदापि
विच्छेदं
न यास्य-
न्तीति
दर्शयति।

स्त्वनन्ताः अनन्ताः कथमसङ्ख्यातेषु सम्मान्ति ? सुप्रतीतमिदं, तदेवमप्यवच्छिन्नैस्त्रसैः स्थावरैश्च प्राणिभिर्यद्वदत यूयमन्यो वा कश्चिद्वदति यन्नास्त्यसौ कश्चित्पर्यायो यच्छ्रावकस्यैकत्रसविषयोऽपि दण्डः परित्यक्तो भवति, तदेतत्सर्वमप्ययुक्तमिव प्रतिभासते । साम्प्रतं उपसंजिघृक्षुराह—

भगवं च णं उदाहु आउसंतो उदगा ! जे खलु समणं वा माहणं वा परिभासे इमित्तिं मन्नंति + आगमित्ता नाणं आगमित्ता दंसणं आगमित्ता चरित्तं पावाणं कम्माणं अकरणयाए से खलु परलोय–पलिमंथत्ताए चिट्ठति, जे खलु समणं वा माहणं वा नो परिभासइ मित्तिं मन्नमाणे × आगमेत्ता नाणं आगमेत्ता दंसणं आगमेत्ता चारित्तं पावाणं कम्माणं अकरणत्ताए से खलु परलोयविसुद्धीए चिट्ठति ।

व्याख्या—श्री गौतमस्वाम्युदकं प्रत्युवाच । आयुष्मन्नुदक ! खलु श्रमणं वा माहनं वा सद्ब्रह्मचर्योपेतं 'परिभाषते' निन्दति मैत्रीं मन्यमानोऽपि तथा सम्यग्ज्ञानमागम्य तथा दर्शनं चारित्रं च पापानां कर्मणामकरणाय समुत्थितः [स]खलु लघुप्रकृतिः पण्डितंमन्यः परलोकस्य सुगतिलक्षणस्य स[त]त्कारणस्य वा सत्संयमस्य वा 'पलिमन्थाय' विघाताय तिष्ठति, यस्तु पुनर्महासत्त्वो रत्नाकरवद्गम्भीरो न श्रमणादीन् परिभाषते तेषु च परमां मैत्रीं मन्यते सम्यग्दर्शनज्ञानचारित्राण्यनुगम्यते

---

+ "मन्नमाणे" इत्यर्थसङ्गत्या युक्तमाभाति । × "मन्नति" इति बहुष्वादर्शेषु ।

तथा पापानां कर्मणां अकरणाय समुत्थितः स खलु परलोकविशुद्ध्यै अवतिष्ठते, स परलोकसाधनाय तिष्ठतीति भावः। एतावता यो बहुश्रुतान् गीतार्थान् पूर्वाचार्यान्निन्दति स परलोकस्य संयमस्य विराधकः यस्तु तादृशान्महागीतार्थान् पूर्वाचार्यान्न निन्दति स परलोकस्य सयमस्य चाराधक इति तत्त्वम्। भो उदक! इति ज्ञात्वा त्वयाऽपि संयमसाधनाय यत्नो विधेयः।

भगवं च णं उदाहु—तते णं से उदए पेढालपुत्ते भगवं गोतमं अणाढायमाणे जामेव दिसं पाउब्भूते तामेव दिसं संपहारेत्थ गमणाए।

व्याख्या—तदेवं यथावस्थितमर्थं गौतमस्वामिनाऽवगमितोऽप्युदकः पेढालपुत्रो यदा भगवन्तं-गौतममनाद्रियमाणो यस्या एव दिशः प्रादुर्भूतस्तामेव दिशं गमनाय सम्प्रधारितवान्। तं च गच्छन्तं दृष्ट्वा भगवान् गौतमस्वाम्याह—

आउस्संतो उदगा! जे खलु तहा[भूतस्स]रूवस्स समणस्स वा माहणस्स वा अंतिए एगमवि आरियं धम्मियं सुवयणं सोच्चा निसम्म अप्पणो चेव सुहुमाते पडिलेहाए अणुत्तरं जोगखेमपयं लंभिए समाणे सोवि ताव तं आढाति परिजाणति वंदति नमंसति सक्कारेति सम्माणेति (जाव) कल्लाणं मङ्गलं देवयं चेइयं पज्जुवासति।

व्याख्या—आयुष्मन्नुदक! यः खलु तथाभूतस्य श्रमणस्य ब्राह्मणस्य वाऽन्तिके-समीपे एकमपि योगक्षेमाय आर्यं

धार्मिकं तथा शोभनवचनं श्रुत्वा निशम्याऽऽत्मन एव तदनुत्तरं योगक्षेमपदमित्येवमवगम्य 'सूक्ष्मया'—कुशाग्रीयया बुद्ध्या 'प्रत्युपेक्ष्य'—पर्यालोच्य तद्यथा—अहमनेनैवम्भूतमर्थपदं 'लम्भितः' प्रापितः सन्नमीतपि तावल्लौकिकस्तमुपदेशदातारमाद्रियते पूज्योऽयमित्येवं जानाति तथा कल्याणं मङ्गलं देवतामिव स्तौति पर्युपास्ते च यद्यप्यसौ पूजनीयः किमपि नेच्छति तथापि तेन [तस्य] परमार्थोपकारिणो यथाशक्ति विधेयमिति। तदेवं गौतमस्वामिनाऽभिहित उदक इदमाह—

तए णं से उदए पेढालपुत्ते भयवं गोयमं एवं वयासी—एतेसि णं भंते ! पदाणं पुव्विं अन्नाणयाए असवणयाए अबोहिए अणभिगमेणं अदिट्ठाणं अस्सुयाणं अमुणयाणं अविन्नायाणं अनिगूढाणं अव्वोगडाणं अवोच्छिन्नाणं अणिसिट्ठाणं अणिवूढाणं अणुवहारियाणं एयमट्ठं नो सद्दहियं नो पत्तियं नो रोइयं एतेसि णं भंते ! पदाणं इण्हिं जाणयाए सवणयाए बोहिए जाव उवहारणयाए एयमट्ठं सद्दहामि पत्तियामि रोएमि एवमेव जहेयं तुब्भे वदह। तएणं भगवं गोतमे उदयं पेढालपुत्तं एवं वयासि—सद्दहाहि णं अज्जे ! पत्तियाहि णं अज्जे ! रोएहि णं अज्जे ! एवमेयं जहा णं अम्हे वदामो। तए णं से उदए पेढालपुत्ते भयवं गोयमं एवं वयासी—इच्छामि णं भंते ! तुब्भ अंतिए चाउज्जामाओ धम्माओ पंचमहव्वइयं सपडिक्कमणं धम्मं उवसंपज्जित्ताणं विहरित्तए। तए णं

से भगवं गोयमे उदयं पेढालपुत्तं गहाय जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छित्ता ततं णं से उदए पेढालपुत्ते समणं भगवं महावीरं तिखुत्तो आयाहिणं पयाहिणं करेइ करेइत्ता वंदइ नमंसइ, वंदित्ता नमंसित्ता एवं वयासी—इच्छामि णं भंते ! तु[ब्भं]ब्भा[तुम्हा]णं अंतिए चाउज्जामाओ धम्माओ पंचमहव्वइयं सपडिक्कमणं धम्मं उवसंपज्जित्ता णं विहरित्तए । [ तए णं समणे भगवं महावीरे उदयं (पेढालपुत्तं) एवं वयासी—] अहासुहं देवाणुप्पिया मा पडिबंधं करेहि। तते णं से उदए पेढालपुत्ते समणस्स भगवओ महावीरस्स अंतिए चाउज्जामाओ धम्माओ पंचमहव्वइयं सपडिक्कमणं धम्मं उवसंपज्जित्ता णं विहरति त्ति बेमि । नालिन्दिज्जाऽज्झयणं समत्तम्।

व्याख्या—इह व्याख्यानं सर्वं सुगमं, विशेषतस्तु बृहद्वृत्तितोऽवसेयमिति ।

समाप्ता चेयं द्वितीयाङ्गस्य दीपिका ।

जयति जिनशासनमिदं, परतीर्थिकतिमिरजालवरतरणिम् । भवजलधियानपात्रं, पात्रं सज्ज्ञानरत्नानाम् ॥ १ ॥
यस्य जिनेन्दोः शासन–पानीयपथाश्वरत्नमारुह्य । कुशलेन के न चापु–र्भवजलमुल्लंघ्य शिवनगरम् ॥ २ ॥
स जयति वीरजिनेन्द्र–स्त्रिभुवनचूडामणिः कृतोद्योतः । कुमुदोल्लासं कुर्वन् मदनखमूर्यांशुभिर्वितितैः ॥ ३ ॥

वर्द्धमानजिनो जीया–ज्जगदानन्ददायकः । द्वादशाङ्गीविधातारो, जयन्तु च गणाधिपाः ॥ ४ ॥
जयन्तु गुरवः पूज्या ये सदा मयि वत्सलाः । परोपकारप्रवणाः, जयन्तु स्वजना अपि ॥ ५ ॥
श्री जिनदेवसूरीणा–मादेशेन चिरायुषाम् । उपजीव्य बृहद्वृत्तिं, कृत्वा नामान्तरं पुनः ॥ ६ ॥
श्री साधुरङ्गोपाध्यायै–र्द्वितीयाङ्गस्य दीपिका । संक्षेपरुचिजीवानां, हिताय सुखबोधिनी ॥ ७ ॥
लिलिखे वरलूग्रामे, निधिनन्दशरैकके (१५९९) वत्सरे कार्त्तिके मासि चतुर्मासिकपर्वणि [त्रिभिः सम्बन्धः] ॥ ८ ॥
ज्ञानदर्शनचारित्र–रत्नत्रितयदीपिका । मिथ्यात्वध्वान्तविध्वंसदीपिकेयं समर्थिता ॥ ९ ॥
मनोमत्सरमुत्सृज्या–ऽऽदृत्यसौजन्यमुत्तमम् । व्यापार्या वाचनीया च, विधायानुग्रहं मयि ॥ १० ॥
लिखता लिखितं किञ्चिद्यदि–न्यूनाधिकं भवेत् । विधाय सम्यक् तत्सर्वं, वाचनीयं विवेकिभिः ॥ ११ ॥
स्तोकाः कर्पूरतरवः, स्तोकाश्च मणिभूमयः । परोपकारप्रवणाः, स्तोकाः प्रायेण सज्जनाः ॥ १२ ॥
न मे कोऽप्यभिमानोऽस्ति, न मे पण्डितमानिता । न कला न च चातुर्यं, मन्दमेधाऽस्मि सर्वथा ॥ १३ ॥
दीपिकायाः स्वभावेन, प्रशस्तिर्निर्मिता मया । क्षूणं तदत्र नो चिन्त्यं, नावमान्यो ह्ययं जनः ॥ १४ ॥
न चात्मीया मतिः कापि, प्रयुक्ताऽस्त्यत्र केवलम् । संक्षेप्य वृत्तेरेवाऽयं सूत्रार्थो लिखितोऽस्त्यहो ॥ १५ ॥
अन्यथाऽहं जडप्रायो, वृत्तिं कर्त्तुं कुतः क्षमः ? । किंनाम पङ्गुरारोढुं, शक्तः स्यान्मेरुमूर्द्धनि ॥ १६ ॥
व्याख्यानं वृत्तिमध्यस्थं, निर्युक्तेरपमार्य च । मूलसूत्रेण संयुक्ता, पुस्तके च निवेशिता ॥ १७ ॥

मया सदाचारपरायणेन, जिनाज्ञया संयमपालनेन ।
यदर्जि पुण्यं सुकृतानुबन्धि, तेनास्तु लोको जिनधर्म्मरक्तः ॥ १८ ॥
धर्मोपदेशदानेन, दीपिकालेखनेन च । सुखी भवतु लोकोऽयं, तेन पुण्येन भूयसा ॥ १९ ॥
यदर्जितं मया पुण्यं, विमलाचलयात्रया । उज्जयन्ते च श्रीनेमेः, पदपङ्कजसेवया ॥ २० ॥
तेन पुण्येन मे भूया-द्बोधिलाभो भवे भवे । यतः सम्यक्त्वसम्प्राप्ति-र्विना पुण्यैर्न लभ्यते ॥ २१ ॥
श्रीमत्खरतरगच्छे, श्रीमज्जिनदेवसूरिसाम्राज्ये । श्रीभुवनसोमसद्गुरु-शिष्यैः श्रीसाधुरङ्गाख्यैः ॥ २२ ॥
लब्धोपाध्यायपदैः, कुशलेनारोपिता प्रमाणपदम् । आचन्द्रार्कं नन्दतु, गीतार्थैर्वाच्यमानेयम् ॥२३॥ (युग्मम्)
विनीतविनयेनेयं, धर्मसुन्दरसाधुना । लिखिता प्रथमादर्शे, वाचनाय स्वपुस्तके ॥ २४ ॥

इति प्रशस्तिः । श्रेयोऽस्तु सपरिवारस्य ।

यादृशं पुस्तकं दृष्टं, तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ १ ॥

—⟶○⟵—

इतिश्री परमसुविहित–खरतरगच्छविभूषण–पाठकप्रवर–श्रीमत्साधुरङ्गगणिवर–गुम्फितायां श्री सूत्रकृताङ्ग-
दीपिकायां समाप्तमिदं नालिन्दीयाख्यं सप्तममध्ययनं तत्समाप्तौ च समाप्तमिदं
सूत्रकृताख्यं द्वितीयमङ्गसूत्रं दीपिकान्वितम् ॥

॥ श्रीकल्याणं भूयात् ॥

॥ ॐ अर्हम् ॥

# सूत्रकृताङ्ग-सूत्र-दीपिका ।



हर्षकुलगणि-रचिता-

प्रणम्य श्रीजिनं वीरं, गौतमादिगुरूंस्तथा । स्वान्योपकृतये कुर्वे, द्वितीयाङ्गस्य दीपिकाम् ॥ १ ॥

इह हि प्रवचने चत्वारोऽनुयोगाः । तथाहि-चरणकरणानुयोगः १, द्रव्यानुयोगः २, धर्मकथानुयोगः ३, गणितानुयोगश्च ४, तत्र प्रथमं श्रीमदाचाराङ्ग चरणकरणानुयोगप्राधान्येन व्याख्यातम् । अथेदं श्रीसूत्रकृताख्य द्वितीयाङ्ग द्रव्यानुयोगप्राधान्येन व्याख्यायते । सूत्रकृताङ्गमिति च कः शब्दार्थः । उच्यते-' सूत्रं ' स्वपरसमयसूचनं कृत येन तत्सूत्रकृत, तदेवाङ्गमिति । तत्र श्रुतस्कन्धद्वयं, प्रथम श्रुतस्कन्धे षोडशाध्ययनानि द्वितीये सप्त । तत्र प्रथमश्रुतस्कन्धस्य प्रथमाध्ययने चत्वार उद्देशकाः, तत्रापि पूर्वं प्रथमोद्देशकः तस्या[य]मादिश्लोकः ।

बुज्झिज्जा० × × × ( सूत्रम् ) ॥ १ ॥

व्याख्या—' बुध्येत ' जानीयात्, किं तत् ? ' बन्धनं ' बध्यते जीवोऽनेन बन्धनं ज्ञानावरणाद्यष्टप्रकारं कर्म तद्धेतवो

मिथ्यात्वादयो वा परिग्रहारम्भादयो वा बन्धनं जानीयादित्युक्तं, न च ज्ञानमात्रेण सिद्धिरित्याह। 'तिउट्टिज्जा-परिजाणिआ' परिज्ञाय त्रोटयेत्-अपनयेत्, आत्मनः पृथक्कुर्यादित्यर्थः। अथ जम्बूस्वामी शिष्यः सुधर्मस्वामिनमाह, किमाहेति, श्रीवीरः किं बन्धनं 'आह' उक्तवान्? किंवा जानन् बन्धनं त्रोटयति? उत्तरमाह ॥ १ ॥

चित्तमंत० × × × (सू०) ॥ २ ॥

व्याख्या—'चित्तवत्' सचित्तं द्विपदचतुष्पदादि, अचित्तं कनकरजतादि द्वयमपि 'परिगृह्य' परिग्रहं कृत्वा 'कृशमपि' स्तोकमपि स्वयं अन्यान् वा ग्राहयित्वा गृह्णतो वाऽन्याननुज्ञाय एवं दुःखान्न मुच्यते, परिग्रह एव परमार्थतोऽनर्थमूलमित्युक्तम् ॥ २ ॥ परिग्रहतश्चारम्भाचो आरम्भस्तस्मिंश्च प्राणातिपात इति दर्शयति।—

सयं० × × × (सू०) ॥ ३ ॥

व्याख्या—अथवा प्रकारान्तरेण बन्धनमेवाह-स परिग्रहवान् 'स्वयं' आत्मना प्राणान् अतिपातयेत्-जीवान् हिंस्यात् अथवा 'अन्यैः' परैरपि घातयति, घ्नतश्चान्याननुजानीते, तदेवं कृतकारितानुमतिभिः प्राणिघातं कुर्वन् आत्मनो वैरं वर्द्धयति, ततश्च बन्धनान्न मुच्यत इति भावः ॥ ३ ॥ पुनर्बन्धनमेवाश्रित्याह—

जंसि कुले० × × × (सू०) ॥ ४ ॥

व्याख्या—यस्मिन् कुले जातो यैर्वा मित्रैर्भार्यादिभिर्वा सह संवसेन्नरः, तेषु मित्रपितृमातृभार्यादिषु 'ममायी'ति ममत्व-

वान् लुप्यते, ममत्वजनितेन कर्मणा बाध्यते 'बालो' मूर्खः, विवेकरहितत्वादन्येषु च 'मूर्च्छितो' ममत्वबहुल इत्यर्थः ॥ ४ ॥

किं जानन् बन्धनं त्रोटयतीत्यस्योत्तरमाह—

**वित्तं सोयरिआ० × × × (सू०) ॥ ५ ॥**

व्याख्या—'वित्तं' द्रव्यं, तच्च सचित्तमचित्तं वा, सोदर्या भ्रातृभगिन्यादयः, सर्वमेतद् वित्तादिकं संसारे पीड्यमानस्य जन्तोर्न त्राणाय न रक्षणाय भवतीति, एतत् 'सङ्ख्याय' ज्ञात्वा तथा जीवितं स्वल्पमिति 'सङ्ख्याय' ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया प्रत्याख्याय कर्मणः सकाशात् 'त्रुट्यति' अपगच्छत्यसौ, तुर्निश्चये, त्रुट्येदेव, यदि वा 'कर्मणा' क्रियया संयमानुष्ठानरूपया बन्धनात् त्रुट्यति-कर्मणः पृथग् भवतीत्यर्थः ॥ ५ ॥

स्वसमयं प्रतिपाद्य परसमयं प्रतिपादयितुकाम आह—

**एए गंथे० × × × (सू०) ॥ ६ ॥**

व्याख्या—'एतान्' पूर्वोक्तान् 'ग्रन्थान्' सूत्रार्थान् 'व्युत्क्रम्य' परित्यज्य 'एके' केचित् श्रमणब्राह्मणाः, श्रमणाः शाक्यादयो ब्राह्मणाश्च 'अयाणंता' परमार्थमजानाना 'विउस्सिअ'त्ति विविधमुत्प्राबल्येन 'सिता' बद्धाः स्वसमयेषु प्रतिबद्धाः सन्तः कामेषु च सक्ता वर्त्तन्त इति ॥ ६ ॥ साम्प्रतं नास्तिकमतमाश्रित्याह—

**संति पंच० × × × (सू०) ॥ ७ ॥**

व्याख्या—सन्ति पञ्चमहाभूतानि इहास्मिल्लोके 'एकेषां' भूतवादिनामाख्यातानि-तत्त्वार्थकृतानि, तैर्भूतवादिभिर्नास्तिकैराख्यातानि स्वयमङ्गीकृतानि परेषां च प्रतिपादितानि, तान्यमूनि 'पुढवी'त्यादि पृथ्वी १ अपो-जलं २ तेजो-अग्निः ३ वायुः ४ आकाशं ५ पञ्चमं येषां तानि। ननु साङ्ख्यादिभिरपि भूतानि मन्यन्त एव तत्कथं चार्वाकमतापेक्षयैव भूतोपन्यास इति चेदुच्यते—साङ्ख्यादिभिर्हि प्रधानाहङ्कारादिकं तथा कालदिगात्मादिकं चान्यदपि वस्तुजातमङ्गीक्रियते, चार्वाकैस्तु भूतव्यतिरिक्तं नात्मादि किञ्चिन्मन्यते इति तन्मताश्रयेणैवायं सूत्रोपन्यास इति ॥७॥ चार्वाकमताङ्गीकारमेनाह—

एते पंच० × × × (सू०) ॥ ८ ॥

व्याख्या—एतानि पञ्च महाभूतानि 'तेभ्यो' भूतेभ्यः कायाकारपरिणतेभ्य एकः कश्चिच्चिद्रूपो भूताऽव्यतिरिक्त आत्मा भवति, न तु कश्चिदपरः परलोकयायी जीवाख्यः पदार्थोऽस्तीत्येवमाख्यातवन्तस्ते। ननु यदि भूतेभ्योऽन्यः कश्चिदात्मा नास्ति कथं तर्हि मृत इति व्यपदेश इत्याशङ्कायामाह—'अह तेसिं'ति, अथ तेषां भूतानां विनाशेऽपगमे देहिनो देवदत्तादेर्विनाशो भवति, ततश्च मृत इत्युच्यते, न पुनर्जीवापगम इति। अत्रैतन्मतनिर्लोठनयुक्तयो वृत्तितोऽवसेयाः ॥ ८ ॥

अथ एकात्माद्वैतवादमुद्दिश्याह—

जहा य० × × × (सू०) ॥ ९ ॥

व्याख्या—यथा, च शब्दोऽपि शब्दार्थे, स च भिन्नः, पृथिव्याः स्तूपः पृथिव्येव वा स्तूपः पृथिवीसङ्घाताख्योऽ-

वयवी, स च एकोऽपि यथा नानारूपः सरित्समुद्रपर्वतनगरग्रामाद्याधारतया विचित्रो दृश्यते, निम्नोन्नतमृदुकठिनरक्तपीतादिभेदेन वा दृश्यते, न च तावता पृथिवीत्वस्यैकस्य भेदो भवति, एवं भो! इति परामन्त्रणं, कृत्स्नोऽपि चेतनाचेतनरूपो लोक एको विद्वान् एक एवात्मा 'विद्वान्' ज्ञानपिण्डः पृथिव्यादिभूताकारतया नाना दृश्यते, न च तावता तस्यैकस्यात्मतत्त्वस्य भेदो भवति ॥ ९ ॥ अस्योत्तरमाह—

एवमेगेति० × × × (सू०) ॥ १० ॥

व्याख्या—एवमात्माद्वैतवादमाश्रिता एके जल्पन्ति 'मन्दा' जडाः, मन्दत्वं चैतेषां युक्तिविकलजीवाद्वैतपक्षाश्रयणात्। तथाहि-यद्येक एवात्मा स्यात्तदा एके कृषीवलादय आरम्भे जीवहिंसात्मके 'निश्रिता' आसक्ताः स्वयं पापं कृत्वा तीव्रं नारकादि दुःखं 'निगच्छइ' त्ति आर्षत्वाद्बहुवचनार्थे एकवचनं, निश्चयेन गच्छन्ति, त एवारम्भसक्ता, नान्ये इत्येतन्न स्यात् यद्येक एवात्मा स्यात्तदा केनाप्यशुभे कर्मणि कृते सर्वेषां दुःखं स्यान्न चैवं दृश्यते, तस्मादेक एवात्मेति न युक्तम् ॥ १० ॥ साम्प्रत तज्जीव-तच्छरीर-वादिमतं पूर्वपक्षयन्नाह—

पत्तेअं कसिणे० × × × (सू०) ॥ ११ ॥

व्याख्या—'प्रत्येकं' प्रतिशरीरमात्मानः 'कृत्स्नाः' सर्वेऽपि ये 'बाला' अज्ञा ये च पण्डितास्ते सर्वेऽपि पृथग् व्यवस्थिताः, नहि एक एवात्मा सर्वव्यापी स्वीकार्यः, बालपण्डितादिविभागाऽभावप्रसङ्गात्। नन्वेवमात्मबहुत्वं जैनैरपि

स्वीक्रियत एव, तत्किमिति परमतमाश्रित्य सूत्रमिदमुच्यते? इत्याशङ्कायामाह–' संति 'त्ति–' सन्ति ' विद्यन्ते जीवाः शरीरं यावत्, शरीराभावे तु न सन्ति, एतदेवाह–' पिच्चा न ते संति ' ' प्रेत्य ' परलोके ते जीवा न सन्ति, तेषां मते शरीराद्भिन्नः परलोकयायी न कश्चिदात्माख्यः पदार्थोऽस्तीति जैनेभ्यो भेदः। किमित्येवं ते मन्यन्त इत्याह–' णत्थि सत्तोववाइआ ' औपपातिका–भवाद्भवान्तरगामिनः सत्त्वाः प्राणिनो ' नत्थि 'त्ति न संति। ननु भूतवादिनोऽस्य च तज्जीव-तच्छरीरवादिनः को भेद? इत्यत्रोच्यते–भूतवादिनो भूतान्येव कायाकारपरिणतानि धावनचलनादिक्रियां कुर्वन्ति, अस्य तु कायाकारपरिणतेभ्यो भूतेभ्यश्चेतनाख्य आत्मोत्पद्यते अभिव्यज्यते वा तेभ्यश्चाऽभिन्न इत्यनयोर्विशेषः ॥ ११ ॥ तन्मतमेवाह—

नत्थि पुण्णे व० × × × ( सू० ) ॥ १२ ॥

व्याख्या—नास्ति पुण्यं पापं च नास्ति, अतो [ नास्ति ] अस्माल्लोकात् परोऽन्यो लोकः परलोको, यत्र पुण्यपापानुभव इति। अत्र हेतुमाह–शरीरस्य विनाशेन ' देहिन ' आत्मनोऽपि विनाशोऽभावो भवति तथा च दर्श्यते तन्मतलेशो, यथा–स्वभावादेव जगद्वैचित्र्यं, यदुक्तम्–" कण्टकस्य च तीक्ष्णत्वं, मयूरस्य विचित्रता। वर्णाश्च ताम्रचूडानां, स्वभावेन भवन्ति हि ॥ १ ॥ " इति ॥ १२ ॥ अथाक्रियावादिमाह—

कुव्वं च० × × × ( सू० ) ॥ १३ ॥

व्याख्या—कुर्वन् कारयंश्च आत्मा न भवति, आत्मनो व्यापकत्वादमूर्त्तत्वाच्च कर्तृत्वानुपपत्ति।' तत एव कारयितृत्वमप्यात्मनो न युक्त, एकश्च 'एवं' शब्दोऽतीतानागतकर्तृनिषेधको द्वितीयः समुच्चयार्थः। कर्तृत्व–कारयितृत्व–निषेधादन्यापि क्रिया तस्य नास्तीत्याह–'सव्वं'ति सर्वां परिस्पन्दादिकां देशाद्देशान्तरप्राप्तिरूपां क्रियां कुर्वन् आत्मा न विद्यते, सर्वव्यापित्वेनामूर्त्तत्वेन चाकाशस्येवात्मनो निष्क्रियत्वं साङ्ख्यमते, एवं 'ते उ'त्ति एवमुक्तप्रकारेण ते साङ्ख्याः प्रगल्भिताः प्रागल्भ्यवन्तो धार्ष्ट्यवन्तो विद्यन्ते ॥ १३ ॥

साम्प्रतं तज्जीव–तच्छरीराकारकवादिनोर्मतं निराकुर्वन्नाह—

जे ते उ वाइणो० × × × (सू०) ॥ १४ ॥

व्याख्या—ये तावच्छरीराव्यतिरिक्तात्मवादिनः 'एवं' पूर्वोक्तयुक्त्या भूताव्यतिरिक्तमात्मानमभ्युपगतवन्तस्ते निराक्रियन्ते, तेषां लोकश्चतुर्गतिभवरूपः सुभगदुर्भगसुरूपकुरूपेश्वरदारिद्र्यादिगत्या जगद्वैचित्र्यरूपः कुतः स्यात्?, आत्मानङ्गीकारे पुण्यपापाभावे कथं विश्ववैचित्र्यरूपमित्यर्थः। ते च नास्तिकास्तमसोऽज्ञानरूपात् तमो यान्ति, ज्ञानावरणावृताः पुनर्ज्ञानावरणरूपं तमः प्रविशन्ति अथवा सद्विवेकात्रध्वंसित्वात्तमो–दुःखं, तस्मात्तमो–महादुःखं यान्ति, यतस्ते मन्दा जडाः परलोकनिरपेक्षत्वाच्चारम्भनिश्रिताः। अयमेव श्लोकोऽकारकवादिमतमाश्रित्य किञ्चिद्विव्रियते–ये वादिनोऽकारकाः–साङ्ख्याः सन्ति, तेषां लोको जरामरणशोकदर्पादिरूपो नारकतिर्यगादिरूपो निष्क्रिये मत्यात्मनि 'कुतः' कस्माद्धेतोः स्यात्? न स्यादित्यर्थः। ततश्च दृष्टेष्टबाधारूपात्तमसोऽज्ञानाच्च 'तमो' वेदनास्थानं यान्ति। यतो मन्दा आरम्भनिश्रि-

ताश्चेति साङ्ख्यमतं निरस्तम् ॥ १४ ॥ अथात्मषष्ठवादिमतमाह—

संति पंच० × × × × ( सू० ) ॥ १५ ॥

व्याख्या—सन्ति पञ्च महाभूतानि इहास्मिन् संसारे ' एकेषां ' आत्मषष्ठवादिनां साङ्ख्यानां वैशेषिकाणां च एतदाख्यातं, भूतान्याख्यातानि वा । ते पुनर्वादिन एवमाहुः-पञ्चभूतानि आत्मषष्ठानि-आत्मा षष्ठो येषां तान्यात्मषष्ठानि, केषाञ्चिद्वादिनामनित्यानि भूतान्यात्मा च न तथा एषामित्याह-आत्मा लोकश्च पृथिव्यादिरूपः शाश्वतो-नित्यः ॥ १५ ॥ शाश्वतत्वमेवाह—

दुहतो ते ण० × × × ( सू० ) ॥ १६ ॥

व्याख्या—' ते ' भूतपदार्था आत्मषष्ठा ' उभयतो ' निर्हेतुकसहेतुकविनाशाभ्यां न विनश्यन्ति, बौद्धानां मते घटादिवस्तु हेतुं विनाऽपि क्षणे क्षणे विनश्यति, वैशेषिकाणां तु लकुटादियोगेन घटादीनां विनाशः, तेन द्विविधेनापि विनाशेन लोकात्मनोर्न विनाश इति तात्पर्यार्थः । यदिवा द्विरूपाच्चेतनाचेतनस्वभावान्न विनश्यन्ति, आत्मा चेतनस्वभावान्न विनश्यति, पृथिव्याद्या लोकाश्चाचेतनस्वभावान्न विनश्यतीति, न चोत्पद्यतेऽसत्-अविद्यमान, सर्वेऽपि भावाः सर्वथा नियतिभावं नित्यत्वमागताः-प्राप्ताः ॥ १६ ॥ अथ बौद्धमतमाह—

पंचखंधे० × × × ( सू० ) ॥ १७ ॥

व्याख्या—एके बौद्धाः पञ्च स्कन्धान् वदन्ति । रूपस्कन्धः १, वेदनास्कन्धः २, विज्ञानस्कन्धः ३, सञ्ज्ञास्कन्धः ४, संस्कारस्कन्धः ५ । तत्र रूपस्कन्धः पृथिवीत्वादयो रूपादयश्च १, वेदनास्कन्धः सुखदुःखा अदुःखसुखा च वेदना २, विज्ञानस्कन्धो रूपविज्ञानं रसविज्ञानमित्यादि ३, सञ्ज्ञास्कन्धः 'सञ्ज्ञा' निमित्तोद्ग्रहणात्मकः प्रत्ययः, सविकल्पकं ज्ञानमित्यर्थः ४, संस्कारस्कन्धः पुण्यापुण्यादि धर्मसमुदायः ५, न चैतेभ्योऽन्यः कश्चिदात्माख्यो पदार्थोऽस्तीति 'बाला' मूर्खास्ते, ते स्कन्धाः किंभूताः ? क्षणयोगिनः, क्षणे क्षणे विनश्वरा इत्यर्थः । पूर्ववादिभ्यो बौद्धव्यतिरेकमाह । 'अण्णो' त्ति यथा साङ्ख्यादयो भूतेभ्योऽन्यमात्मानमङ्गीकृतवन्तः, यथा च चार्वाकाः भूतेभ्योऽन्यमभिन्नमात्मानमिष्टवन्तस्तथा बौद्धा नैवाहुर्नोक्तवन्तः तथा हेतुभ्यो जातो हेतुकः—कायाकारपरिणतभूतनिष्पादितः, तथाऽहेतुको नित्य, इत्येवं तमात्मानं बौद्धा नाङ्गीकृतवन्त इति ॥ १७ ॥ तथाऽन्ये चतुर्धातुकं जगद्बौद्धा वदन्तीत्याह—

पुढवी आऊ० × × × (सू०) ॥ १८ ॥

व्याख्या—पृथिवी धातुः 'आपो' जलं धातुः, तथा तेजोवायुश्चेति धातवः एते चत्वारोऽपि धातवो यदा 'एक्का उ' त्ति एकाकारपरिणतास्तदाकारतया जीवाख्यां लभन्ते, एवमाहु 'जाणका:' पण्डितंमन्या बौद्धाः 'एवमाहंसु आवरे' इति क्वचित्पाठः तत्र 'आवरे' त्ति अपरे बौद्धा इत्यर्थः ॥ १८ ॥

अथ पूर्वोक्तं सर्वं दुर्मतीनामफलत्वं स्वदर्शनाङ्गीकारं च दर्शयन्नाह—

अगारमावसंता वि० × × × (सू०) ॥ १९ ॥

व्याख्या—'अगारं' गृहमावमन्तस्तिष्ठन्तो गृहस्था, आरण्या वा तापसादयः, प्रव्रजिताश्च शाक्यादयः, अपि सम्भावने, इदं ते सम्भावयन्ति, यथा-इदमस्मदीयं 'दर्शनं' मतमापन्ना-आश्रिताः सर्वदुःखेभ्यो जीवा विमुच्यन्त इति ते वदन्ति ॥१९॥

अथ तेषां निष्फलत्वमाह—

तेणावि संधिं० × × × (सू०) ॥ २० ॥ ॥ २१ ॥ ॥ २२ ॥ ॥ २३ ॥ ॥ २४ ॥ ॥ २५ ॥

व्याख्या—ते पञ्च पञ्चभूतवाद्याद्याः सन्धिं ज्ञानावरणादि कर्मविवररूपं नापि नैव ज्ञात्वा, अज्ञात्वा इत्यर्थः । णं वाक्यालङ्कारे यथा जीवकर्मणोः सन्धिर्भिन्नत्वं भवति तथाऽज्ञात्वा मोक्षार्थं प्रवृत्ता इत्यर्थः । सन्धिर्द्विविधः द्रव्यसन्धिः कुड्यादेः भावसन्धिः कर्मविवररूपस्तं उत्तरोत्तरपदार्थपरिज्ञानं वा सन्धिस्तं अज्ञात्वा प्रवृत्ताः । ते किं भूता ? इत्याह-'न ते'त्ति, ते जना-लोका न सम्यग् धर्मविदः, ये तु ते एवंविधवादिनस्ते 'ओघो' भवौघः, संसारस्तत्तरणशीला न आख्याता जिनैः । अग्रेतनाः पञ्च श्लोकाः एवमेव व्याख्येयाः । पर संसार १, गर्भ २, जन्म ३, दुःख ४, मार ५, पारगा न भवन्तीति ज्ञेयम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

ते यत् प्राप्नुवन्ति तदाह—

णाणाविहाइं० × × × (सू०) ॥ २६ ॥

व्याख्या—' नानाविधानि ' अनेकप्रकाराणि दुःखानि अनुभवन्ति पुनः पुनः संसारचक्रवाले मृत्युव्याधिजराभिराकुले–व्याप्ते ॥ २६ ॥ तेषां दुःखफलमुपसंहारं चाह—

उच्चावयाणि० × × × ( सू० ) ॥ २७ ॥

व्याख्या—' उच्चावचानी 'ति अधमोत्तमानि स्थानानि ' गच्छन्तो ' भ्रमन्तो गर्भाद्गर्भमेष्यन्ति–यास्यन्त्यनन्तशः । ' नायपुत्ते 'त्ति ' ज्ञातः ' सिद्धार्थक्षत्रियस्तस्य पुत्रः श्रीमहावीरो जिन एवमुक्तवान् इति । ब्रवीमीति सुधर्मास्वामी जम्बूस्वामिन प्रत्याहेति ॥ २७ ॥

इति श्रीसूत्रकृते द्वितीयाङ्गे प्रथमाध्ययने प्रथमोद्देशकव्याख्या सम्पूर्णा ॥ १ ॥

उक्तः प्रथमोद्देशः, अथ द्वितीयोद्देशकः कथ्यते । तस्यायमर्थसम्बन्धः आद्योद्देशके भूतवादा[द्या]दिमतं प्रदर्श्य निराकृतं, इहाप्यवशिष्टं तदेवोपदर्श्य निराक्रियत इत्यनेन सम्बन्धेनागतस्यास्योद्देशकस्य सूत्रं यथा—

आघायं पुण० × × × ( सू० ) ॥ १ ॥

व्याख्या—पुनः ' एकेषां ' नियतिवादिनामेतदाख्यातं, आख्यातमित्यत्र भावे क्त प्रत्ययः, तद्योगे च " वा क्लीब " इति कर्त्तरि षष्ठी । ततश्च नियतिवादिभिरिदमाख्यातमित्यर्थः । किं तदित्याह–' उववण्ण 'त्ति ' उपपन्ना ' युक्त्या घटमानाः ' पृथक् ' अनेके जीवाः जीवसत्त्वे पञ्चभूततच्छरीरवादिमतं निराकृतं पृथगित्यनेन आत्माऽद्वैतवादिनिरासश्च ।

तेऽनेके जीवाः सुख दुःखं देवनारकादिभवेषु 'वेदयन्ति' अनुभवन्ति, अनेनाकर्तृवादो निरस्तः। 'अदुवे'त्ति अथवा 'लुप्यन्ते' स्थानात् स्थानान्तरं सङ्क्राम्यन्ते, एतेनोपपातिकत्वमप्युक्तम् ॥ १ ॥ नियतिवादिमतमेवाह श्लोकद्वयेन—

न तं सयं कडं० × × × (सू०) ॥ २ ॥

न सयं कडं न० × × × (सू०) ॥ ३ ॥

व्याख्या—यत्तैः प्राणिभिरनुभूयते सुखं दुःखं स्थानविलोपनं वा, न ते तत्स्वयं—आत्मना पुरुषाकारेण कृत दुःखं, दुःखस्य चोपलक्षणात्सुखमपि ग्राह्यं, सुखदुःखानुभवः पुरुषकारकृतो न स्यादित्यर्थः। अनेन कालेश्वरस्वभावकर्मादिना च कृतः कृतं। णमित्यलङ्कारे। कालादिभिरपि न कृतमित्यर्थः किन्तु नियतेरेव निष्पद्यते सर्वमिति। ततः सुखं सैद्धिकं, सिद्धौ—मोक्षे भवं सैद्धिकं, यदि 'वा' दुःख असैद्धिकं—सांसारिकं, अथवा सैद्धिकमसैद्धिक व सुख, यथा स्रक् चन्दनाङ्गनाद्युपभोगक्रिया, सिद्धौ भवं सैद्धिक, आन्तरं सुखमानन्दरूपमसैद्धिकं तथा सैद्धिकमसैद्धिकं च दुःख, यथा कशाताडनाङ्कनादिक्रियासिद्धौ भव सैद्धिकं—ज्वरशिरोर्तिशूलादिरूपमङ्गोत्थमसैद्धिकं दुःख। एतदुभयमपि सुखं दुःखं च न पुरुषाकारकृतं न चान्यैः कालादिभिः कृतं वेदयन्त्यनुभवन्ति पृथग् जीवाः, कथं तर्हि प्राणिनो सुखं दुखं च स्यादित्याह—'संगइम'ति सम्यग् स्वपरिणामेन गतिर्यस्य यदा यत्र यत्सुखदुःखानुभवनं सा सङ्गतिर्नियतिस्तस्या भवं साङ्गतिकं, नियतिकृतमित्यर्थः ॥ ३ ॥ इहास्मिन् सुखदुःखानुभववादे एकेषां नियतिवादिनामिदमाख्यातं यदुक्तं तैः—

" प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः, सोऽवश्यं भवति नृणां शुभोऽशुभो वा।
भूतानां महति कृतेऽपि हि प्रयत्ने, नाभाव्यं भवति न भाविनोऽस्ति नाशः ॥ १ ॥" इति ॥ ३ ॥

अस्योत्तरमाह—

एवमेयाणि० × × × (सू०) ॥ ४ ॥

व्याख्या—एवमेतानि पूर्वोक्तानि वचनानि जल्पन्तो नियतिवादिनो 'बाला' मूर्खाः, पण्डितमानिनः, स्वयमपण्डिता अपि आत्मानं पण्डितं मन्यमानाः। पुनः किम्भूताः? नियता नियतमजानन्तः, किञ्चिन्नियतिकृतमवश्यम्भावि नियतं, आत्मपुरुषाकारेश्वरादिकृतं किञ्चिदनियत, एवं द्विविधं वस्तु अजानन्तो नियतिकृतमेवैकान्तेनाश्रयन्तः। अत एवाऽबुद्धिकाः-बुद्धिरहिता भवन्ति, पुरुषाकारादयोऽपि वस्तूत्पादकाः, यतः। 'न दैवमिति सञ्चिन्त्य, त्यजेदुद्यममात्मनः। अनुद्यमेन कस्तैलं, तिलेभ्यः प्राप्तुमर्हति? ॥ १ ॥" इति। इत्याद्यजानन्तोऽत एव निर्बुद्धिकाः ॥ ४ ॥ एतद्वादिनामपायमाह—

एगमेगे उ० × × × (सू०) ॥ ५ ॥

व्याख्या—एवमेके नियतिवादिनः पार्श्वस्था युक्तिसमूहाद्बहिस्तिष्ठन्तीति पार्श्वस्थाः परलोकक्रियापार्श्वस्था वा, अथवा 'पाशः' कर्मबन्धनं तत्र स्थिताः, 'ते भुज्जो'त्ति ते भूयो विविधं 'प्रगल्भिताः' धार्ष्ट्योपेताः, नियतिवादमङ्गीकृत्यापि एवं पुनरपि स्वकार्ये परलोकक्रियासु च प्रवर्त्तमाना अत एव धार्ष्ट्योपेताः न ते दुःखविमोचकाः आत्मानं

दुःखान्न मोचयन्ति ॥ ५ ॥ नियतिवादिनो गता, अथाऽज्ञानिमतमाह—

जविणो मिगा० × × × ( सू० ) ॥ ६ ॥

व्याख्या—यथा 'जविनो' वेगवन्तः सन्तो मृगाः 'परित्राणेन' शरणेन 'तर्जिता' रहिताः, अथवा 'परितानं' वागुरादिबन्धनं, तेन 'तर्जिता भयभ्रान्तिताः सन्तोऽशङ्कितानि स्थानानि शङ्कन्ते, भयभ्रान्ताः सन्तो निर्भयान्यपि स्थानानि सभयतया मन्यन्ते शङ्कितानि च वागुरादीनि अशङ्कमानाः 'सम्पर्यन्त' इत्युत्तरसूत्रेण सम्बन्धः ॥ ६ ॥

परियाणियाणि० × × × ( सू० ) ॥ ७ ॥

व्याख्या—परित्राणं सञ्जातं येषु तानि परित्राणितानि-शरणभूतानि स्थानानि मूढत्वात् शङ्कमानाः-सभयानि मन्यमानाः 'पाशितानि' पाशयुक्तानि अशङ्कमानास्तेषु अज्ञानमूढाः अज्ञानेन भयेन च 'संलिग'त्ति सम्यग् व्याप्तास्तत्र तत्र वागुरादिके बन्धने सम्पर्यन्ते, स्वकीयाज्ञानपरिणामात् अपाये गच्छन्तीति ॥ ७ ॥ इममेव दृष्टान्तमाश्रित्याह—

अह तं पवेज्ज० × × × ( सू० ) ॥ ८ ॥

व्याख्या—अथानन्तरमसौ मृगस्तद् 'वज्झं'ति 'वध्रं' बन्धनकारणं रज्जुवागुरादिबन्धं वा यदि 'प्लवेत्' उपरि गच्छेत् 'वा' अथवा वध्रस्य अधो व्रजेत् तदा 'पदपाशात्' वागुरादिबन्धनान्मुच्यते, एवं सन्तमपि तमनर्थपरिहरणोपायं 'मन्दो' जडो न 'देहती'ति न पश्यति ॥ ८ ॥ पाशमपश्यतो याऽवस्था स्यात्तामाह—

अहिअप्पाऽहि० × × × (सू०) ॥ ९ ॥

व्याख्या—स मृगोऽहितात्मा, तथाऽहितं 'प्रज्ञानं' बोधो यस्य सोऽहितप्रज्ञानो 'विषमान्तेन' कूटपाशादियुक्तेन प्रदेशेनोपागतः, अथवा 'विषमान्ते' कूटपाशे आत्मानमनुपातयेत्, तत्र चासौ बद्धः पदपाशादीनऽनर्थबहुलान् अवस्था-विशेषान् प्राप्तस्तत्र बन्धने 'घातं' विनाशं 'निगच्छति' प्राप्नोति ॥ ९ ॥ दृष्टान्तयोजनामाह—

एवं तु समणा० × × × (सू०) ॥ १० ॥

व्याख्या—'एवं' पूर्वोक्तमृगदृष्टान्तेन, तुरवधारणे, एके श्रमणाः पाखण्डाश्रिता मिथ्यादृष्टयोऽनार्या असदनुष्ठाना अशङ्कितानि धर्मानुष्ठानानि शङ्कमानास्तथा शङ्कितानि-एकान्तपक्षाश्रयणानि अशङ्किनो मृगा इवानर्थभाजः स्युः ॥ १० ॥ शङ्किताशङ्कितविपर्यासमाह—

धम्मपण्णवणा० × × × (सू०) ॥ ११ ॥

व्याख्या—'धर्मप्रज्ञापना' क्षान्त्यादि दशविधधर्मप्ररूपणा या सा प्रसिद्धा तां शङ्कन्ते, असद्धर्मप्ररूपणेयमिति मन्यन्ते, आरम्भांश्च-पापोदानभूतान् न शङ्कन्ते, यतो 'अव्यक्ता' मुग्धाः सदऽसद्विवेकविकला 'अकोविदाः' अपण्डिताः सच्छास्त्रावबोधविधुराः ॥ ११ ॥ तेषां सत्फलाभावमाह—

सव्वप्पगं० × × × (सू०) ॥ १२ ॥

व्याख्या—' सवतिमक्रो ' लोभस्तं ' व्युत्कर्षो ' मानस्तं गर्वं नूमं 'ति मायां तथा ' अप्पत्तियं 'ति क्रोधस्तं च विधूय ' अकर्मांशः ' न विद्यते कर्मांशो यस्य सोऽकर्मांशः स्यात् । अकर्मांशत्वं च ज्ञानाद्भवति नाज्ञानादित्याह—' एय-मट्ठं 'ति एवमर्थं कर्माभावरूपं मृग इव मृगो अज्ञानी ' चुए 'त्ति त्यजेत् ॥ १२ ॥ भूयोऽप्यज्ञानवादिनां दोषमाह—

जे एतं नाभि० × × × (सू०) ॥ १३ ॥

व्याख्या—य एतं कर्मक्षपणोपायं न जानन्ति मिथ्यादृष्टयोऽनार्यास्ते मृगा इव पाशबद्धा ' घातं ' विनाशमेष्यन्ति-यास्यन्ति अन्वेषयन्ति वा, तद्योग्यक्रियाकरणात् ' अनंतसो ' निरन्तरम् ॥ १३ ॥ अज्ञानवादिनामेव दूषणान्तरमाह—

माहणा० × × × (सू०) ॥ १४ ॥

व्याख्या—एके ब्राह्मणास्तथा ' श्रमणाः ' परिव्राजकाः सर्वे स्वकमात्मीयं ज्ञानं वदन्ति, न च तानि सर्वेषां ज्ञानानि, अन्योन्यविरोधेन प्रवृत्तत्वात्, तस्मादज्ञानमेव श्रेय इत्याह ' सव्वलोयंसि 'त्ति सर्वस्मिल्लोके ये ' प्राणाः ' प्राणिनस्ते ' किञ्चन ' सम्यग् न जानन्ति ॥ १४ ॥ अथ दृष्टान्तमाह—

मिलक्खू० × × × (सू०) ॥ १५ ॥

व्याख्या—यथा ' म्लेच्छोऽनार्यः ' अम्लेच्छस्यार्यस्य ' यदुक्तं भाषितं, तदनुभाषते, परमार्थशून्यं तद्भाषित-मेवानुभाषते, न च हेतुं विजानाति ॥ १५ ॥ दार्ष्टान्तिके योजयति—

एवमन्नाणिआ० × × × (सू०) ॥ १६ ॥

व्याख्या—एव'मज्ञानिकाः' सम्यग्ज्ञानरहिताः 'स्वकं आत्मीयं ज्ञानं प्रमाणत्वेन वदन्तोऽपि निश्चयार्थं न जानन्ति । 'इव' यथा म्लेच्छो निश्चयार्थमजानन् परोक्तमनुवदत्येवं तेऽपि 'अबोधिका' बोधरहिताः, ततोऽज्ञानमेव श्रेय इति ॥ १६ ॥ इदानीमेतद्दूषणायाह—

अण्णाणिआण० × × × (सू०) ॥ १७ ॥

व्याख्या—'अज्ञानिकानां' अज्ञानमेव श्रेय इति वादिनां यो 'विमर्शो' विचारः स अज्ञानेऽज्ञानविषये 'न नियच्छति' न युज्यते, यतो ज्ञानं सत्यमसत्यं वेति विमर्शः अज्ञानेन कृतेऽपराधे स्वल्पो दोषः, ज्ञानेन कृते महान् दोष इत्येवंभूतो विचारोऽपि तेषां न युज्यते, एवंविधविचारस्य ज्ञानरूपत्वादिति, अज्ञानवादे विचारो न युज्यते । तथा आत्मनोऽपि परं प्रधानमज्ञानवादं 'शासितु'मुपदेष्टुं 'नालं' न समर्थाः, स्वयमज्ञत्वात्, कुतो अन्येषां शिष्याणामुपदेष्टुं समर्था भवेयुः ॥ १७ ॥ यथा ते आत्मनः परेषां च शिक्षणेऽसमर्थास्तथा दृष्टान्तेनाह—

वणे मूढो० × × × (सू०) ॥ १८ ॥

व्याख्या—वनेऽरण्ये यथा कश्चिन्मूढो जन्तुर्मूढमेव 'नेतारं' प्रापकमनुगच्छति आश्रयति, तदा तौ द्वावपि 'अकोविदौ' मार्गानिपुणौ सन्तौ तीव्रं श्रोतो गहनं शोकं वा 'नियच्छतः' प्राप्नुतः ॥ १८ ॥ दृष्टान्तान्तरमाह—

अंधो अंधं० × × × (सू०) ॥ १९ ॥

व्याख्या—यथाऽन्धः स्वयमन्यमन्धं पन्थानं नयन् 'दूरमध्वानं' वाञ्छितमार्गादन्यं दूरं मार्गं गच्छति। तथा 'उत्पथं' उन्मार्गमापद्यते 'जन्तुः' प्राणी अन्धः। अथवा पर पन्थानमनुगच्छेन्न वाञ्छितम् ॥ १९ ॥ दार्ष्टान्तिकमर्थमाह—

एवमेगे० × × × (सू०) ॥ २० ॥

व्याख्या—'एवं' पूर्वोक्तार्थेन एके मानपूढा 'नियागो' मोक्षः सद्धर्मो वा, तदर्थिनस्ते किल वयं धर्माराधका इति जानन्तो अधर्मं पापमेव 'आपज्जेरन्' प्राप्नुवन्ति। तथा तेऽप्यदनुष्ठाना आजीविकादयो गोपालकमतानुसारिणोऽज्ञानवाद-प्रवृत्ताः। सर्वथा ऋजुः 'सव्वज्जुः' संयमः सद्धर्मो वा, तं न व्रजेयुर्न गच्छन्ति, न प्राप्नुवन्तीत्यर्थः। अथवा 'सव्वज्जुयं' सत्यं अज्ञानान्धा न वदेयुः ॥ २० ॥ दूषणान्तरमाह—

एवमेगे० × × × (सू०) ॥ २१ ॥

व्याख्या—'एवं' पूर्वोक्तनीत्या 'एके'ऽज्ञानवादिनो 'वितर्काभि'र्मीमांसाभिः स्वमतिकल्पनाभिः परमन्यं जैनादिकं न पर्युपासते न सेवन्ते, स्वमतमेव श्रेय इति ज्ञात्वा तदेव सेवन्ते, नान्यं ज्ञानादिवादिनं, तथा 'अप्पणो'त्ति आत्मीयैर्वितर्कैः सविचारैरयमस्मदीयो मार्गो 'अञ्जु' निर्दोषत्वाद् व्यक्तः स्पष्टः ऋजुर्वा प्रगुणोऽकुटिलः द्विर्यस्माच्चे दुर्मतयस्तत एवमाहुः ॥ २१ ॥ पुनस्तेषामेव दोषमाह—

एवं तक्काइ० × × × (सू०) ॥ २२ ॥

व्याख्या—एवं पूर्वोक्तन्यायेन 'तर्कया' स्वकल्पनया 'माधयन्तो' वदन्तो धर्माधर्मयोरकोविदाः दुक्खं ते नातित्रोटयन्ति न अतिशयेनापनयन्ति, यथा शकुनिः पञ्जरं-पक्षी पञ्जरस्थो यथा पञ्जरं त्रोटयितुं बन्धनादात्मानं मोचयितुं न समर्थ, एवममावपि संमारपञ्जरादात्मानं मोचयितुं नालम् ॥ २२ ॥ अथ एकान्तवादिमतं दूषयन्नाह—

सयं सयं० × × × (सू०) ॥ २३ ॥

व्याख्या—स्वकं स्वकमात्मीयमात्मीयं मतं प्रशंमन्तः । परकीया वाचं 'गर्हन्तो' निन्दन्तः, यथा साङ्ख्या नित्यवादिनो बौद्धं क्षणिकवादिनं निन्दन्ति, तेऽपि साङ्ख्यान्, एवमन्येऽपि ज्ञेयाः, एवं एकान्तवादिनो ये 'तु' स्ववधारणे, तत्र तेष्वेव स्वमतेषु 'विद्वस्यन्ते' विद्वांम इवाचरन्ति । ते संमारं व्युच्छ्रिताः, विविधमनेकप्रकारमुत्प्राबल्येन श्रिताः संमारे सम्बद्धा उषिताः स्युः ॥ २३ ॥ अथ क्रियावादिमतमाह—

अहावरं० × × × (सू०) ॥ २४ ॥

व्याख्या—अथाऽपरं 'पूर्वमाख्यात' पूर्वसूचितं क्रियावादिदर्शनं, किम्भूताः क्रियावादिन ? इत्याह-'कम्मचिंत'त्ति कर्मणि ज्ञानावरणादिके चिन्ता कर्मचिन्ता, ततः 'प्रणष्टा' अपगता, यतस्ते चतुर्विधं कर्मबन्धं नेच्छन्ति, ततः कर्मचिन्ताप्रणष्टास्तेषामिदं मतं संमारस्य प्रवर्द्धनं स्यात् ॥ २४ ॥ कर्मचिन्तानष्टत्वमेवाह—

जाणं काएणऽट्टी० × × × ( सू० ) ॥ २५ ॥

व्याख्या—जानन् यः प्राणिनो हिनस्ति 'कायेन' शरीरेण चा'ऽनाकुट्टी' अहिंसकः, कोऽर्थः ? कोपादेर्निमित्तान् मनोव्यापारेण जीवान् हन्ति, न कायेन, तस्यानवद्यं, कर्मोपचयो न स्यादित्यर्थः । तथाऽबुधोऽजानन् कायेन हिनस्ति तस्यापि मनोव्यापाराभावान्न कर्मबन्धः 'पुट्ठो'त्ति तेन कर्मणाऽसौ केवलमनोव्यापारकृतेन केवलकायक्रियोत्थेन वा स्पृष्ट एव वेदयति, स्पर्शमात्रेणैव तत्कर्मानुभवति, न तस्याधिको विपाकः, स्पर्शानन्तरमेव परिशटतीत्यर्थः ॥ २५ ॥

एवं तत्सावद्यं कर्म अव्यक्तमेव, न स्पष्टं, कथं तर्हि कर्मोपचयः स्यादित्याह—

संतिमे तउ० × × × ( सू० ) ॥ २६ ॥

व्याख्या—सन्त्यमूनि त्रीणि 'आदानानि' कर्मोपादानानि, यैः पापकर्म क्रियते, तान्याह–'अभिक्रम्य' सन्मुखं गत्वा स्वयं हन्ति १, परं प्रेष्य परकारयति २, कुर्वन्तं वा मनसाऽनुजानीते ३, एतत्कर्मोपादानत्रयम् । अयम्भावः–केवलं मनसा शरीरेण वा न कर्मबन्धः, किन्तु यत्र स्वयं कृतकारिताऽनुमतयः क्लिष्टाध्यवसायश्च तत्रैव कर्मबन्धः ॥ २६ ॥ एतदेव दर्शयति—

एए उ तउ० × × × ( सू० ) ॥ २७ ॥

व्याख्या—तुरवधारणे, एतान्येव त्रीणि व्यस्तानि समस्तानि कर्मादानानि, यैः पापं कर्म क्रियते । एवं सति यत्र

कृतकारितानुमतयः प्राणिहिंसायां न सन्ति, तत्र भावविशुद्ध्या-रागद्वेषरहितबुद्ध्या प्रवर्त्तमानस्य सत्यपि प्राणातिपाते केवलेन मनसा मनोव्यापाररहितेन कायेन उभयेन वा विशुद्धबुद्धेर्न कर्मबन्धस्तदभावान्निर्वाणमभिगच्छति-प्राप्नोति ॥२७॥ भावशुद्ध्या प्रवर्त्तमानस्य हिंसायामपि कर्मबन्धो न स्यादित्यत्रार्थे दृष्टान्तमाह—

पुत्तं पिया० × × × (सू०) ॥ २८ ॥

व्याख्या—पिता पुत्रं 'समारभ्य' व्यापाद्य आहारार्थं कस्याञ्चित्तथाविधायामापदि रागद्वेषरहितो 'असंयतो' गृहस्थस्तन्मांसं भुंजानोऽपि, च शब्दोऽप्यर्थे, मेधावी संयतोऽपि भुञ्जानः कर्मणा नोपलिप्यते, यथा पितुः पुत्रं व्यापादयतोऽपि शुद्धमनसः कर्मबन्धो न स्यात्तथा तस्यारक्तद्विष्टस्य प्राणिवधे न कर्मबन्धः ॥ २८ ॥ एतद् दूषयन्नाह—

मणसा जे० × × × (सू०) ॥ २९ ॥

व्याख्या—ये कुतोऽपि हेतोर्मनसा 'प्रदुःष्यन्ति' प्रद्वेषं यान्ति तेषां वधपरिणतानां शुद्धं चित्तं न विद्यते । एवं च यत्तैरुक्तं केवलमनः प्रद्वेषेऽपि 'अनवद्यं' पापाभाव इति तत्तेषामतथं-मिथ्या, यतस्ते न संवृतचारिणः, मनसोऽशुद्धत्वात् । तथाहि-कर्मबन्धे मुख्यो हेतुर्मन एव, यथा इर्यापथेऽनुपयुक्तो गच्छन् कर्मबन्धकः, उपयुक्तस्तु सहसाहिंसकोऽपि न कर्मबन्धक इति ततः पुत्रं पितेति दृष्टान्तो न समीचीन इति ॥ २९ ॥ अथ तेषामनर्थमाह—

इच्चेयाहिं० × × × (सू०) ॥ ३० ॥

व्याख्या—इत्येताभिः पूर्वोक्ताभिर्दृष्टिभिर्मतैस्ते वादिनः सातगौरवनिश्रिताः इदमस्मन्मतं शरणमिति मन्यमाना नराः पापमेव सेवन्ते कुर्वन्ति ॥ ३० ॥ अत्रार्थे दृष्टान्तमाह—

जहा अस्साविणिं० × × × (सू०) ॥ ३१ ॥

व्याख्या—'आश्राविणीं' सच्छिद्रां नावं यथा जात्यन्धः समारुह्य पार-तटमागन्तुमिच्छति, स नरो नावो जलव्याप्तत्वात् 'अन्तरा' मध्ये एव विषीदति-जले निमज्जति ॥ ३१ ॥ दार्ष्टान्तिकमर्थमाह—

एवं तु समणा० × × × (सू०) ॥ ३२ ॥ त्तिबेमि ॥

व्याख्या—एवं नौदृष्टान्तेन एके श्रमणाः शाक्यादयो मिथ्यादृष्टयोऽनार्याः स्वमतानुसारेण संसारपारकाङ्क्षिणोऽपि संसारमेवाऽनुपर्यटन्ति, संसार एवानन्तकालं भ्रमन्ति ॥ ३२ ॥ इति ब्रवीमीति पूर्ववत् ॥

इति श्री सूत्रकृताङ्गे प्रथमाध्ययने द्वितीयोद्देशकः समाप्तः ॥

द्वितीयोद्देशके स्वान्यसमयप्ररूपणा कृता, तृतीयेऽपि सैवोच्यते इति-तस्येदमादिसूत्रम्—

जंकिंचि त्रि० × × × (सू०) ॥ १ ॥

व्याख्या—यत्किञ्चिदाहारजातं स्वल्पं घनं वा पूतिकृत-माधाकर्मादि सिक्थेनापि युक्तं 'सड्ढि' त्ति 'श्रद्धावता' भक्तिमतान्येनाऽऽगन्तुकान् उद्दिश्य 'ईहितं' कृतं, तत्सहस्रान्तरितमपि यो भुञ्जीत, [सड्ढि] पक्षं गृहस्थपक्षं प्रव्रजितपक्षं

च सेवते, अयमर्थः आधाकर्मादिलवेनाऽपि संसृष्टं परकृतमप्याहारं यो भक्षयेत्, सोऽपि द्विपक्षासेवी स्यात्, किं पुनः स्वयमाहारं निष्पाद्य ये शाक्यादयो भुञ्जते ते सुतरां द्विपक्षासेविनः स्युरित्यर्थः। अथवा द्विपक्षमीर्यापथं साम्परायिकं वा बद्धनिकाचितभेदं वा कर्म, तत्सेविनः परतीर्थिकाः स्वयूथ्या वा स्युरिति ॥ १ ॥ अथ तद्भोजिनां विपाकं दृष्टान्तेनाह—

## तमेव अविआणंता० × × × (सू०) ॥२॥ उदयस्स × × × (सू०) ॥ ३ ॥

व्याख्या—तमाधाकर्माद्युपभोगदोषमविजानन्तो 'विषमे' कर्मबन्धे संसारे वाऽकोविदाः—कथं कर्मबन्धः स्यात्कथं वन स्यात् कथं संसारार्णवस्तीर्यत इत्यत्रानिपुणा दुःखिनः स्युः। दृष्टान्तमाह—मत्स्या यथा 'वेसालिअ'त्ति विशालः समुद्रस्तत्र भवा विशालाख्यजातिभवा वा विशाला एव वा वैशालिका—बृहच्छरीरा 'उदकस्य' जलस्याभ्यागमे समुद्रवेलायां सत्यां उदकस्य प्रभावेन नदीमुखमागताः, पुनर्वेलापगमे जले शुष्कवेगेनाऽगते सति ढङ्कैः कङ्कैश्च पक्षिविशेषैरन्यैश्चामिषार्थिभिर्विलुप्यमानास्ते दुःखिनो मत्स्या 'घात' विनाशं यान्ति—प्राप्नुवन्तीति श्लोकद्वयार्थः ॥ २ ॥ ३ ॥ दार्ष्टान्तिकयोजनामाह—

## एवं तु समणा० × × × (सू०) ॥ ४ ॥

व्याख्या—एवमेके श्रमणाः शाक्यादयः स्वयूथ्या वा वर्तमानमेव सुखं इहलोकसुखमाधाकर्माद्युपभोगजमेषितुं शीलं येषां ते वर्त्तमानसुखैषिणो वैशालिका मत्स्या इव 'घातं' विनाशमेष्यन्त्यऽनन्तशो यास्यन्ति बहुवारं संसारे भ्रमिष्यन्ति दुःखमनुभवन्तः ॥ ४ ॥ अथापराज्ञानिमतमाह—

इणमन्नं तु × × × (सू० ) ॥ ५ ॥

व्याख्या—इदं वक्ष्यमाणमन्यत् अज्ञानं, इहास्मिल्लोके एकेषामाख्यातं । किं पुनस्तैराख्यातमित्याह–' देवउत्त 'त्ति देवेन ' उप्तः ' कृतं देवोप्तः देवपुत्रो वाऽस्य लोकः ब्रह्मणा उप्तो-ब्रह्मणा कृतो वायं लोक इत्यपरे वदन्तीति ॥ ५ ॥ तथा—

ईसरेण० × × × (सू० ) ॥ ६ ॥

व्याख्या—ईश्वरेण कृतो लोकः अपरे वदन्ति प्रधानादिकृतो लोकः, सत्त्वरजस्तमोगुणानां साम्यावस्था प्रकृतिः, सैव प्रधानशब्दवाच्या । आदिशब्दान्नियतिकृतो लोक इत्यन्ये, लोको जीवाजीवसमायुक्तः सुखदुःखसमन्वितश्च ॥ ६ ॥ तथा—

सयंभुणा० × × × (सू० ) ॥ ७ ॥

व्याख्या—स्वयम्भुर्विष्णुरन्यो वा, स चैकाकी रतिं न लभते, ततोऽन्या शक्तिः समुत्पन्ना । तदनन्तरं जगत्सृष्टिरभूत् इति महर्षिणा उक्तं । ततः स्वयम्भुना लोकं निष्पाद्याऽतिसम्भारभयाद्यमाख्यो मारयतीति मारो व्यधायि, तेन मारेण ' संस्तुता ' कृता माया, तया मायया च लोको म्रियते, न च तत्त्वतो जीवस्य मृत्तिरस्ति, अतो मायैषा, तेन लोकोऽशाश्वत इति गम्यते ॥ ७ ॥ तथा—

माहणा० × × × (सू० ) ॥ ८ ॥

व्याख्या—' ब्राह्मणा ' द्विजातयः, श्रमणास्त्रिदण्डिप्रमुखा, एके अण्डेन कृतमण्डकृतं अण्डाज्जातं जगत् ' आहुः '

वदन्ति, ब्रह्मणाऽण्डं कृतं, ततो विश्वं जातं। एवंभूते जगति असौ ब्रह्मा 'तत्त्वं' पदार्थसमूहमकार्षीत्-कृतवान्, ते च ब्राह्मणाद्याः परमार्थानभिज्ञा एवं मृषा वदन्ति ॥ ८ ॥ अथ तेषामुत्तरमाह—

सतेहिं० × × × (सू०) ॥ ९ ॥

व्याख्या—स्वकै-र्निजैः पर्यायै-रभिप्रायैर्लोकं कृतमब्रुवन् कथितवन्तस्ते 'तत्त्वं' परमार्थं नाभिजानन्ति, न च विनाशी लोकः कदाचिन्निर्मूलतः, पर्यायरूपेण विनाश्यपि द्रव्यार्थतया नित्यत्वात्। लोकस्य ईश्वरादिकृतत्वनिषेधयुक्तयष्टीकातो ज्ञेयाः ॥ ९ ॥ अथ तेषां मृषावादिनां फलमाह—

अमणुन्न० × × × (सू०) ॥ १० ॥

व्याख्या—'अमनोज्ञं' असदनुष्ठानं, तस्मादुत्पादः-प्रादुर्भावो यस्य तत् अमनोज्ञसमुत्पादं-दुःखं विजानीयात् प्राज्ञः, अयमर्थः-स्वकृतादऽनुष्ठानादेव दुःखमुत्पद्यते, नेश्वरादेरिति, ते चैवं दुःखस्य समुत्पादमजानन्तः कथं दुःखस्य संवरं प्रतिघातहेतुं ज्ञास्यन्ति? कारणोच्छेदादेव कार्योच्छेदः स्यात्, कारणं वाऽजानन्तः कथं दुःखोच्छेदाय यतिष्यन्ते? यत्नवन्तोऽपि दुःखोच्छेदं नाप्नुवन्तीति ॥ १० ॥ कृतवादिमतमेवाह—

सुद्धे अपावए० × × × (सू०) ॥ ११ ॥

व्याख्या—अयमात्मा शुद्धो, मनुष्यभव एव शुद्धाचारो भूत्वा मोक्षेऽपापकः स्यात्, इदमेकेषां गोशालमतानुसारिणा-

माख्यातं, पुनरयमात्माऽकर्मको भूत्वा क्रीडया प्रद्वेषेण वा तत्र मोक्षस्थ एवापराध्यति–रजसा श्लिष्यते, तस्य हि स्वशासन-पूजामन्यदर्शनपराभवमुपलभ्य ' क्रीडा ' प्रमोदः स्यात्, स्वशासनपराभवदर्शनाच्च द्वेषः, ततोऽसौ क्रीडा–द्वेषाभ्यां कर्मणा बध्यते, ततो भूयः संसारेऽवतरति ॥ ११ ॥ किञ्च—

इह संवुडे० × × × ( सू० ) ॥ १२ ॥

व्याख्या—इह संसारे प्राप्तः सन् प्रव्रज्यामङ्गीकृत्य संवृतात्मा जातः सन् पश्चादऽपापः स्यात्। यथा ' विकटाम्बु ' उष्णोदकं ' नीरजस्कं ' निर्मलं सत् वातोद्धूतरेणुयुक्तं ' सरजस्कं ' मलिनं भूयः स्यात्। तथाऽयमात्मा त्रैराशिकाणां मते राशित्रयावस्थः स्यात्। यथा–पूर्वं संसारावस्थायां सकर्मकः, ततो मोक्षेऽकर्मकः पुनः शासनपराभवदर्शनाद् द्वेषो-दयात्सकर्मा स्यादिति ॥ १२ ॥ एतन्मतं दूषयति—

एआणुचिंति० × × × ( सू० ) ॥ १३ ॥

व्याख्या—' एतान् ' पूर्वोक्तान् वादिनोऽनुचिन्त्य ' मेधावी ' प्रज्ञावानेतदवधारयेद्यथा–न ते वादिनो ' ब्रह्मचर्ये ' संयमानुष्ठाने वसेयुः। यद्यपि ते संयमे स्थितास्तथापि न सम्यगनुष्ठातार इत्यवधारयेत्, पृथक् २ सर्वेऽप्येते ' प्रावादुकाः ' परमतिनः स्वकं स्वकं–आत्मीयं दर्शनमाख्यातारः, शोभनत्वेन कथयितारः, स्वदर्शनं शुभं वदन्ति ते, न च तत्रास्था विधेयेति ॥ १३ ॥ कृतवादिमतमेव प्रकारान्तरेणाह—

सए सए० × × × ( सू० ) ॥ १४ ॥

व्याख्या—ते कृतवादिनः स्वके स्वके 'उपस्थाने' संयमाद्यऽनुष्ठाने 'सिद्धिं' मोक्षमभिहितवन्तो, नान्यथा, तथा सिद्धिप्राप्तेरधः प्रागपि 'वशवर्त्ती' वश्येन्द्रियः स्यात्, अस्मन्मताश्रितः सांसारिकैः स्वभावैर्नाभिभूयते सर्वे 'कामा' अभिलाषा 'समर्पिताः' सम्पन्ना यस्य स सर्वकामसमर्पितः, इहलोके ईदृशः स्यात् । परलोके च मोक्षं यायात् इत्यर्थः ॥१४॥ एतदेवाह—

सिद्धा य ते० × × × ( सू० ) ॥ १५ ॥

व्याख्या—तेऽस्मन्मताश्रिताः सिद्धाश्चारोगाश्च स्युः । अरोगग्रहणात् शारीरमानसानेकदुःखरहिताश्चेति ज्ञेयं । इहास्मिल्लोके एकेषां शैवादीनामिदमाख्यातं ते हि 'सिद्धिं' मुक्तिमेव पुरस्कृत्याङ्गीकृत्य 'स्वाशये' स्वमतानुरागे 'ग्रथिताः' सम्बद्धा नराः प्राकृतपुरुषाः पण्डितंमन्या इवेत्यर्थः ॥ १५ ॥ एतद्दूषणायाह—

असंवुडा० × × × ( सू० ) ॥ १६ ॥ त्तिबेमि

व्याख्या—ते पाखण्डिनस्तत्त्वतोऽसंवृता अनादिकं संसारं पुनः पुनर्भ्रमिष्यन्ति, यदि कथञ्चित्तेषां स्वर्गावाप्तिस्तथाऽपि 'कल्पकालं' बहुकालं उत्पद्यन्ते सम्भवन्त्यासुराः, असुरस्थानोत्पन्ना अपि न प्रधानाः, किं तर्हि ? 'किल्बिषिका' अधमा एवेति ॥ १६ ॥ ब्रवीमीति पूर्ववत् ॥

इति श्री सूत्रकृताङ्गदीपिकायां प्रथमाध्ययने तृतीयोद्देशकः समाप्तः ॥ छः ॥

तृतीयोद्देशकेऽन्यतीर्थिकानां कुत्सिततरमुक्तमिहापि तदेवोच्यत इत्यर्थमम्बद्धस्याऽस्योद्देशकस्येदमादिसूत्रम्—

एते जिआ० × × × (सू०) ॥ १० ॥

व्याख्या—एतेऽन्यमतिनो 'जिता' अभिभूता रागद्वेषादिभिः, भो इति शिष्यामन्त्रणं, एवं त्वं जानीहि, यथा-एते शरणं कस्यचित्त्राणाय न समर्थाः। 'जत्थ'त्ति यत्राऽज्ञाने बालोऽज्ञो लग्नः सन् अवसीदति। तत्र ते व्यवस्थिताः 'बालापण्डिअमाणिणो' इति क्वचित्पाठस्तत्र 'बाला' निर्विवेका अपण्डिता अपि पण्डितमानिनः कस्याऽपि न त्राणाय स्युरित्यर्थः। तत्कृत्यमाह-'हिच्चा णं'ति-'हित्वा त्यक्त्वा पूर्वसंयोगं-धनस्वजनादिकं, णमिति वाक्यालङ्कारे, सिता-बद्धाः परिग्रहारम्भेषु, पुनः किम्भूताः 'कृत्यं' कार्यं पचनपचनादि, तस्योपदेशं गच्छन्ति इति कृत्योपदेशगा। अथवा 'सिया' इत्यार्षत्वात् स्युर्भवेयुः। 'कृत्यं' सावद्यानुष्ठानं, तत्प्रधानाः कृत्या-गृहस्थास्तेषामुपदेशः—

"संकप्पो० × × × (सू०) ॥ १ ॥"

संरम्भ समारम्भरूपः, स विद्यते येषां ते कृत्योपदेशिकाः, प्रव्रजिता अपि कर्त्तव्यैर्गृहस्थेभ्यो न भिद्यन्त इत्यर्थः ॥ १ ॥ एवम्भूतेषु तीर्थिकेषु सत्साधुना यत्कर्त्तव्यं तदाह—

तं च भिक्खू० × × × (सू०) ॥ २ ॥

व्याख्या—'तं' पाखण्डिलोकं 'परिज्ञाय' सम्यग् ज्ञात्वा 'भिक्षुः' संयतो विद्वान् तेषु न मूर्च्छयेत्, तैः सह

सम्बन्धं न कुर्यात् । किं तर्हि कुर्यात् ? इत्याह–अनुत्कर्षवान्, उत्कर्षो मदस्तं अकुर्वन् तथा अप्रलीनोऽ–सम्बद्धस्तीर्थिकेषु गृहस्थेषु पार्श्वस्थादिषु वासं श्लेषमकुर्वन् 'मध्येन' रागद्वेषयोरन्तरालेन सञ्चरन् मुनि–र्जगत्त्रयवेदी यापये–दात्मानं वर्त्तयेत्, तेषु निन्दां स्वस्य प्रशंसां च परिहरन् साधुर्मध्यस्थवृत्त्या चरेदित्यर्थः ॥ २ ॥ कथं तीर्थिकास्त्राणाय न स्युरित्याह—

सपरिग्गहा य० × × × (सू०) ॥ ३ ॥

व्याख्या—'सपरिग्रहा' धनादियुक्ताः, धनाद्यभावेऽपि शरीरोपकरणादौ मूर्च्छावन्तः सपरिग्रहा एव तथा 'सारम्भाः' सावद्यव्यापाराः इतीह विचारे एकेषां आख्यातं, यथा–किमनया शिरस्तुण्डमुण्डनादिक्रियया गुरोरनुग्रहाद्यदा परमाक्षरावाप्तिर्भवति तदा मोक्षः स्यादेवं भाषमाणास्ते न त्राणाय स्युः । ये त्रातुं समर्थास्तानाह–'अपरिग्रहा' धर्मोपकरणं विना शरीरोपभोगाय स्वल्पोऽपि न विद्यते परिग्रहो येषां तेऽपरिग्रहा अनारम्भाश्च, तान् 'भिक्षुः' साधुः शरणं 'परिव्रजेत्' गच्छेत्, तेषां शरणं यायादित्यर्थः ॥ ३ ॥ परिग्रहारम्भवर्जनं यथा स्यात्तथाह—

कडेसु घास० × × × (सू०) ॥ ४ ॥

व्याख्या—'कृतेषु' गृहस्थैः स्वार्थं निष्पादितेषु ओदनादि पिण्डेषु ग्रासमाहारं 'एषयेत्' याचेत इति षोडशोद्गमदोषत्यागः सूचितः, तथा 'विद्वान्' संयमनिपुणो 'दत्तं' परैराशंसादोषरहितैर्निःश्रेयसबुद्ध्या वितीर्णं, तत्र एषणां–ग्रहणैषणां चरेत् । दत्तमित्यनेन षोडशोत्पादनादोषाः एषणां चरेदित्यनेन दश एषणादोषाश्च सूचिताः, एतद्दोषत्यागेन पिण्डं गृह्णीया-

दित्यर्थः। 'अगृद्धो'ऽमूर्च्छितो 'विप्रमुक्तो' रागद्वेषरहितश्च आहारे स्यादिति पञ्चग्रासैषणादोषत्यागयुक्तः। स एवम्भूतो भिक्षुः परेषामऽपमान परिवर्जयेत्, तपोमदं ज्ञानमदं च न कुर्यादित्यर्थः, आत्मनः सकाशात् परान् हीनान् न पश्येदिति तात्पर्यम् ॥ ४ ॥ स्वमतं प्रख्याप्य पुनः परमतं दर्शयति—

लोगवायं० × × × (सू०) ॥ ५ ॥

व्याख्या—लोकानां पाखण्डिकानां वादमङ्गीकारं 'निसामिज्जा' निशामयेत्–जानीयात्। तद्दर्शयति इह संसारे केषाञ्चित् इदमाख्यातं यथा 'विपरीता' मिथ्या या प्रज्ञा, तया 'सम्भूतं' उत्पन्नं विपर्यस्तबुद्धिग्रथितमित्यर्थः। तथा अन्यैरविवेकिभिर्यदुक्त 'तदनुगं' तत्सदृशं, अविवेकिजनवाक्यसदृशमिति ॥ ५ ॥ लोकवादमेवाह—

अणंते णितिए० × × × (सू०) ॥ ६ ॥

व्याख्या—न विद्यते अन्तो यस्येत्यनन्तः नित्यः शाश्वतो निरन्वयनाशेन न नश्यति यो यादृगिह भवे स परभवेऽपि तादृश एव, पुरुषः पुरुष एव अङ्गना अङ्गनैवेति। अथवाऽनन्तो–ऽपरिमितो निरवधिकस्तथा 'नित्यः' अप्रच्युतानुत्पन्नस्थिरैकरूपः। तथा शाश्वतः, कार्यद्रव्यं भवदपि प्रान्ते परमाणुत्वं न त्यजति। तथा न विनश्यति दिगात्माकाशाद्यपेक्षया। तथा अन्तवान् लोकः, सप्तद्वीपा वसुन्धरेति परिमाणोक्तास्तादृक् परिमाणो 'नित्यः' इति 'धीरः' साहसिको व्यासादिरितीव पश्यति ॥ ६ ॥ किञ्च—

अपरिमाणं० × × × ( सू० ) ॥ ७ ॥

व्याख्या—न विद्यते परिमाणमियत्ता क्षेत्रतः कालतो वा यस्य तद्–अपरिमाणं विजानाति कश्चित्तीर्थिकः अपरिमितज्ञोऽसौ अतीन्द्रियद्रष्टा न पुनः सर्वज्ञः यद्वाऽपरिमितज्ञोऽभिप्रेतार्थातीन्द्रियदर्शी, न पुनः सर्वदर्शी । यदुक्तम्—

" सर्वं पश्यतु वा मा वा, इष्टमर्थं तु पश्यतु । कीटसङ्ख्यापरिज्ञानं, तस्य न कोपयुज्यते ॥ १ " इति ।

इह केषां सर्वज्ञापह्नववादिनामिदमाख्यातं, तथा सर्वत्र क्षेत्रे काले वा ' मपरिमाणं ' परिमाणयुक्तं, धी–बुद्धिस्तया राजते इति धीर, इत्येवमसावतीव पश्यति, दिव्यं वर्षसहस्रं ब्रह्मा स्वपिति, तावत्कालं न पश्यति किञ्चित्, पुनस्तावन्तंकालं जागर्त्ति तत्र पश्यति एवं बहुधा प्रवृत्तो लोकवादः ॥ ७ ॥ अस्योत्तरमाह—

जे केइ तसा पाणा० × × × ( सू० ) ॥ ८ ॥

व्याख्या—ये केचित्त्रसाः प्राणिनस्तिष्ठन्ति, अथवा स्थावराः, तेषां स्वकर्मपरिणत्याऽयं पर्यायोऽस्ति, ' अंजु 'त्ति–प्रगुणोऽव्यभिचारी, तेन पर्यायेण ते त्रसस्थावराः स्युः । त्रसत्वमनुभूय कर्मपरिणत्या स्थावराः स्थावरत्वमनुभूय त्रसाश्च भवन्तीति, ततो यो यादृगिहभवे स परभवेऽपि तादृगिति नियमो न युक्तः ॥ ८ ॥ अत्र दृष्टान्तमाह—

उरालं जगओ० × × × ( सू० ) ॥ ९ ॥

व्याख्या—'उदार' स्थूलं जगतो योगं, औदारिकाः प्राणिनो गर्भकललार्बुदरूपादवस्थाविशेषाद्विपरीतं बालकुमार–यौव-

नादिकं उदारं योगं परिसमन्तात् 'अयंते' गच्छन्ति संपर्यन्ते। अयमर्थः। औदारिकशरीरिणो मनुष्यादेर्बालकुमाराद्यवस्था विशेषाः प्रत्यक्षेण दृश्यन्ते, न पुनर्यादृक् प्राक् तादृगेव सर्वदेति। एवं सर्वेषां स्थावरजङ्गमानामन्यथा भवनं ज्ञेयं। तथा आक्रान्ता पीडिता दुःखेन सर्वे जन्तवस्ततस्ते अहिंसिता भवन्ति तथा कार्यं। अथवा'ऽकान्तं' अप्रियं दुःखं येषां तेऽकान्तदुःखाश्चशब्दात् प्रियसुखाश्च, अतः सर्वान्न हिंस्यादिति दृष्टान्तो दर्शित उपदेशश्च दत्तः ॥ ९ ॥ किमर्थं सत्वान्न हिंस्यादित्याह—

एवं खु नाणिणो० × × × (सू०) ॥ १० ॥

व्याख्या—खुर्निश्चये, एतदेव ज्ञानिनः सारं यत्किञ्चन प्राणिजातं न हिनस्ति। 'अहिंसा समता चैव' एतावत् विजानीयात्। कोऽर्थः। यथा मम मरणं दुःखं चाप्रियं एवं सर्वस्य प्राणिलोकस्यापीति, एवं ज्ञात्वा न हिंस्यात्प्राणिनः उपलक्षणान्मृषा न ब्रूयान्नादत्तं गृह्णीयान्नाऽब्रह्म सेवेत न परिग्रहं कुर्यादिति ॥ १० ॥ मूलगुणानुक्त्वोत्तरगुणानाह—

उसिए य० × × × (सू०) ॥ ११ ॥

व्याख्या—विविधमनेकधा 'उषितः' स्थितो दशविधसामाचार्यां व्युषितः, विगता आहारादौ गृद्धिर्यस्य स विगतगृद्धिः साधुः, आदीयते प्राप्यते मोक्षो येन तत् आदानीयं-ज्ञानादित्रयं, तत्सम्यग् रक्षयेत्। तथा चर्यासनशय्यासु, चर्या-गमनं आसनं-निषीदनस्थानं शय्या-वसतिः, संस्तारको वा, तेषु तथा भक्ते पाने चाऽन्तशः सम्यगुपयोगवता भाव्यं। अयमर्थः। ईर्याभाषैषणादाननिक्षेपप्रतिष्ठापनसमितिषु उपयुक्तेनाऽन्तशो भक्तपानं यावन्निर्दोषमन्वेषणीयं ॥ ११ ॥ पुनरुत्तरगुणानाह—

एतेहिं तिहिं० × × × ॥ १२ ॥

व्याख्या—एतानि त्रीणि स्थानानि, यथा-ईर्यासमितिरित्येकं स्थानं १, आसनं शय्येत्यादानभाण्डमात्रनिक्षेपणासमितिरिति द्वितीयं २, भक्तं पानमित्येतेन एषणासमितिः, भक्तपानार्थं च प्रविष्टस्य भाषणासम्भवाद्भाषासमितिराक्षिप्ता, सति चाहारे उच्चारप्रश्रवणादीनां सद्भावात् प्रतिष्ठापनसमितिरप्यायात, इति तृतीयं स्थानं ३, एतेषु त्रिपु स्थानेषु सम्यग् यतः संयत, आमोक्षाय परिव्रजेदित्युत्तरश्लोकेन सम्बन्धः तथा सततं मुनिः 'उत्कर्षो' मानः 'ज्वलनः' क्रोधः 'णूमं'ति गहनं मायेत्यर्थः, संसारमध्ये सर्वदा भवतीति 'मध्यस्थो' लोभः, च समुच्चये, एतान् मानादीन् कषायान् 'विगिंचए'त्ति विवेचये-दात्मनः पृथक्कुर्यात् । ननु क्रोध एवादौ सर्वत्र स्थाप्यते, अत्र तु कथं मान ? इति चेदुच्यते-माने सत्यऽवश्यम्भावी क्रोधः, क्रोधे च सति मानः स्यान्नवेत्यर्थस्य दर्शनाय क्रमोल्लङ्घनमिति ॥ १२ ॥ उपसंहारमाह—

समिए य० × × × ( सू० ) ॥ १३ ॥ त्तिबेमि ॥

व्याख्या—पञ्चसमितिभिः समितः साधुः पञ्चमहाव्रतोपेतत्वात् पञ्चप्रकारसंवरसंवृतः, च शब्दाद्गुप्तिगुप्तस्तथा गृहपाशादिषु 'सिता' बद्धा गृहस्थास्तेषुऽसितो न बद्धो-न मूर्च्छितो भिक्षुर्भावभिक्षुः, आसमंतात् मोक्षाय परिसमंतात् व्रजेः, संयमानुष्ठानरतो भवेस्त्वमिति शिष्यस्योपदेशः । इतिः समाप्तौ, ब्रवीमीति पूर्ववत् ॥ १३ ॥

इति तपागच्छाधिपश्रीहेमविमलसूरीश्वरशिष्यहर्षकुलप्रणीतायां श्रीसूत्रकृताङ्गदीपिकायां प्रथमं समयाध्ययनं समाप्तम् ॥ ॥ श्रीरस्तु ॥

सूक्ष्मदर्शी अतोऽस्मान् पोषय अन्यथा त्वया प्रव्रज्या ग्रहणादिह लोकस्त्यक्तः अस्मत्परिपालनत्यागाच्च परलोकमपि त्वं जहासि–त्यजसि ॥ १९ ॥

अन्नन्नेहिं मुच्छता असंवुता नरा मोहं यांति सदनुष्ठाने च मुह्यन्ति । तथा विषमैरऽसंयतैर्निषमं असंयमं ग्राहिता असंयमे प्रवर्त्तितास्ते पापैः कर्मभिः पुनः प्रगल्भिता धृष्टताङ्गताः ॥ २० ॥

तम्हादविइक्ख पंडिए पावाओ विरतेऽभिनिव्वुडे। पणए वीरे महाविहं सिद्धि पहं णेआउअधुवं ॥ २१ ॥

तस्माद् द्रव्यमतो मुक्तियोग्यं पण्डितः सन् ईक्षस्व–विचारय पापाद्विरतः अभिनिर्वृतः क्रोधादित्यागात् शीतीभूतः तथा वीराः कर्मविदारणसमर्था महावीथिं महामार्गं प्रणताः प्राप्ताः नान्ये महावीथिं किम्भूता सिद्धिपथं ज्ञानादिमार्गं प्रतिनेतारं प्रापकं ध्रुवमव्यभिचार इति ज्ञात्वाऽसंयमप्रगल्भेर्न भाव्यमिति ॥ २१ ॥

वेतालिअमग्गमागतो मणवयसा काएण संवुडो । चिच्चावित्तं च नायओ आरंभं च सुसंवडे चरिज्जासि त्तिबेमि ॥

कर्मणां वैदारिकं विदारणसमर्थं मार्गमागतो मनोवाकायसंवृत्तस्त्यक्त्वा वित्तं धनं ज्ञातीन् स्वजनान् सारम्भं च सुसंवृत इन्द्रियैः संयमे चरेत इति ब्रवीमीति पूर्ववत् ॥ २२ ॥

वैतालियाख्यद्वितीयाध्ययनस्य प्रथमोद्देशकः ॥

## अथ सप्तमाध्ययनमारभ्यते ॥

अस्य च नालन्दीयमिति नाम, तस्यायमर्थः-नालन्दा-राजगृहनगरे बाहिरिका, तस्यां भवं नालन्दीयमिति। पूर्वं सकलेन सूत्रकृताङ्गेन साध्वाचारः प्ररूपितः, अत्र तु श्रावकविधिरुच्यते। तस्येदं सूत्रम्—

तेणं कालेण तेण समएण रायगिहे नामं नयरे होत्था, ( इत्यादि ) जावपडिरूवा ( सू० ) ॥ १ ॥

व्याख्या—तस्मिन् काले तस्मिन् समये-ऽवमरे राजगृहं नाम नगरमभवत् रिद्धिस्फीतं समृद्ध वर्णको वाच्यः, यावत् 'प्रतिरूपं' अनन्यसदृशं। तस्य नगरस्य बहिरुत्तरपूर्वस्यां दिशि नालन्दानाम बाहिरिकाऽऽसीत्, सा चानेकभवनशतसन्निविष्टा नैकगृहसङ्कीर्णेत्यर्थः ॥ १ ॥

तत्थ णं नालंदाए बाहिरियाए लेवे नामं गाहावई हुत्था ( इत्यादि ) अपरिभूए आवि होत्था ( सू० ) ॥ २ ॥

व्याख्या—तस्यां नालन्दायां लेपो नाम 'गृहपतिः' कुटुम्बिक आसीत्। स च आढ्यो 'दीप्तस्तेजस्वी 'वित्तो' विख्यातो विस्तीर्णविपुलभवनशयनासनयानवाहनाकीर्णो बहुधनो बहुजातरूपरजत 'आयोगा' अर्थोपायाः 'प्रयोगा' प्रयोजनानि, तैः 'सम्प्रयुक्तः' संयुतः इतश्चेतश्च विक्षिप्तप्रचुरभक्तपानो बहुदास्यादिपरिवृतो बहुजनस्यापरिभूत आसीत् ॥ २ ॥

से णं लेवे नामं गाहावई समणोवासए यावि हुत्था (इत्यादि) अप्पाणं भावेमाणे एवं च णं विहरइ ( सू० )॥ ३ ॥

व्याख्या—स लेपो नाम गृहपतिः श्रमणोपासकोऽभिगतजीवाजीव इत्यादि, 'निग्गंथे'त्ति आर्हते प्रवचने निःशङ्कितः

निष्काङ्क्षितोऽन्यमतनिराकाङ्क्षिः, ' विचिकित्सः ' चित्तप्लुतिर्विद्वज्जुगुप्सा वा, तद्रहितो निर्विचिकित्सो ' लब्धार्थो ' ज्ञाततत्त्वः 'गृहीतार्थः' स्वीकृतमोक्षमार्गः विशेषतः पृष्टोऽर्थो येन स पृष्टार्थः पृष्टार्थत्वादेव विनिश्चितार्थ 'अभिगतः' प्रतीतोऽर्थो येन स तथा, अस्थिमिञ्जा-ऽस्थिमध्यं, यावद्धर्मे प्रेमानुरागेण रक्तोऽत्यन्तं सम्यक्त्वानासितचित्त इत्यर्थः। केनचिद्धर्मं पृष्टः प्राह-अयमायुष्मन् ! जैनधर्मोऽर्थः-सत्यं परमार्थरूपः, शेषः सर्वोऽप्यनर्थः। ' ऊसियफलिह 'त्ति ' उच्छ्रितं ' प्रख्यातं स्फटिकवन्निर्मलं यशो यस्य ' अप्रावृत्तं ' अस्थगितं द्वार गृहस्य येन सोऽप्रावृतद्वारः, परतीर्थिकोऽपि गृहं प्रविश्य धर्मं यदि वदेत्, तदनुमतस्य परिजनोऽपि सम्यक्त्वाच्चालयितुं शक्यते, तद्भीत्या न द्वारप्रदानमित्यर्थः। प्रीतिकारी राजा अन्तःपुरेऽपि प्रवेशो यस्य स तथा, कोऽर्थः ? राजान्तःपुरे हि कोऽपि न प्रवेश्यस्तत्राप्यसौ प्रतीतगुणत्वेन प्रवेशयोग्य इत्यर्थः। तथा चतुर्दश्यष्टम्यादिषु तिथिषु उद्दिष्टासु महाकल्याणकसम्बन्धितया पुण्यतिथित्वेन प्रसिद्धासु, तथा पौर्णमासीषु च तिसृष्वपि चातुर्मासिकतिथिषु एवंभूतेषु धर्मदिवसेषु 'सुष्ठु' अतिशयेन प्रतिपूर्णं सम्पूर्णमाहारशरीरसत्कारब्रह्मचर्याऽव्यापार-रूपं पौषधमनुपालयन् तथाविधान् सद्गुणान् श्रमणान् एषणीयेन शुद्धेनाशनादिना प्रतिलाभयन् बहुभिः शीलव्रतगुणविरमण प्रत्याख्यान-पौषधोपवासैरात्मानं भावयन्। एवं पूर्वोक्तप्रकारेण, च समुच्चये णं वाक्यालङ्कारे, विहरति-आस्ते ॥ ३ ॥

तस्स णं लेवस्स गाहावइस्स नालंदाए बाहिरियाए (इत्यादि) किण्हे, वण्णओ वणसंडस्स ( सू० ) ॥ ४ ॥

व्याख्या—तस्य लेपस्य गृहपतेः सम्बन्धिनी नालन्दायाः पूर्वोत्तरस्यां दिशि गृहोपयुक्तशेषद्रव्येण कृता [ इति शेष द्रव्यानाम् ] उदकशालाऽऽसीदनेकस्तम्भशतसन्निविष्टा प्रासादीया यावत्प्रतिरूपा, तस्याश्चोत्तरपूर्वदिग्भागे हस्तियामाख्यो

वनखण्ड आसीत्, कृष्ण इत्यादि वर्णको वनखण्डस्य वाच्यः ॥ ४ ॥

तस्सिं च ण गिहपएसंमि भयवं गोयमे विहरइ (इत्यादि) उदए पेढालपुत्ते भयवं गोयमं एवं वयासी (सू०) ॥ ५ ॥

व्याख्या—तस्मिन् वनखण्डे गृहप्रदेशे भगवान् गौतमो विहरति, तस्मिन्नारामे स्थितः। अथ उदकाख्यो निर्ग्रन्थ पेढालपुत्रः पार्श्वापत्यस्य-पार्श्वशिष्यस्याऽपत्यं शिष्यः। स च मेदार्यो गोत्रेण 'जेणेव'त्ति यस्यां दिशि गौतमस्तत्रागत्येदं तं प्राह-आयुष्मन् भो गौतम! अस्ति मम कश्चित्प्रदेशः प्रष्टव्यः, तं प्रदेशं मम यथाश्रुतं त्वया यथादर्शितं श्रीवीरेण तथा 'व्यागृणीहि' कथय, स चाय भगवान् यदि वा सह वादेन सवादं पृष्टस्तमुदकं पेढाललघुपुत्रमेवमवादीत्। अपि चायुष्मन् उदक! श्रुत्वा त्वदीय प्रश्नं निशम्य चावधार्य गुणदोषविचारेण सम्यग् ज्ञास्येहं, तदुच्यतां विश्रब्धं त्वया स्वाऽभिप्रायः 'सवायं' स सद्वाचं वा उदकः पेढालपुत्रो गौतमं एवं अवादीत् ॥ ५ ॥

आउसो गोयमा! अत्थि खलु कुमारपुत्तियानाम समणा निग्गथा (इत्यादि) तेसिं च णं थावरकायसि उववण्णाणं ठाणमेय घत्तं (सू०) ॥६॥

व्याख्या—भो गौतम! 'अत्थि' मन्ति कुमारपुत्रा नाम निर्ग्रन्था युष्मदीयं प्रवचनं प्रवदन्तः, तथाहि-'गृहपतिं' श्रमणोपासकं 'उपसम्पन्न' नियमग्रहणोद्यतं प्रत्याख्यापयन्ति-प्रत्याख्यानं कारयन्ति। तद्यथा-त्रसेषु 'दण्डं' हिंसां-निहाय त्यक्त्वा प्राणातिपातनिवृत्तिं कुर्वन्ति। 'नन्नत्थत्ति' नान्यत्र स्वमतेरन्यत्र राजाद्यभियोगेन यः प्राणिघातो न तत्र निवृत्तिरिति, तत्र स्थूलप्राणिविशेषणाचदन्येषां जीवानां हिंसानुमतिदोषः स्यादित्याशङ्कावान् प्राह-'गाहावइ-चोर'त्ति, अस्यार्थोऽग्रे भावयिष्यते। 'एवंह्'त्ति, उदक एवाह ण्हमिति वाक्यालङ्कारे। एवं प्रत्याख्यानं कुर्वतां श्राद्धानां

दुष्प्रत्याख्यातं भवति, प्रत्याख्यानभङ्गसद्भावात्तथा एवं 'प्रत्याख्यापयतां' प्रत्याख्यानं कारयतां 'यतीनां' साधूनां दुष्टं प्रत्याख्यानदानं भवति, एवं प्रत्याख्यानं कुर्वन्तः कारयन्तश्च स्वां प्रतिज्ञामतिचरन्त्य-ऽतिलङ्घयन्ति 'कस्स णं तं हेउं' कस्माद्धेतोरित्यर्थः। प्रतिज्ञाभङ्गकारणमाह-'संसारिया' इत्यादि, सांसारिकाः खलु प्राणिनः स्थावरा अपि प्राणिनस्त्रसतया प्रत्यायान्ति त्रसाश्च स्थावरत्वेनेति। एवं सति प्रतिज्ञालोपः स्यात्, यथा नागरिको न हंतव्य' इति प्रतिज्ञा येन कृता स यदि उद्यानस्थं नागरिकं हन्यात्तदा तस्य किं प्रतिज्ञालोपो न स्यात्? एवमत्रापि, येन त्रसवधनिवृत्तिः कृता स यदि तमेव त्रसं स्थावरकायस्थितं हन्ति तदा तस्य किं न भवेत् प्रतिज्ञालोपः? भवत्येवेत्यर्थः, त्रसकायान्मुच्यमानाः स्थावरकाये उत्पद्यन्ते स्थावरकायान्मुच्यमानास्तु त्रसकाये, न च किञ्चिल्लिङ्गमस्ति येन ज्ञायतेऽयं त्रसोऽभूत् पूर्वं स्थावरो वेति। 'तेसिं च णं' तेषां त्रसानां स्थावरकाये उत्पन्नानां श्राद्धस्यारम्भवतः 'स्थानमिदं' स्थावराख्य घात्यं स्यात् एवं नागरिकदृष्टान्तेन त्रसमेव घ्नतः प्रतिज्ञालोपः स्यात् ॥ ६ ॥ उदकः पुनः स्वाभिप्रायमाह—

एवंण्हं पच्चक्खताणं सुपच्चक्खायं भवइ, पच्चक्खावेमाणाणं सुपच्चक्खावियं भवइ (इत्यादि) भवियाइं आउसो गोयमा! तुब्भंपि एव रोयई (सू०)७

व्याख्या—एवं प्रत्याख्यानं कुर्वतां सुप्रत्याख्यानं भवति, एवं प्रत्याख्यापयन्तां च तदेव, एवं प्रत्याख्यानं कुर्वतां कारयतां च न स्वप्रतिज्ञालोपः। 'णण्णत्थे'त्यादि, एवं गृहस्थः प्रत्याख्याति-'त्रसभूतेषु' वर्त्तमानकाले त्रसत्वेनोत्पन्नेषु प्राणिषु 'दण्डं' वधं 'निहाय'त्यक्त्वा प्रत्याख्यानं करोति, तदिह भूतत्वविशेषणात् स्थावरपर्यायप्राप्तस्य वधेऽपि न प्रतिज्ञालोपः, नान्यत्राऽभियोगेन राजाद्यभियोगादन्यत्र प्रत्याख्यानं गृहपतिचौरविमोक्षणतयेति सम्यगुक्तं, तस्माद्भूतत्वविशेषणाङ्गीकारे

यथा क्षीरविकृतिप्रत्याख्यायिनो दधिभक्षणेऽपि न प्रतिज्ञाभङ्गः, तथा त्रसभूता न हंतव्या इति प्रतिज्ञावतः स्थावरहिंसायामपि न प्रत्याख्यानातिचारः, एवं विद्यमाने सति 'भाषायाः' प्रत्याख्यानवाचः पराक्रमे–भूतविशेषणाद्दोषपरिहारसामर्थ्ये एवं दोषपरिहारोपाये सति केचन क्रोधाद्वा लोभाद्वा श्रावकं निर्विशेषणमेव प्रत्याख्यापयन्ति तेषां मृषावादः स्यात्, गृह्णतां च व्रतलोपः । तदेवमयमपि नोऽस्मदीयोऽङ्गीकारः । किं भवतां नो 'नैयायिको' न्यायोपपन्नो भवति ? अपि च आयुष्मन् गौतम ! एष पक्षस्तुभ्यमपि रोचते ॥ ७ ॥

सवायं भगवं गोयमे उदय पेढालपुत्त एव वयासी (इत्यादि) तेसिं च णं तसकायसि उववन्नाणं ठाणमेयं अघत्तं (सू०) ॥ ८ ॥

व्याख्या—सवादं भगवान् गौतमस्तं उदकं पेढालपुत्रं एवमवादीत्–आयुष्मन् उदक ! नो खलु अस्मभ्यं एतद् रोचते, यदिदं त्रसकायविरतौ भूतत्वाविशेषणं तदऽस्मभ्यं न रोचत इत्यर्थः । एवं सति ये श्रमणा वा ब्राह्मणा वा एवं आख्यान्ति ते यथार्थां भाषां न भाषन्ते किन्तु अनुतापिनीं भाषां भाषन्ते, अन्यथा भाषणे हि परस्यानुतापो भवति, ते अभ्याख्यान्ति श्रमणोपासकान्, असद्भूतदोषप्रकटने नाभ्याख्यानं ददते 'जेहिं'ति येष्वपि अन्येषु जीवेषु ये 'संयमयन्ति' संयमं कुर्वन्ति, तद्यथा–'ब्राह्मणा मया न हन्तव्या' इत्युक्ते स यदा वर्णान्तरे तिर्यक्षु वा स्थितस्तद्वधे ब्राह्मणवध आपद्यते, भूतशब्दविशेषणाभावात् । एवं शूकरादिर्न हन्तव्य इत्यादि विशेषव्रतानि ते'ऽभ्याख्यान्ति' दूषयन्ति, कस्माद्धेतोः ? यस्मात्सांसारिका प्राणास्त्रसाः स्थावरत्वेन स्थावरास्त्रसत्वेन प्रत्यायान्ति, त्रसकायात्तदायुष्केन मुच्यमानाः स्थावरकाये, स्थावरकायाच्च तद्योग्यकर्मणा मुच्यमानास्त्रसकाये उत्पद्यन्ते, तेषां त्रसकाये समुत्पन्नानां स्थानमेतत्त्रसकायाख्यमघात्यं–अघातार्हं भवति, स्थूल-

प्राणिघातान्निवृत्तः श्राद्धस्तन्निवृत्त्या च त्रसस्थानमघात्यं स्यात्, तस्य तीव्राध्यवसायोत्पादकत्वाल्लोकगर्हितत्वाच्च स्थावरकायाच्चानिवृत्त इति तत् स्थानमस्य घात्यमिति ॥ ८ ॥ उदक आह—

सवायं उदए पेढालपुत्ते भगवं गोयमं एव वयासी अन्नहा (इत्यादि) अयंपि भेदो से नो नेआउए भवइ (सू० ) ॥ ९ ॥

व्याख्या—उदको गौतममवादीत्–हे आयुष्मन्! गौतम! कतरान् प्राणिनो यूय वदथ त्रसप्राणिन इति अथ सद्वाचं गौतम उदकमवादीत्–आयुष्मन् उदक! यान् प्राणिनो यूयं वदथ त्रसभूतान् त्रसत्वेन वर्तमाना नातीता नाप्येष्याः, तानेव वयं वदामस्त्रसा इति, ये(?)यान् वयं वदामस्त्रसांस्तान् यूयं वदथ त्रसभूतान् एते द्वे स्थाने तुल्ये एकार्थे एव, नात्र कश्चिदर्थभेदः, एव सति अयं युष्मदीयः पक्षः किं 'सुपनीततरो' युक्तियुक्तः? त्रसभूताः प्राणा इत्ययं तु पक्षो दुष्प्रणीततरोऽयुक्तः प्रतिभासते, कोऽयं व्यामोहो भवतां? येन शब्दभेदादिकं पक्षमाक्रोशथ द्वितीयं त्वभिनन्दथ, इत्ययं देशाङ्गीकारो भवतां नो नैयायिको न न्यायोपपन्नः उभयोरपि पक्षयोस्तुल्यत्वात् ॥ ९ ॥ कुमतनिषेधमाह—

भगवं च णं उदाहु–संतेगइया मणुस्सा भवति (इत्यादि) तपि तेसिं कुसलमेव भवइ (सू० ) ॥ १० ॥

व्याख्या—भगवान् गौतमः पुनराह–सन्ति 'एके' केचन मनुष्याः, येषां साधोर्धर्मकथकस्य पुर इदमुक्त भवति–यथा न खलु वयं 'मुण्डा भवितुं' प्रव्रज्यां ग्रहीतुं शक्नुमः, अगारादनगारितां प्रव्रजितुं, वयं 'आनुपूर्व्येण' क्रमेण क्रमेण 'गोत्रं' साधुत्वमऽनुश्लेषयिष्यामः। कोऽर्थः? वयं देशविरतिं पालयामः, ततः क्रमेण चारित्रं, तत (?) एवं ते 'सङ्ख्यां' व्यवस्थां श्रावयन्ति–प्रत्याख्यानं कुर्वन्तः प्रकाशयन्ति, ते एवं व्यवस्थां स्थापयन्ति सूपस्थापयन्ति च नान्यत्राभियोगेन, अभियोगो–

राजाभियोगादिस्तेन त्रसं घ्नतोऽपि न व्रतभङ्गः, तथा गृहपति–चौरविमोक्षणतयेति ।

अस्यार्थः कथागम्यः, सा चेयं–रत्नपुरे रत्नशेखरराज्ञा स्वान्तःपुरादिस्त्रीणां स्वैरक्रीडारूपः कौमुदीमहोत्सवोऽनुज्ञातः, पुरुषेण केनापि नगरमध्ये न स्थेयमित्याघोषणा कारिता, नृपादयः पुरुषाः सर्वेऽपि उद्याने सायं जग्मुः । एकस्य वणिजः षट् पुत्राः क्रयविक्रयादिव्यग्राः पुरमध्ये एव तस्थुः, स्थगितानि गोपुराणि, ततो निष्क्रान्ते महे राज्ञारक्षकाणामुक्तं–पश्यत नगरे कोऽपि नरोऽस्ति न वेति ! तैर्विलोकयद्भिः षट्पुत्रास्ते दृष्टा, राज्ञो निवेदिताः, राज्ञा कुपितेन षण्णामपि वधः समादिष्टस्ततस्तत्पिता शोकाकुलो राजानं विज्ञापयति स्म, देव ! मा कृथाः कुलक्षयमस्माकं, सर्वधनं गृह्यतां, मुच्यतां पुत्राः । एवमुक्तेऽपि राजा कथमपि न मुञ्चति पुत्रान्, ततः पिता सर्वपुत्रघातप्रवृत्त राजानं ज्ञात्वा पञ्चानां मोचनं याचितवान्, राजा पञ्चापि न मुञ्चति, ततश्चत्वारो याचिता तथाऽपि न मन्यते नृपस्ततस्त्रयो याचितास्तेऽपि न मुक्तास्ततो द्वौ मार्गितौ, तावपि अमुञ्चन्तं नृपमेकं पुत्रं याचितः, समग्रपौरजनविज्ञप्तो नृपः पुत्रमेकं ज्येष्ठं मुक्तवान् । अत्रेयं दृष्टान्तयोजना ।

सम्यक्त्ववान् श्राद्धः सर्वप्राणातिपातविरतिं कर्तुमशक्तो नृपस्थानीयषट्कायपितृतुल्येन साधुना प्रेरितोऽपि सर्वविरतिं नाङ्गीकुरुते, षडपि जीवकायान्मोचयति साधुः, श्राद्धस्तु षण्णां मोचनेऽशक्तो ज्येष्ठमेकं त्रसकाय मुञ्चति, पालयतीत्यर्थः साधुरेकमोचनेनाऽपि कृतार्थमात्मानं मन्यते । यथा च तस्य वणिजो न शेषपञ्चपुत्रवधानुज्ञा एवं साधोरपि न शेषप्राणिवधानुमतिः किन्तु यदेव व्रतं गृहीत्वा यानेव स्थूलसत्त्वान् सङ्कल्पवधनिवृत्तो रक्षति श्राद्धः, तन्निमित्तं कुशलानुबन्ध एवेत्याह– 'तसेहिं' त्रसेभ्यो 'दण्ड' हिंसां त्यक्त्वा यावद्विरमति तावत्तस्य कुशलं पुन्यमेवेति ॥ १० ॥

तसावि वुच्चंति तसा (इत्यादि) ते महाकाया ते चिरट्ठिइया (सू०) ॥ ११ ॥

व्याख्या—त्रसा अपि द्वीन्द्रियादयोऽपि त्रसा उच्यन्ते। त्रसास्त्रससम्भारकृतेन कर्मणा स्युः, सम्भारो नाम कर्मणोऽवश्य विपाकानुभवेन वेदनं, तच्च त्रसनाम प्रत्येकनाम इत्यादिकं त्रसत्वेन संबद्धं यदायुष्कं उदयप्राप्तं स्यात्तदा त्रसनामादिकर्मणा त्रसा उच्यन्ते, त्रसायुर्यदा क्षीणं स्यात्त्रसकायस्थितिश्च क्षीणा स्यात्, सा च जघन्येनान्तर्मुहूर्तः उत्कृष्टतः सातिरेकसहस्रद्वयसागरमानास्ततस्ते त्रसायुस्त्यजन्ति, अन्यान्यपि तत् सहचरकर्माणि त्यक्त्वा स्थावरत्वेन प्रत्यायान्ति, स्थावरा अपि तथैव कर्मणा स्थावरत्वेनोत्पद्यन्ते, एवं सति स्थावरकायं घ्नतः श्राद्धस्य कथं स्थूलप्राणातिपातनिवृत्तिव्रतभङ्ग ? इति। किञ्च 'थावर आउ'ति, यदा स्थावरायुष्कमपि क्षीणं स्यात्तथा स्थावरकायस्थितिश्च, सा जघन्येनान्तर्मुहूर्तम्, उत्कृष्टतोऽनन्तकालमसङ्ख्येयाः पुद्गलपरावर्ताः, ततस्ते स्वायुः परित्यज्य 'भूयते' पुनरपि परलोकतया स्थावरकायस्थितेरभावात्सामर्थ्यात्त्रसत्वेन प्रत्यायान्ति, ते त्रसाः प्राणा अप्युच्यन्ते त्रसा अप्युच्यन्ते महाकायास्ते योजनलक्षप्रमाणशरीरविकुर्वणात्। चिरस्थितिकास्ते भवस्थित्यपेक्षया त्रयस्त्रिंशत्सागारायुष्कभावात्। ततस्त्रसनिवृत्तिरेव श्राद्धेन कृता न तु स्थावराणां, नागरिकदृष्टान्तोऽप्ययुक्तः, नागरिको न हन्तव्य इति प्रतिज्ञां कृत्वा बहिःस्थितं तमेव पर्यायापन्नं घ्नतो व्रतभङ्ग इति त्वत्पक्षः, स चायुक्तो, यो हि नगरधर्मैरुपेतः स बहिःस्थोऽपि नागरिक एवातः पर्यायापन्न इति विशेषणमयुक्तं, सर्वथा नगरधर्मत्यागे तु तमेवेति नोपपद्यते, स चान्य एवेति। तथा त्रसत्वत्यागाद्यदा स्थावरत्वं प्राप्तस्तदाऽन्य एवायमिति, ततो न व्रतभङ्गः ॥ ११ ॥ पुनरुदकः प्राह—

सवायं उदए पेढालपुत्ते भयव गोयमं एवं वयासी (इत्यादि) तेसिं च णं थावरकायंसि उववण्णाणं ठाणमेयं घत्तं ( सू० ) ॥ १२ ॥

व्याख्या—सवादमुदको गौतममवादीत्–हे गौतम ! नास्ति स कश्चित् पर्यायो यस्मिन्नेकप्राणातिपातविरमणेऽपि श्रमणोपासकस्य 'दण्डो' वधो 'निक्षिप्तः' परित्यक्तः स्यात्। कोऽर्थः ? श्राद्धेन त्रसमुद्दिश्य प्रत्याख्यानं कृतं, संसारिणां चान्योन्यगमनसम्भवात्, त्रसाः सर्वेऽपि स्थावरत्वं प्राप्तास्तदा त्रसानामभावान्निर्विषयं प्रत्याख्यानमित्यर्थः 'कस्स णं'ति केन हेतुना इदमुच्यते ? सांसारिकाः खलु प्राणाः स्थावरास्त्रसतया त्रसा अपि स्थावरतया प्रत्याख्यान्ति, स्थावरकायाद्विप्रमुच्यमानाः स्वायुषा 'सर्वे' निरवशेषकास्त्रसकाये समुत्पद्यन्ते, त्रसकायादपि तदायुषा मुच्यमानाः सर्वे स्थावरकाये समुत्पद्यन्ते, तेषां त्रसानां स्थावरकायोत्पन्नानां स्थानमेतद्घात्यं, यथा केनचित् प्रतिज्ञातं मया नगरनिवासी न हन्तव्यः तच्च उद्वसितं नगर, ततो निर्विषयं प्रत्याख्यानं, एवमत्राऽपि त्रसानामभावान्निर्विषयत्वमिति ॥ १२ ॥

अथ गौतमः प्राह–सद्वाचं—

सवायं भगवं गोयमे उदयं पेढालपुत्त एवं वयासी ( इत्यादि ) अयपि भेदे से णो नेयाउए भवइ ( सू० ) ॥ १३ ॥

व्याख्या—सद्वाचं गौतम उदकमवादीत्, अस्माकमिति मगधदेशे सर्वजनप्रसिद्धं संस्कृतमेवोच्चार्यते तथैवात्र पठितं, तद्वचमस्माकं सम्बन्धिना वक्तव्येन नैतदशोभनं, किन्तर्हि ? युष्माकमेवाऽनुप्रवादेन एतदशोभनमिति, अस्मद्वक्तव्येनास्य चोद्यस्यानुत्थानमेव। तथाहि–नैतद्भूतं न च भवति नापि च भविष्यति यत्सर्वेऽपि स्थावरास्त्रसत्वं प्रतिपद्यन्ते स्थावराणामानंत्यात् त्रसाना चासङ्ख्येयत्वेन तदाधारत्वं न युक्तं, त्रसा अपि स्थावरत्वं न प्रतिपन्ना न च प्रतिपद्यन्ते नापि प्रतिपत्स्यन्ते, न च

कदाचित्त्रसशून्यः संसारः स्यादिति भवदाक्षेपो वृथैव अस्त्ययं पर्यायो यच्छ्रमणोपासकस्य सर्वप्राणिभिस्त्रसत्वेन भूतैरुत्पन्नैर्दण्डो निक्षिप्तो—वधस्त्यक्तः, केन हेतुनेत्याह—'संसारिया' इत्यादि, पूर्ववत्, यावत् त्रसकाये उत्पन्नानां स्थानमेतदघात्यं स्यात्। ते च त्रसाः प्राणा उच्यन्ते त्रसा अप्युच्यन्ते, ते महाकायाश्चिरस्थितिकाः, ते त्रसा बहवो, यैः श्राद्धस्य सुप्रत्याख्यात भवति, भवदभिप्रायेण सर्वस्थावराणां त्रसत्वेनोत्पत्तेः, तेऽल्पतरका यैः श्राद्धस्याप्रत्याख्यानं भवति, अल्पशब्दोऽभाववाचकः, न सन्त्येव त्वदभिप्रायेण ते जीवा येषु अप्रत्याख्यानमिति। एवं 'से' तस्य श्राद्धस्य महतस्त्रसकायाद् उपशान्तस्य विरतस्य सुप्रत्याख्यानं स्यादिति। एवं सति यद्यूय वदथ अन्यो वा वदति यन्नास्त्यसौ पर्याय इत्यादि सुगमं। यावन्नो नेयाऊए भवति ॥ १३ ॥ अथ त्रसानां स्थावरत्वं प्राप्ताना वधेऽपि न व्रतभङ्गः स्यादित्यत्र दृष्टान्तत्रयमाह—

भगवं च णं उदाहु नियंठा खलु पुच्छियव्वा (इत्यादि) से एवमायाणितव्वं ( सू० ) ॥ १४ ॥

व्याख्या—भगवान् गौतम 'उदाह' उक्तवान् निर्ग्रन्थाः पृष्टव्याः, निर्ग्रन्थानां सर्वेषामप्येतत्सम्मतमिति ज्ञापनाय निर्ग्रन्थप्रश्नः। किमुक्तवानित्याह—शान्तिप्रधाना इह केचिन्मनुष्याः स्युः, तेषा एवमुक्तपूर्वं भवति—अयं व्रतग्रहणविशेषः स्यात्। यथा—ये इमे मुण्डाभूत्वाऽगारान्निर्गत्यानगारितां प्रतिपन्नाः, एतेषामुपरि मया मरणान्तो दण्डो निक्षिप्तो—वधस्त्यक्तः, कोऽर्थः ? केनापि यतीनाश्रित्य व्रतं गृहीतं, यथा—यावज्जीवं मया यतयो न हन्तव्या इति, ये च इमे 'ऽगारं' गृहमावसन्ति तेषां दण्डो न त्यक्तः, गृहस्थानां हिंसा न प्रत्याख्याता इत्यर्थः। तत्र केचित् श्रमणाः कियन्तमपि कालं प्रव्रज्यां प्रतिपाल्य, कालमानमाह—'वासाणि' त्ति, वर्षाणि चत्वारि पञ्च वा षड् दश वा, अस्योपलक्षणादन्योऽपि कालविशेषो ज्ञेयस्तमेवाह—

अल्पतरं प्रभूततरं च कालं तथा 'देसं दूइज्जित्त'त्ति विहृत्य कर्मोदयाद्देहमात्रसेयुर्गृहस्था भवेयुः, एवम्भूतः पर्यायः किं सम्भाव्यते ? उत नेति प्रष्टा निर्ग्रन्था प्रत्यूचुः हन्त गृहवासं व्रजेयुः । 'तस्य च' यतित्वगृहीतव्रतस्य तं गृहस्थं घ्नतः किं व्रतभङ्गो भवेत् उत नेति ? ते आहुर्नेति, एवं श्राद्धस्य त्रसवधनिवृत्तस्य स्थावरत्वं प्राप्तं त्रसं घ्नतो न स्याद्व्रतभङ्गः ॥ १४ ॥

अथ द्वितीयं दृष्टान्तं प्रत्याख्यातृविषयगतं दर्शयन्नाह—

भगवं च णं उदाहु नियंठा 'खलु' पुच्छियव्वा (इत्यादि) से एवमायाणियव्वं (सू०) ॥ १५ ॥

व्याख्या—भगवान् गौतमः प्राह-निर्ग्रन्थाः प्रष्टव्याः, इह खलु गृहपतयो वा गृहपतिपुत्रा वा तथाप्रकारेषु श्रेष्ठकुलेषु उत्पद्य धर्मश्रवणार्थमागच्छेयुस्तेषां धर्म आख्यातव्यः ? इति पृष्टे श्रमणा आहुः-हंत आख्यातव्यः । किं ते तथाप्रकारं शुद्धं धर्मं श्रुत्वा एवं वदेयुः ? इदमेव निर्ग्रन्थमम्बन्धि प्रवचनं सत्यं यावत् सर्वदुःखप्रहीणमार्गः 'इत्थं'ति अत्र स्थिता जीवा सिद्ध्यन्ति यावत्सर्वदुःखानामन्तं कुर्वन्ति, तदाज्ञया तथा गच्छामस्तथा चेष्टामहे यावत् तथा 'उत्थया' प्रयत्नेन प्राणिनां 'सयमेन' हिंमानिवृत्त्या 'संयमामो' संयमं कुर्मो, यथा जिनाज्ञा, एवं ते वदेयुः ? इति पृष्टे श्रमणा आहुः-हंत वदेयुः । पुनः श्रमणान् पृच्छति-किं ते तादृशयोग्याः कल्पन्ते प्रव्राजयितुं ? श्रमणा आहु-र्हन्त कल्पन्ते इत्यादि । 'तेसिं च णं' तैस्तथाविधैः सर्वजीवेभ्यो दण्डस्त्यक्तः. एवंविधास्ते विहरन्तो वर्षाणि चत्वारि पञ्च वा षड् दश वा अल्पतरं बहुतरं वा कालं देशग्रामादावुद्यतविहारेण विहृत्य पश्चात्पतितपरिणामास्मन्तोऽगारं व्रजेयुः । गृहस्था भवेयुरित्यर्थः । निर्ग्रन्था पृष्टोत्तरमाहुः-हन्त व्रजेयुः तेषां सर्वप्राणिभ्यो दण्डो नो निक्षिप्तः, तेषामवस्थात्रयमाह-पूर्वं गृहस्थत्वे सर्वजन्तुवधो न त्यक्तः,

अथ यः स साधुत्वे सर्वजन्तुवधस्तेन त्यक्तः, पुनः साधुत्वं मुक्त्वेदानीं गृहस्थे जाते सर्वजन्तुवधो न त्यक्तः, पूर्वमसंयत १, आरतः संयतः २, इदानीमसंयतः ३, असंयतस्य सर्वजन्तुवधो न त्यक्तः, तदेवं जानीत निर्ग्रन्थास्तदेवमाज्ञातव्यं। एवं यथाऽवस्थात्रयेऽप्यन्यथात्वं स्यात् एवं त्रसस्थावरयोरपि ज्ञेयम् ॥ १५ ॥

अथ तृतीयं दृष्टान्तं परतीर्थिकानुद्दिश्याह—

भगवं च ण उदाहु नियंठा खलु पुच्छियव्वा (इत्यादि) से एवमायाणियव्वं (सू०) ॥ १६ ॥

व्याख्या—सुगमार्थमिदं सूत्रम्। तात्पर्यार्थस्तु अयम्, पूर्वं परिव्राजकादयः सन्तोऽसम्भोग्या साधूनां, गृहीतश्रामण्याश्च साधूनां सम्भोग्याः पुनः श्रामण्यत्यागेऽसम्भोग्याः, एवं पर्यायान्यथात्वं त्रसस्थावराणामपि योज्यं ॥१६॥ एवं दृष्टान्तत्रयेण निर्दोषां देशविरतिं प्रसाध्य पुनरपि तद्गतमेव विचारमाह—

भयव च णं उदाहु संतेगइया समणोवासगा भवंति (इत्यादि) जाव अयपि भेदे से नो नेयाउए भवइ (सू०) ॥ १७ ॥

व्याख्या—भगवान् गौतम उदकं प्रत्याह-शान्तिप्रधाना एके श्रमणोपासका भवन्ति, तेषां च इदमुक्तपूर्वं भवति, यथा-न खलु वयं शक्नुमः प्रव्रज्यां गृहीतुं, किन्तु वयं चतुर्दश्यष्टम्यादिषु तिथिषु सम्पूर्णं पौषधं सम्यगनुपालयन्तो विहरिष्यामः। तथा स्थूलप्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहं प्रत्याख्यास्यामो द्विविधं कृतकारितभेदात्, श्राद्धस्य अनुमतेरनिषिद्धत्वात्। 'त्रिविधेन' मनोवचनकायैः 'मा' निषेधे, पौषधस्थस्य मम कृते किञ्चित् पचनपाचनादिकं मा कार्ष्ट परेण मा कारयत, सर्वथाऽसम्भविनो वस्तुनोऽनुमतेरपि निषेधस्तत्रापि प्रत्याख्यास्यामः। ते श्रावका अभुक्त्वाऽपीत्वा-

ऽस्नात्वा च पौषधयुक्तत्वादासन्दीपीठिकातः प्रत्यारुह्याऽवतीर्य सम्यक् पौषधं कृत्वा कालं कृतवन्तस्ते किं सम्यक्कृतकाला
उतासम्यक्? एवं पृष्टैर्निर्ग्रन्थैरवश्यमेवं वक्तव्यं-ते सम्यक्कालगताः, एव कालगतानामवश्यं भावी देवलोकोत्पादस्तत्रो-
त्पन्नाश्च ते त्रसा एव ततश्च कथं निर्विषयता प्रत्याख्यानस्येति ॥ १७ ॥ पुनः श्राद्धोद्देशेन प्रत्याख्यानविषयं दर्शयति—
भगवं च णं उदाहु संतेगइआ समणोवासगा भवति, (इत्यादि) जाव अयपि मेदे से णो णेयाउए भवइ (सू० ) ॥ १८ )
व्याख्या—गौतमः प्राह—'सन्ति' विद्यन्ते 'एके' केचन श्रमणोपासकास्तेषामेतदुक्तपूर्वं भवति, यथा न शक्नुमो वयं
प्रव्रज्यां ग्रहीतुं नापि चतुर्दश्यादिषु सम्यक् पौषधं पालयितुं, वयं चापश्चिमया संलेखनक्षपणया क्षपितकायाः, यदि वा 'संले-
खनजोषणया' सेवनया 'जोषिताः' सेविता, उत्तमार्थगुणैरेवम्भूताः सन्तो भक्तपानं प्रत्याख्याय 'कालं' दीर्घकालमनवकाङ्क्ष-
माणा विहरिष्यामः। कोऽर्थः? न खलु वयं दीर्घकालव्रतं पालयितुं समर्थाः, किन्तु वयं सर्वमपि प्राणातिपातादिकं प्रत्या-
ख्याय संलेखनया संलिखितकायाश्चतुर्विधाहारत्यागेन जीवितव्यं कुसमर्थाः। इति सूत्रेणैवाह—'सव्वं पाणाइवाय'मित्यादि,
यावत्ते तथाकालगताः, किं वक्तव्यमेतत्स्यात्? सम्यक् ते कालगता इति पृष्टा निर्ग्रन्था आहुर्यथा ते सन्मनसः शोभनचित्ताः
कालगता इति। ते कालं कृत्वा सुरलोकेषूत्पद्यन्ते, तत्र चोत्पन्ना यद्यपि हन्तुं न शक्यन्ते तथापि त्रसत्वात्ते श्राद्धस्य त्रसवध-
निवृत्तिप्रत्याख्यानस्य विषयाः स्युः ॥ १८ ॥

पुनः प्रत्याख्यानविषयमाह—

भगवं च ण उदाहु संतेगइया मणुस्सा भवंति तं जहा (इत्यादि) मेदे से णो णेयाउए भवइ (सू० ) ॥ १९ ॥

व्याख्या—भगवानाह एके केचन मनुष्या एवम्भूता भवन्ति तद्यथा—महारम्भा महापरिग्रहा इत्यादि सुगमं—यावद्यैरादानं प्रथमव्रतग्रहणं, तत आरभ्य मरणान्तं यावद्दंडो निक्षिप्तस्त्यक्तः ते च तस्माद्भवात् स्वायुषं जहति, त्यक्त्वात्र सजीवितं स्वकं पापमादाय—गृहीत्वा दुर्गतिगामिनः स्युः, महारम्भपरिग्रहत्वात्ते मृता नरके नारकत्रसत्वेनोत्पन्नाः सामान्येन प्राणिन उच्यन्ते, विशेषतस्तु त्रसा महाकाया इत्यादि पूर्ववत् ॥ १९ ॥

पुनः प्रत्याख्यानविषयं दर्शयति—

भगवं च ण उदाहु संतेगइया मणुस्सा भवंति, तं जहा (इत्यादि) जाव णो णेयाउए भवइ ( सू० ) ॥ २० ॥

व्याख्या—पूर्वोक्तेभ्यो महारम्भादिभ्यो विपरीताः सुशीलाः साधवः, एते च सामान्यश्रावकास्तेऽपि त्रसेष्वेव देवेषूत्पद्यन्ते, ततोऽपि न निर्विषयं प्रत्याख्यानम् ॥ २० ॥ किञ्च—

भगवं च ण उदाहु संतेगइया मणुस्सा भवंति तं जहा (इत्यादि) जाव नो नेयाउए भवइ ( सू० ) ॥ २१ ॥

व्याख्या—सुगममिदं सूत्रम्। एते चाल्पेच्छादिविशेषणा अवश्यं प्रकृतिभद्रतया सद्गतिगामित्वेन त्रसेषूत्पद्यन्ते ॥ २१ ॥ किञ्चान्यत्—

भगवं च णं उदाहु संतेगइया मणुस्सा भवंति तं जहा (इत्यादि) जाव नो नेयाउए भवइ ( सू० ) ॥ २२ ॥

व्याख्या—एके मनुष्या एवम्भूताः स्युः 'आरण्यिका' अरण्यवासिनः, आवासथिका ग्रामनिमन्त्रिकाः 'केण्हुइ रहस्सिया' क्वचित्कार्ये रहस्यकाः, एते सर्वेऽपि तीर्थिकविशेषाः, ते च नो बहुसंयताः क्रियासु, नो बहु प्रतिविरताः सर्व

जन्तुवधान्न निवृत्ताः, सत्यामृषाणि वाक्यानि परेषु एव वक्ष्यमाणप्रकारेण प्रयुञ्जन्ति 'एवं विप्पडिवेदेंति' क्वचित् पाठः, एवंविध-प्रकारेण प्रतिवेदयन्ति-ज्ञापयन्ति, यथा-अहं न हन्तव्योऽन्ये हन्तव्या, अहं नाज्ञापयितव्योऽन्य आज्ञापयितव्या इत्यादीन्युपदेशवाक्यानि ददति । एवम्भूतास्ते कामासक्ताः किञ्चिदज्ञानतपःपराः कालं कृत्वाऽन्यतरेष्वसुरीयेषु स्थानेषु किल्बिषिकेषु असुरदेवाधमेषु उत्पद्यन्ते, अथवा प्राण्युपघातकोपदेशदातारो भोगमूर्च्छिता 'असूर्येषु' नित्यान्धकारेषु किल्बिषप्रधानेषु नरकस्थानेषु समुत्पद्यन्ते ते च देवा नारका वा त्रसत्वं न व्यभिचरन्ति, तेषु च यद्यपि द्रव्यप्राणातिपातो न सम्भवति तथापि भावप्राणातिपातस्य विरतेर्विषयतां प्रतिपद्यन्ते । ततो देवलोकाच्च्युता नारकादुद्वृत्ता वा क्लिष्टपञ्चेन्द्रिय-तिर्यक्षु हीनमनुष्येषु वा एडमूकतया तमोरूपतया अन्धबधिरतया प्रत्यायान्ति, ते चाऽवस्थाद्वयेऽपि त्रसत्वं न व्यभिचरन्ति, ततो न निर्विषयं प्रत्याख्यानं, एषु च द्रव्यप्राणातिपातोऽपि सम्भवति ॥ २२ ॥ अथ प्रकटमेव विरतिविषयमाह—

भगवं च णं उदाहु संतेगइया पाणा दीहाउया, (इत्यादि) जाव नो नेयाउए भवइ (सू०) ॥ २३ ॥

व्याख्या—भगवानाह-यो हि प्रत्याख्यानं गृह्णाति तस्मात् दीर्घायुष्काः प्राणिनस्ते च नारकमनुष्यदेवा द्वित्रिचतुष्पञ्चेन्द्रियास्तिर्यञ्चश्च सम्भवन्ति; ततः कथं निर्विषयं प्रत्याख्यानमिति । शेषं सुगमम् ॥ २३ ॥

भगव च ण उदाहु संतेगइया पाणा समाउया, (इत्यादि) जाव नो नेयाउए भवइ (सू०) ॥ २४ ॥

व्याख्या—इदं समायुष्कसूत्रं पूर्ववत् ॥ २४ ॥

भगवं च णं उदाहु संतेगइया पाणा अप्पाउया (इत्यादि) जाव नो नेयाउए (सू०) ॥ २५ ॥

व्याख्या—इदमल्पायुष्कसूत्रमपि स्पष्टं । नायं यावत्ते न म्रियन्ते तावत् प्रत्याख्यानस्य विषयः, त्रसेषु वा समुत्पन्नाः संतो विषयतां प्रतिपद्यन्ते ॥ २५ ॥

पुनः श्रावकाणां दिग्व्रताश्रयेण प्रत्याख्यानविषयं दर्शयति ।

भगवं च णं उदाहु संतेगइया समणोवासगा भवंति, (इत्यादि) जाव अयंपि भेदे से० ( सू० ) ॥ १ ॥ २६ ॥

व्याख्या—सुगमं, नवरं-'देसावगासियं'ति पूर्वगृहीतस्य दिग्व्रतस्य योजनशतादिकस्य यत्प्रतिदिनं सङ्क्षिप्तं योजनगतव्रतादिमानं करोति, तद्देशावकाशिकमुच्यते, तथाहि-'पुरत्थापाईणं'मिति, 'पुरत्थ'त्ति प्रातरेव प्रत्याख्यानावसरे दिगाश्रितमेवम्भूतं प्रत्याख्यानं करोति, यथा-'प्राचीनं' पूर्वाभिमुखं पूर्वदिशि एतावन्मयाऽद्य गन्तव्यं 'प्रतीचीनं' पश्चिमायां दिशि दक्षिणस्यां 'उदीच्यां' उत्तरस्यां एतावद् गन्तव्य, एवं प्रत्यहं प्रत्याख्यानं करोति, तेन च व्रतेन गृहीतपरिमाणात् परेण दण्डो निक्षिप्तो-परित्यक्तः, ततश्च स श्रावकः सर्वजीवेषु क्षेमङ्करोऽहमस्मीत्यध्यवसायी स्यात्, तत्र गृहीतपरिमाणे देशे ये आरेण त्रसाः तेषु श्रावकस्यादानतः प्रथमव्रतादारभ्यामरणान्तं दण्डस्त्यक्तः, ते त्रसाः स्वायुष्कं परित्यज्य तत्रैव गृहीतमानदेशे एव त्रसत्वेन प्रत्यायान्ति, गृहीतपरिमाणदेशे त्रसायुष्कं परित्यज्य त्रसेष्वेवोत्पद्यन्ते, तेषु श्राद्धस्य सुप्रत्याख्यानं स्यादुभयथापि त्रसत्वसद्भावादिति । शेषं सुगमम् ॥ २६ ॥

तत्थ आरेणं जे तसा पाणा (इत्यादि) जाव अयंपि भेदे से णो० ( सू० ) ॥ २ ॥ २७ ॥

व्याख्या—अत्र आराद्देशवर्तिनस्त्रसा आराद्देशवर्तिषु स्थावरेषु उत्पद्यन्ते ॥ २७ ॥

तत्थ जे आरेणं तसा पाणा (इत्यादि) (सू० ) ॥ ३ ॥ २८ ॥

व्याख्या—अत्र आराद्देशर्तिनस्त्रसा गृहीतपरिमाणाद्देशाद् बहिर्ये त्रसा स्थावराश्च तेषूत्पद्यन्ते ॥ २८ ॥

तत्थ जे आरेण थावरा पाणा (इत्यादि) अयपि भेदे से णो० (सू० ) ॥ ४ ॥ २९ ॥

व्याख्या—आराद्देशवर्त्तिनो ये स्थावरास्ते आराद्देशवर्त्तिनो ये त्रसास्तेषूत्पद्यन्ते ॥ २९ ॥

तत्थ जे ते आरेण जे थावरा पाणा (इत्यादि) अयपि भेदे से णो० (सू० ) ॥ ५ ॥ ३० ॥

व्याख्या—आराद्देशवर्त्तिनो ये स्थावरास्ते तेषु तद्देशवर्त्तिष्वेव स्थावरेषूत्पद्यन्ते ॥ ३० ॥

तत्थ जे ते आरेण थावरा पाणा (इत्यादि) जाव अयपि भेदे से णो० (सू० ) ॥ ६ ॥ ३१ ॥

व्याख्या—परदे( ? आरादे )शवर्तिनो ये स्थावरास्ते गृहीतपरिमाणस्थे (परदेशवर्ति )षु त्रसस्थावरेषूत्पद्यन्ते ॥ ३१ ॥

तत्थ जे ते परेण तसा थावरा पाणा (इत्यादि) जाव अयंपि भेदे से णो णेयाउए भवइ (सू० ) ॥ ७ ॥ ३२ ॥

व्याख्या—परदेशवर्त्तिनो ये त्रसाः स्थावरास्ते आराद्देशवर्त्तिषु त्रसेषूत्पद्यन्ते ॥ ३२ ॥

तत्थ जे ते परेण तसा थावरा पाणा (इत्यादि) जाव अयंपि भेदे से णो० (सू० ) ॥ ८ ॥ ३३ ॥

व्याख्या—परदेशवर्त्तिनो ये त्रसाः स्थावराः प्राणास्ते आराद्देशवर्त्तिषु स्थावरेषूत्पद्यन्ते ॥ ३३ ॥

तत्थ जे ते परेण तसा थावरा पाणा (इत्यादि) जाव अयंपि भेदे से नो नेयाउए भवइ (सू० ) ॥ ९ ॥ ३४ ॥

व्याख्या—परदेशवर्त्तिनो ये त्रसाः स्थावरास्ते परदेशवर्त्तिष्वेव त्रसस्थावरेषूत्पद्यन्ते । एवं नवापि सूत्राणि भणितानि,

तत्र यत्र त्रसास्तत्रादानशः प्रथमव्रतग्रहणादारभ्य श्रावकेणामरणान्तो दण्डः परित्यक्त इति योज्यं, यत्र तु स्थावरास्तत्रार्थाय दण्डो न निक्षिप्तो—न त्यक्तः, अनर्थाय च दण्डः परित्यक्त इति। शेषं सुगमम् ॥ ३४ ॥ तदेवं बहुदृष्टान्तैः श्रावकप्रत्याख्यानस्य सविषयतां प्रसाध्याधुना परप्रश्नस्यात्यन्तासम्बद्धतां दर्शयन्नाह—

भगव च णं उदाहु न एयं भूय न एय भव न एय भविस्संति (इत्यादि) जाव नो नेयाउए भवई (सू०) ॥ ३५ ॥

व्याख्या—गौतमस्वामी उदकं प्राह—नैतद् भूतं नैतद् भाव्यं नैतद् भविष्यं यत् त्रसाः सर्वथा उच्छेत्स्यन्ति स्थावरा एव भविष्यन्ति, तथा स्थावरा उच्छेत्स्यन्ति त्रसा एव भविष्यन्ति, एतद्द्वयं न सम्भवति, नहि कदाप्येवं सम्भवोऽस्ति यत् प्रत्याख्यानिनमेकं विहायान्येषां नारकाणां द्वीन्द्रियादितिरश्चां मनुष्याणां देवानां च सर्वथाप्यभावः। एवं हि त्रसप्रत्याख्यान निर्विषयं स्याद्यदि प्रत्याख्यानिनो जीवत एव नारकाद्यास्त्रसाः समुच्छिद्यन्ते, न चायं प्रकारः सम्भवी, स्थावराणां चाऽनन्तत्वान्नासङ्ख्येयेषु त्रसेषूत्पादसम्भवः, एवं सति यद् वदत यूयमन्यो वा वदति, तद्यथा नास्त्यऽसौ पर्यायो यत् श्रावकस्यैकत्रसविषयो दण्डत्याग इति, तदेवं त्वदीयं प्रेर्यं सर्वमशोभनमिति ॥ ३५ ॥

अथोपसंहारमाह—

भगव च ण उदाहु आउसंतो उदगा! जे खलु समणं वा माहणं वा परिभासेइ (इत्यादि) दिसिं पहारेत्थ गमणाए (सू०) ॥ ३६ ॥

व्याख्या—गौतमस्वाम्याह—आयुष्मन् उदक! जे खलु 'श्रमण' यथोक्तक्रियाकारिणं 'माहनं वा' सद्ब्रह्मचर्योपेतं 'परिभाषते' मैत्रीं मन्यमानोऽपि निन्दति। सम्यग् ज्ञानं दर्शनं चारित्रं च 'आगम्य' प्राप्य पापानां कर्मणामकरणाय

भर्त्सितकलिकालुष्याः, शिष्यास्तेषां यथार्थनामानः । श्रीसुमतिसाधुगुरवो लक्ष्मीसुरभीकारगमशोगुरवः ॥ ७ ॥
तत्पट्टे प्रवादेप्सित-पूरणचिन्तामणीयमानानाम् । लब्धाधिकमानानां, सुहेमविमलाभिधानानाम् ॥ ८ ॥
सूरीन्द्रगच्छनायक-पदवीप्राप्तप्रभाप्रतिष्ठानाम् । शिष्याणुर्गुणशासन-जननीतिथि सम्मिते ( १५८३ ) वर्षे ॥ ९ ॥
विबुधविनूर्पुर्ये चष्या(?)× स्वस्य स्मृतये परोपकृतये च । सूत्रकृताङ्गस्यैतां, हर्षकुलो दीपिकामलिखत् ॥ १० ॥
काश्चित्प्रमाणयुक्ती-रग्रथय नात्र सुगमताहेतोः । तत एव नैव विहितो, लक्षणमन्भिरतथा क्वापि ॥ ११ ॥
सूत्रासङ्गतमत्रा-वादि कथञ्चिन्मया यदज्ञतया । तच्छोधयन्तु सुधियः, कृपया मात्सर्यमुत्सार्य ॥ १२ ॥
ग्रन्थमितिरनुमिताऽत्र च, सप्तसहस्राणि किञ्चिदूनानि । विबुधजनवाच्यमानोऽयं, ग्रन्थोऽयं जगति जयतु चिरम् ॥ १३ ॥



× " विबुधनामकशिष्यः " इति मुद्रितायाम् ।

उत्थितः स खलु तुच्छप्रकृतिः पण्डितंमन्यः 'परलोकस्य' सद्गतेः 'पलिमन्थाय' विघाताय तिष्ठति । यः पुनर्महासत्त्वः सागरवद्गम्भीरः श्रमणादीन 'परिभाषते' न निन्दति, तेषु च परमां मैत्रीं मन्यते सम्यग् ज्ञानादीन्यनुगम्य पापकर्मणा सकरणायोत्थितः स खलु परलोकविशुद्ध्या तिष्ठति, अनेन वाक्येन परनिन्दावर्जनाद्यथास्थितार्थकथनेन श्रीगौतमः स्वौद्धत्यं परिहरति स्म, एवं श्रीगौतमेन यथास्थितार्थज्ञापितोऽप्युदको यदा गौतममनाद्रियमाणो यस्या एव दिशः प्रादुर्भूतस्तामेव दिशं गमनाय प्रधारितवान्–चिंतितवान् ॥ ३६ ॥ तदा गौतमः प्राह—

भगव च णं उदाहु आउसंतो उदगा ! (इत्यादि) जाव कल्लाण मंगल देवयं चेइयं पज्जुवासइ (सू० ) ॥ ३७ ॥

व्याख्या—भगवान् गौतम आह–हे आयुष्मन् उदक ! यः खलु तथाभूतस्य श्रमणस्य ब्राह्मणस्य वा 'अन्तिके' समीपे एकमप्यार्यं धार्मिकं सुवचनं श्रुत्वा निशम्याऽवधार्य आत्मन एव तदनुत्तर योगक्षेमपदमित्यवगम्य सूक्ष्मया बुद्ध्या प्रत्युपेक्ष्य-विचार्य अहमनेन योगक्षेमपदमनुत्तर 'लम्भितः' प्रापितः सन् सोऽपि तावल्लौकिकोऽपि तमुपदेशदातारमाद्रियते–पूज्योऽय मिति जानाति कल्याणं मङ्गलं दैवतं चैत्यमिव पर्युपास्ते, प्राकृतजनोऽपि चेद्धितोपदेशदातार पूजयति तदा किं पुनर्वाच्य मनुत्तरधर्मोपदेशकपूजायां विवेकिजनस्येति भावः ॥ ३७ ॥

तए णं से उदए पेढालपुत्ते भगव गोयमं एव वयासी (इत्यादि) एवमेव जहा ण तुब्भे वयह (सू० ) ॥ ३८ ॥

व्याख्या—उदको गौतमस्वामिनमाह, यथा–एतेषां पदाना पूर्वमज्ञाततयाऽश्रवणतया अनाकर्णनेन 'अबोध्या' श्रवणेऽप्यनवबोधात् 'अभिगमेन' बोधेऽपि सम्यगप्रतिपत्त्याऽदृष्टानामश्रुतानामविज्ञातानां 'अनिसृष्टानां' गुरुणाऽदत्तानां